इच्छायै तदधीशायै शक्तये नमसा पुनः ।
शिवतत्वमयीं ध्यात्वा मूर्तिमूर्तीशसंयुताम् ॥ १४९

रुद्रभागविशुद्ध्यर्थं मूलेनाग्नेश्च पूर्ववत् ।
''सर्वतत्वमये देवि सर्वशक्तिस्वरूपिणि ॥ १५०

समस्तभुवनाधीशे पाहि नः परमेश्वरि ।''
हुत्वेति तां च संप्रार्थ्य समागत्याम्बिकां पुनः ॥ १५१

शान्तिकुम्भाम्भसा प्रोक्ष्य व्याहृतीभिः सतारकम् ।
शिरः स्पृष्ट्वा कुशाग्रेण होमसंख्याजपं चरेत् ॥ १५२

पुनः प्रोक्ष्य तदम्भोभिर्व्याहृत्या बीजयुक्तया ।
तन्मध्यं (मध्यान्तं)मध्यतः स्पृष्ट्वा होमसंख्याजपं चरेत् ॥

पुनः प्रोक्ष्य तदम्भोभिः कुशमूलेन तत्पदम् ।
स्पृष्ट्वा तु पूर्ववज्जप्त्वा देशिकश्शुद्धमानसः ॥ १५४

त्रिभागं कल्पयित्वादौ पिण्डिकामपि देशिकः ।
अधोभागादि संपूज्य ब्रह्मविष्णुमहेश्वरान् ॥ १५५

तत्वतत्वेश्वरीं यष्ट्वा मूर्तिमूर्तीश्वरीमपि ।
तन्मूलबीजमाख्यातं मायाऽऽहुत्यां समर्चने ॥ १५६

पूर्वोक्तेनैव मार्गेण शोधयेत्पिण्डिकामपि ।
प्रायश्चित्तं तु मूलेन शतमष्टोत्तरं हुनेत् ॥ १५७

यत्कृतं कर्म तत्सर्वं देव्याः श्रोत्रे निवेदयेत् ।
पिण्डिकायां क्रियाशक्तिमाधारे(आ)धारशक्तिकाम् ॥ १५८

बिम्बे देवीं समभ्यर्च्य निवेद्य च महाहविः ।
बाह्यान्तश्च बलिं दत्वा वाससाऽऽवरणं क्रमात्(ण क्रियाम्) ॥

अग्निं संरक्ष्य यत्नेन नृत्तगीतादिभिस्सह ।
रात्रौ जागरणं कुर्याद्वेदपारायणादिभिः ॥ १६०

ततः प्रभाते सुस्नातः कृतपूर्वाह्निको गुरुः ।
पूर्ववद्यागशालायां द्वारपालादिपूजनम् ॥ १६१

कुम्भार्चनान्तं कृत्वा तु गणेशमभिपूज्य च ।
देव्यास्समीपमागत्य उत्तिष्ठेति प्रबोधयेत् ॥ १६२

अर्घ्यं दत्वा ततो देव्यास्समभ्यर्च्य विधानतः ।
प्रतिमां मूलमन्त्रेण गन्धपुष्पादिभिर्यजेत् ॥ १६३

शिलामाधारमन्त्रेण मायाबीजेन पिण्डिकाम् ।
अथाग्निं सम्यगभ्यर्च्य मेखलासु च दिक्पतीन् ॥ १६४

संस्कृत्य स्रुक्स्रुवौ चाज्यं कृत्वा स्विष्टकृतं ततः ।
प्रायश्चित्तमथो हुत्वा ध्यात्वाऽग्निं हृदयेऽम्बिकाम् ॥ १६५

अभ्यर्च्य गन्धपुष्पाद्यैस्ततः पूर्णाहुतिं चरेत् ।
कुर्यात्सम्पूर्णतोऽभ्यक्तां फलेन चरुणा सह ॥ १६६

निवेद्य च बलिं दत्वा लब्धानुज्ञस्तथा पुनः ।
विघ्नानुत्साट्य चास्त्रेण प्रासादं संप्रविश्य च ॥ १६७

मानुषे दैविके चापि किञ्चिदीशानसंयुतम् ।
आधारशक्तिमन्त्रेण सुदृढां तां निवेशयेत् ॥ १६८

आधारशक्तयेत्युक्त्वा स्यूंपूर्वं नमसा युतम् ।
ताराद्यन्तु समुद्धृत्य ओं नमो व्यापिनि स्थिरे ॥ १६९

अचलेति(च) वदेत्पश्चाच्छूलं भी(ह्री)लं ततो वदेत् ।
हि(ह्री)लं स्वाहेति मन्त्रोऽयं आधाराख्यः प्रकीर्तितः ॥

सृष्टिमार्गेण तान्यष्ट्वा पिण्डिकेति ततः परम् ।
स्यूरूं क्रियाशक्तयेत्युक्त्वा तारादिनमसा युतम् ॥ १७१

इति विन्यस्य संपूज्य गन्धपुष्पाक्षतादिभिः ।
नवरत्नानि बीजानि दिक्षु मध्ये निधाय च ॥ १७२

इन्द्रादिमन्त्रैरभ्यर्च्य स्वस्वनामभिरेव वा ।
सम्पूज्य मूलमन्त्रेण क्रमशस्तानि निक्षिपेत् ॥ १७३

तनो देव्यासनायेति स्यूरूं(स्यूं) क्रियाशक्तये नमः ।
पीठेऽभ्यर्च्य ततो मूर्तौ देवीमूर्त्यै नमस्तथा ॥ १७४

ज्ञानशक्त्यै नमश्चेति ताराद्यैः पूर्वमर्चयेत् ।
तद्व्यापिकां पराशक्तिमावाह्य स्थाप्य मूलतः ॥ १७५

उक्त्वा नाम च तत्कर्णे तन्नामैव तदादितः ।
आधारं कन्दनालं च धर्माद्यष्टौ च पूजयेत् ॥ १७६

अधोर्ध्वं छदनं पश्चात्केसराणि च कर्णिकाम् ।
पुष्करं चैव सम्पूज्य शक्त्यष्टकमपीन्द्रतः ॥ १७७

बहिर्ज्ञाना क्रिया बाणो वागीशा ज्वालिनी तथा ।
वामा ज्येष्ठा च रौद्री च तारा माया स्वनामभिः ॥ १७८

पूज्या देव्यासनायेति देवीमूर्त्यै नमस्तथा ।
मूर्ध्नीशाना मुखे विद्या हृदये तृप्तिरेव च ॥ १७९

शुद्धा गळे दक्षबाह्यौ जरा मेधा तथेतरे ।
कुक्षौ स्वधा स्वस्ति नाभौ वामजानौ तु(कट्योश्चैव च) पालिनी ॥

गुह्ये दक्षोरुके ज्वाला तृष्णा वामोरुमूलके ।
भ्रान्तिस्स्याद्दक्षजानौ तु रमा स्याद्वामजानुनि ॥ १८१

रतिः पृष्ठे दक्षपार्श्वे प्रजा वामे च शान्तिका ।
दक्षपार्श्वे(जङ्घे) भवेद्भूतिः क्रियाशक्तिश्च वामके ॥ १८२

दक्षपादे न्यसेत्क्षान्तिं वामे शान्तिं तु विन्यसेत् ।
दक्षहस्ते न्यसेद्धात्रीं वामहस्ते दयां न्यसेत् ॥ १८३

दक्षस्तने न्यसेत्स्यू(सू)तिं सवित्रीं वामके न्यसेत् ।
भवित्रीं नासिकायां च सिद्धां शिरसि विन्यसेत् ॥१८४

सर्वासामेव शक्तीनां श्रीकण्ठादिर्वरो मतः ।
विशेषादङ्गशक्तीनां श्रीकण्ठादिश्च चोदितः ॥ १८५

तत्तन्मन्त्राक्षरन्यासस्तासां यस्तत्र तत्र च ।
न्यासस्तु त्रिपुराम्बायाः पश्चादत्र तु वक्ष्यते ॥ १८६

अग्रतः कुम्भमास्थाय देशिकः शुद्धचेतनः ।
साङ्गं संपूजयेद्देवीं गन्धपुष्पोपहारकैः ॥ १८७

वर्धनीकुम्भमुद्धृत्य देवीसूक्तं परं जपन् ।
वशिन्याद्यैस्तथा कुम्भैः मूलमन्त्रं जपन् हृदि ॥ १८८

सुमुहूर्ते सुलग्ने च सर्वातोद्यसमन्वितम् ।
बहुभिः ब्राह्मणैस्सार्धं यथार्हमभिषेचयेत् ॥ १८९

अलङ्कृत्य विधानेन कृत्वा नीराजनादिकम् ।
उपस्थानं तु कुर्वीत मन्त्रैरेतैः श्रुतीरितैः ॥ १९०

आत्वाहारिषमित्यृग्भिः ध्रुवासीत्यनया ऋचा ।
दशभारं समारभ्य शतभारावसानकम् ॥ १९१

महानिवेदनं प्रोक्तं तन्न्यूनं न समाचरेत् ।
ताम्बूलं च ततो दत्वा नमस्कृत्य च दण्डवत् ॥ १९२

ततोऽग्निं पुनराधाय पूर्वोक्तेनैव वर्त्मना ।
अङ्गादिभङ्ग(भाग)वैकल्यशान्तये तु सहस्रकम् ॥ १९३

हुत्वोपस्थाय देव्यास्तु पायसान्नं निवेदयेत् ।
सितापूपादिभिस्सार्धं प्राज्याज्यकदलीफलैः ॥ १९४

पनसैर्नारिकेलैश्च पक्वैश्च कदलीफलैः ।
नानाभक्ष्यसमायुक्तं नानाविधरसायनैः ॥ १९५

कर्पूरशकलैर्मिश्रं ताम्बूलं बहु दापयेत् ।
ततस्त्वाचमनं दत्वा दत्वा नीराजनं ततः ॥ १९६

बलिं दत्वा तु विधिवद्ब्राह्मणान् बहु भोजयेत् ।
सान्निध्यं प्रार्थयेद्विद्वान् कृत्वा तत्पादगौ करौ ॥ १९७

''सान्निध्यं कुरु देवेशि सर्वसंपत्करी मम ।
श्रियं देहि यशो देहि धियं देहि द्विषो जहि ॥ १९८

आयुष्मन्तं यशस्वन्तं विद्यावन्तं च मां कुरु ।
सर्वदाऽस्मत्कुले देवि कृपां कुरु महेश्वरि ॥ १९९

द्रव्यमन्त्रक्रियाभक्तिश्रद्धाहानिं सहेश्वरि ।
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ॥ २००

तावदत्र त्वया देवि स्थातव्यमिह मन्दिरे ।''
इति संप्रार्थ्य देवेशीं दक्षिणां दापयेद्गुरोः ॥ २०१

गुरवे दक्षिणा देया हिरण्यं शतनिष्ककम् ।
ऋत्विजामर्धमात्रं तु मूर्तिपानां च पादतः ॥ २०२

अर्धेन वा तदर्धेन सदस्यानपि तोषयेत् ।
उत्सवं कारयेत्पश्चात् प्रतिष्ठान्ते तु सुन्दरि ॥ २०३

एवं यः कुरुते देवि स पूज्यस्सर्वदाखिलैः ।
अस्माकमपि पूज्योऽसौ ब्रह्मविष्ण्वादिनामपि ॥ २०४

नान्यत्कार्यं भवेत्तस्य मम सन्तोषहेतुकम् ।
न तस्य सुकृतं कार्यमेतस्मादपि कर्मणः ॥ २०५

इदमेव परं श्रेयः इदमेव परं धनम् ।
इदमेव परो धर्मो ह्यस्मात्परतरं न हि ॥ २०६

इति ते कथिता देवि प्रतिष्ठाविधिरम्बिके ।
यः पठेत् शृणुयाद्भक्त्या सर्वान्कामानवाप्नुयात् ॥ २०७

श्री सौभाग्यचिन्तामणौ पूर्वखण्डे चतुर्थः पटलः ॥

## पञ्चमः पटलः

### त्रिपुरान्यासविधिः

अथ वक्ष्यामि देवेशि त्रिपुरान्यासमुत्तमम् ।
न्यासं च द्विविधं प्रोक्तं गौणं मुख्यमिति द्विधा ॥ १

गौणं तु परमं ज्ञानं मुख्यं सर्वार्थसिद्धिदम् ।
ज्ञानात्सिद्धिरिति न्यायात्पूर्वं गौणमिहोच्यते ॥ २

मुख्यं तु वक्ष्यते पश्चान्नित्यार्चनविधौ प्रिये ।
गौरं मुख्यं च यो वेत्ति ज्ञानलक्ष्म्योश्च भाजनम् ॥ ३

तदिदं सम्प्रवक्ष्यामि त्रिपुरान्यासमुत्तमम् ।
न्यासानां चैव सर्वेषां उत्तमं सर्वसिद्धिदम् ॥ ४

यत्कृत्वा सर्वपापेभ्यः तत्क्षणादेव मुच्यते ।
सर्वापद्भ्यो विमुच्येत संपद्भिरभिपूर्यते ॥ ५

यस्य नो चरमं जन्म यो न साक्षान्महेश्वरः ।
तस्य नो लभ्यते देवि न्यासः षोढाह्वयः परः ॥ ६

यस्य विज्ञानमात्रेण जायन्ते सर्वसिद्धयः ।
यः कुर्यान्न्यासमेतत्तु भक्तिश्रद्धासमन्वितः ॥ ७

स पूज्यः सर्वभूतानां देवानामपि पूजितः ।
न नमेच्च गुरून्वृद्धान् पितृमातृमुखानपि ॥ ८

नमेद्वा यदि वा मोहादुभावपि विनश्यतः ।
शिव एव भवेत्साक्षात् न्यासस्यास्य प्रभावतः ॥ ९

न्यासस्यास्य महादेवस्त्वहमेव ऋषिः स्मृतः ।
छन्दस्त्वव्यक्तगायत्री परा शक्तिस्तु देवता ॥ १०

प्रणवं बीजमाख्यातं शक्तिः शक्तिरुदाहृता ।
षड्दीर्घयुक्तशक्त्या तु षडङ्गानि समाचरेत् ॥ ११

ध्यानं चास्य प्रवक्ष्यामि सर्वसिद्धिकरं परम् ।
ध्यायेद्बालार्कसङ्काशां चतुर्बाहां(हुं) त्रिलोचनाम् ॥ १२

अकलङ्ककलानाथमनोहरमुखाम्बुजाम् ।
सूर्येन्दुमण्डलोद्योतां मुक्तताटङ्कशोभिताम् ॥ १३

कम्बुग्रीवां महादेवीं पीनोन्नतपयोधराम् ।
तनुमध्यां पृथुश्रोणीं पीतकौशेयवासिनीम् ॥ १४

प्रत्यग्रकदलीकाण्डसुकुमारोरुमीश्वरीम् ।
गूढगुल्फपदद्वन्द्वां इन्द्रादिसुरवन्दिताम् ॥ १५

ब्रह्मविष्णुशिवाकारां सृष्टिस्थित्यन्तकारिणीम् ।
गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम् ॥ १६

(नवचक्रात्मिकां देवीमिन्दुमण्डलमध्यगाम् ।)
मातृकापीठ(बीज)मध्यस्थां पञ्चाशद्वर्णरूपिणीम् ।
देवब्रह्मत्वविष्णुत्वशिवत्वप्रदवीक्षणाम् ।। १७

जगदुज्जीवनोद्युक्तां जगत्सङ्कल्पविग्रहाम् ।
अखण्डब्रह्मणोऽभेदां(भिन्नां) अखण्डानन्ददां पराम् ।।१८

ध्यात्वैवं हृदये देवीं निश्चलेनान्तरात्मना ।
विभाव्य विन्यसेद्यस्तु भवत्येव परश्शिवः(वापराजितः)१९

**गणेशन्यासः**

विघ्नेशो विघ्नराजश्च विनायकशिवोत्तमौ ।
विघ्नकृत् विघ्नकर्ता च विघ्नराड्गणनायकः ।। २०

एकदन्तो द्विदन्तश्च गजवक्त्रो निरञ्जनः ।
कपर्दवान् दीर्घमुखः शङ्कुकर्णो वृषध्वजः ।। २१

गणनाथो गजेन्द्रश्च शूर्पकर्णस्त्रिलोचनः ।
लम्बोदरो महानादश्चतुर्मूर्तिस्सदाशिवः ।। २२

आमोदो दुर्मुखश्चैव सुमुखश्च प्रमोदकः ।
एकपादो द्विजिह्वश्च शूरो वीरश्च षण्मुखः ।। २३

वरदो वामदेवश्च वक्रतुण्डो द्विरण्डकः ।
सेनानीर्ग्रामणीर्मत्तो विमत्तो मत्तवाहनः ।। २४

जटी मुण्डी तथा खड्गी वरेण्यो वृषकेतनः ।
भक्ष्यप्रियो गणेशश्च मेघनादो गणेश्वरः ।। २५

तरुणारुणसङ्काशान् गजवक्त्रांस्त्रिलोचनान् ।
पाशाङ्कुशवराभीतिहस्तान् शक्तिसमन्वितान् ।। २६

एतांस्तु विन्यसेद्देवि मातृकान्यासवत्प्रिये ।

**ग्रहन्यासः**

स्वरैस्तु सहितं सूर्यं हृदये तु प्रविन्यसेत् ॥ २७

बिन्दुस्थाने सुधामूर्तिं आदिवर्णचतुष्टयम् ।
भूपुत्रं लोचनद्वन्द्वे कवर्गाधिपतिं प्रिये ॥ २८

हृदये च न्यसेच्छुक्रं चवर्गाधिपतिं पुनः ।
हृदयोपरि विन्यस्येत् टवर्गाधिपतिं बुधम् ॥ २९

बृहस्पतिं कण्ठदेशे तवर्गाधिपतिं प्रिये ।
नाभौ शनैश्चरं देवि पवर्गाधिपतिं ततः ॥ ३०

चतुर्भिर्यादिभी राहुं विन्यसेद्वदने ततः ।
पादयोः शादिभिः केतुं न्यसेत् लाक्षरसंयुतम् ॥ ३१

**नक्षत्रन्यासः**

ललाटे दक्षनेत्रे च वामे कर्णद्वये पुनः ।
पुटयोर्नासिकायाश्च कण्ठे स्कन्धद्वये तथा ॥ ३२

कूर्परद्वितये पश्चान्मणिबन्धद्वये पुनः ।
स्तनयोश्च तथा नाभौ कटियुग्मोरुग्मके ॥ ३३

जानुद्वये तथा जङ्घाद्वये पादद्वये पुनः ।
ज्वलत्कालानलप्रख्या वरदाभयपाणयः ॥ ३४

नीलपाण्योऽश्विनीपूर्वाः सर्वाभरणभूषिताः ।
एवं तु विन्यसेद्देवि स्थानेष्वेषु सुरार्चिते ॥ ३५

राज्यलाभोपकाराय प्रारभ्यारिखरः कुरु ।
गोपालककुटीप्रायान्ह(फु)ळावित्यक्षरक्रमात् ॥ ३६

**योगिनीन्यासः**

ततस्तु योगिनीन्यासं रचयेन्मन्त्रवित्तमः ।
डाकिनीं राकिनीं चैव लाकिनीं काकिनीं तथा ॥ ३७

साकिनी हाकिनीं चैव सर्वाकारां च याकिनीम् ।
सप्तमीं विन्यसेन्मन्त्री स्थानेष्वेषु सुरार्चिते ॥ ३८

आसां क्रमेण च मनून्कथयामि वरानने ।
डां डीं डमलवरयूं डूं स्यात्स्यूमित्युदीरयेत् ॥ ३९

विशुद्धयोगिनी प्रोक्ता मां रक्ष च मम त्वचम् ।
रक्षेति सर्वभूतस्य वशङ्करि पदं वदेत् ॥ ४०

यूयं देवि तथागच्छ ऐमघोरपदं वदेत् ।
देवीं ह्रीं सश्च परमघोरे ह्रीं (हूं) घोररूपिणि ॥ ४१

एह्येहि च नमश्चोक्त्वा चण्डमुण्डपदं तथा ।
तथा वदेत्सरलकसहैश्च श्रीमहा ततः ॥ ४२

त्रिपुरे सुन्दरी विच्चे स्वाहान्तो मनुरीरितः ।
ततो विशुद्धपीठस्थे विशुद्धादिश्च डाकिनी ॥ ४३

श्रीविश्वनाथदेवश्रीपादुकाभ्यो नमो वदेत् ।
कलाषोडशकं न्यस्य परिचर्या(चार्य)स्तु षोडश ॥ ४४

योगिन्यस्त्वमृतानन्दा इन्द्राणीशान्युषा तथा ।
ऊर्ध्वकेशी तथा ऋद्धिः ॠषा चैव लृका तथा ॥ ४५

ॡका तथा चैकपदा ऐश्वर्योङ्काररूपिणी ।
औषधाम्बाऽक्षरा चेति क्रमेण परिकीर्तिताः ॥ ४६

राकिनी(न्या)अपि तच्छाया रां रीं रूं रमिति क्रमात् ।
पीठस्थानेऽनाहते तु रक्तं रक्षेति वै ततः ॥ ४७

एवमूह्य प्रयत्नेन स्वरस्थाने च कादिकम् ।
द्वादशाक्षरसंयुक्तं पूर्ववद्राकिनीमनुम् ॥ ४८

कर्णिकायां राकिनीं च परिवारास्तु पत्रगाः ।
काळदात्री(रात्री) खादिनी च गायत्री घण्टधारिणी ॥४९

ङादात्मिका च चामुण्डा छाया चैव जया तथा ।
झङ्कारी ञानरूपा च टङ्काराह्वा च वै ततः ॥ ५०

ठङ्कारीति दळेष्वेषु न्यस्तव्या द्वादशस्तथा ।
लाकिन्या अपि तद्वत्स्यान्मांसं रक्षेति वै ततः ॥ ५१

स्थानं च मणिपूरं स्यात् डादिफान्तं तथाक्षरम् ।
ऊह्यो मन्त्रस्तु देवेशि दळेषु परिचारिकाः ॥ ५२

डामरी स्याच्च ढमरी णामरी तामसी तथा ।
स्थाण्वी दाक्षायणी धात्री नारायण्यथ पार्वती ॥ ५३

फट्कारिणीति विख्याता दशैताः परिचारिकाः ।
काकिन्या अपि मन्त्रोऽयं मेदो रक्षेति रक्ष च ॥ ५४

स्वाधिष्ठानं तथा स्थानं भेदं तत्वेन लक्ष्यते ।
बादिलान्तश्च मन्त्रोऽयं षट्सरोजान्तरे न्यसेत् ॥ ५५

बन्दि(न्धि)नी भद्रकाळी च महामाया यशस्विनी ।
रमा लम्बोष्ठिका चेति परिचार्यस्तु षट् स्मृताः ॥ ५६

साकिन्या अपि तत्स्थाने अस्थि रक्षेत्युदीरयेत् ।
आधारं स्थानमाख्यातं वादि सान्तं तु वर्णकम् ॥ ५७

मनुः प्रोक्तस्तु साकिन्याः परिवाराश्चतुर्दळे ।
वरदा श्रीश्च षण्डा च सरस्वत्युदिताः क्रमात् ॥ ५८

न्यस्तव्या मध्यदेशे तु साकिनीं तु विभावयेत् ।
हाकिन्या अपि तद्वत्स्यान्मज्जां रक्षेत्युदीरयेत् ॥ ५९

हं ळं इत्यक्षराख्यातं आज्ञापीठं निगद्यते ।
क्षमित्येकाक्षरस्यैव याकिनी मध्यदेशगा ॥ ६०

यक्षिण्यास्त्वेष मन्त्रोऽयं शुक्लप्राणान् वदेत्ततः ।
वर्णाः पञ्चाशदाख्याताः सर्वरक्षायुते ततः ॥ ६१

सर्वाधारादिपीठं च स्थानं सानन्ददायकम् ।
इत्युक्तन्यासशेषं तु डाकिनीमन्त्रधारया ॥ ६२

परिचार्यः पूर्वमुक्ताः सर्वाः अस्यां तु विन्यसेत् ।
(सर्वासां व्यापिकात्वेन सप्तमी व्यापिका मता ।
प्राणोऽपानस्तथा व्यान उदानश्च समानकः ।
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः ।
जीवात्मपरमात्मानौ परितस्तांस्ततो न्यसेत् ।)

**राशिन्यासः**

दक्षिणं पार्श्वमारभ्य वामपार्श्वावसानकम् ॥ ६३

मेषादिराशयो वर्णैः न्यस्तव्यास्सह पार्वति ।
वेलागरु खरः शोणा धर्मणो वेदिभेदिताः ॥ ६४

लिप्यर्णा राशिषु ज्ञेयाः षष्ठीशादींस्तु योजयेत् ।

**पीठन्यासः**

पीठानि विन्यसेद्देवि मातृकास्थानके पुनः ॥ ६५

तेषां नामानि कथ्यन्ते शृणुष्वावहिता प्रिये ।
कामरूपं वारणासिर्नेपालं पौण्ड्रवर्धनम् ॥ ६६

चिरस्थिरं कुब्जकर्णं पूर्वशैलं तथाम्बुदम् ।
आम्रातकैश्वरैकाम्रं त्रिस्रोताः कामकोष्ठकम् ।। ६७

कैलासं भृगुनगरं केदारं पूर्णचन्द्रकम् ।
श्रीकण्ठं चैवमोङ्कारं जालन्ध्रं मालवं तथा ।। ६८

कुलूतं देविकोट्टं च गोकर्णं मरुदीश्वरम् ।
अट्टहासं च विजयं द्विराजाख्यं महापथम् ।। ६९

कोल्लापुरं चैलापुरं ओङ्कारं च जयन्तिका ।
उज्जयिन्यपि चित्रा च क्षीराभं हस्तिनापुरम् ।। ७०

उड्डीशं च प्रवाळाख्यं षष्ठीं मायापुरं तथा ।
ओरेशं मलयं शैलं मेरुं गिरिवरं तथा ।। ७१

महेन्द्रं वामनं चैव हिरण्यपुरमेव च ।
महालक्ष्मीपुरोड्याणच्छायाच्छत्रमतः परम् ।। ७२

एते पीठास्समुद्दिष्टा मातृकारूपमास्थिताः ।

**श्रीचक्रन्यासः**

षोढान्यासं पुरः कृत्वा श्रीचक्रन्यासमाचरेत् ।। ७३

महात्रिपुरसुन्दर्याश्चक्रन्यासं शृणु प्रिये ।
यत्न कस्यचिदाख्यातं तनुशुद्धिकरं परम् ।। ७४

चतुरश्रादिरेखायै नम इत्यादितो न्यसेत् ।
दक्षांसपृष्ठपाण्यग्रस्फिकपादाङ्गुलीष्वथ ।। ७५

वामाग्राङ्गुलिकस्फिके पाण्यग्रे चांसपृष्ठके ।
सचूलितलपृष्ठेषु व्यापकत्वेन सुन्दरि ।। ७६

अत्रैव स्थानदशके अणिमाद्याः प्रविन्यसेत् ।
सिद्धीस्तदन्तस्तदनु(श्च तनु)व्यापकत्वेन विन्यसेत् ।। ७७

चतुरश्रमध्यरेखायै नम इत्यपि वल्लभे ।
विन्यस्य तस्याः स्थानेषु ब्रह्माण्याद्यास्तथाष्टसु ।। ७८

पादाङ्गुष्ठद्वये पार्श्वे दक्षमूर्धन्यपार्श्वके ।
वामदक्षिणजान्वोश्च बहिरंसद्वये तथा ।। ७९

न्यस्तव्यं चतुरश्रान्त्यरेखायै नम इत्यपि ।
विन्यस्य व्यापकत्वेन पूर्वोक्तेन विधानतः ।। ८०

उक्तस्थानेषु दशसु मुद्राणां दशकं न्यसेत् ।
ब्रह्माण्याद्यष्टकस्थाने तासामष्टौ न्यसेत्ततः ।। ८१

शिष्टे द्वे द्वादशान्ते च पादांगुष्ठे च विन्यसेत् ।
तदन्तः षोडशदळपद्माय नम इत्यपि ।। ८२

विन्यस्य तद्दळे कामाकर्षिण्याद्याश्च विन्यसेत् ।
दळानि दक्षश्रोत्रं च पृष्ठमंसं च कूर्परम् ।। ८३

करपृष्ठं चोरुजानुगुल्फपादतलं तथा ।
वामपादतलाद्येवमेतदेव क्रमं मतम् ।। ८४

तदन्तरे चाष्टदलपद्माय नम इत्यपि ।
विन्यस्य तद्दळेष्वेषु दक्षजङ्घे च जत्रुके ।। ८५

(ऊर्ध्वान्तिगुल्फोरुजानु जत्रुशंखेषु वामतः) ।
ऊरुयुग्मं च गुल्फोरुजत्रुजङ्घोष्ठवामतः ।
अनङ्गकुसुमाद्याश्च शक्तीरष्टौ च विन्यसेत् ।। ८६

अथान्तश्चतुर्दशारचक्राय नम इत्यपि ।
विन्यस्य तस्य कोणेषु न्यसेच्छक्तीश्चतुर्दश ।। ८७

सर्वसंक्षोभणाद्यास्तु तासां कोणानि वच्म्यहम् ।
ललाटदक्षभागं च दक्षगण्डांसमध्यतः ॥ ८८

पार्श्वान्तरोरुजङ्घान्तर्वामजङ्घान्तरं शिवे ।
वामोरुवामपार्श्वे च वामांसे वामगण्डके ॥ ८९

ललाटवामभागे च तथा वै प्रकृतेत्यपि ।
ततो दशारचक्राय नम इत्यपि पार्वति ॥ ९०

तस्य कोणानि दक्षादि(क्षि)नासामूलादि नेत्रके ।
कुक्षीशवायुकोणेषु जानुद्वयगुदे(युते)षु च ॥ ९१

कुक्षिनैर्ऋतवह्न्याख्यकोणेष्वेषु न्यसेत्पुनः ।
सर्वसिद्धिप्रदेत्यादिशक्तीनां दशकं न्यसेत् ॥ ९२

तदन्तश्च दशाराख्यचक्राय नम इत्यपि ।
इति विन्यस्य कोणेषु सर्वज्ञाद्याः प्रविन्यसेत् ॥ ९३

दक्षनासा सृकणी च स्तनं वृषणमेव च ।
सीवनी वाममुष्कं च स्तनसृकणि नासिके ॥ ९४

नासाग्रे चैव विज्ञेयं कोणानां दशकं तथा ।
तदन्तरे चाष्टकोणचक्राय नम इत्यपि ॥ ९५

विन्यस्य मणिपूरादि वशिन्याद्यष्टकं न्यसेत् ।
चुबुके कण्ठहृदयनाभिनासिकदक्षिणे ॥ ९६

ज्ञेयं पार्श्वचतुष्कं च मणिपूरादि वामकम् ।
चतुष्टयं च पार्श्वानां एतत्कोणाष्टकं पुनः ॥ ९७

हृदयस्थत्रिकोणस्य चतुर्दिक्षु प्रविन्यसेत् ।
शरचापौ पाशसृणी त्रिकोणाय नमस्तथा ॥ ९८

विन्यस्य तस्य कोणेषु वामदक्षोदरेषु च ।
कामेश्वर्यादिदेवीनां मध्ये देवीं च विन्यसेत् ॥ ९९

एवं मयोदितो देवि न्यासो गुह्यतमः क्रमात् ।
एतद्गुप्ततरं कार्यं त्वया वै वीरवन्दिते ॥ १००

नाभक्तायासमर्थाय नाशिष्याय कदाचन ।
गुप्ताद्गुप्ततरं चैतत्तवाद्य प्रकटीकृतम् ॥ १०१

न्यासोऽयं हि मया नित्यं क्रियते मनसा तनौ ।
मूलदेव्यादिकं न्यासमणिमान्तं पुनर्न्यसेत् ॥ १०२

शिरस्त्रिकोणपूर्वादिकामेश्वर्यादिकं न्यसेत् ।
बाणान्नेत्रे भ्रुवोश्चापौ कण्ठे पाशद्वयं न्यसेत् ॥ १०३

सृणिद्वयं तु नासाग्रे दक्षिणाद्यं तु विन्यसेत् ।
मुण्डमालाक्रमेणैव न्यसेद्वाग्देवताष्टकम् ॥ १०४

बैन्दवाद्यानि चक्राणि न्यस्तव्यानि वरानने ।
नेत्रमूले त्वपाङ्गे च कर्ण(ण्ठ)पूर्वोत्तरे पुनः ॥ १०५

चूळिका पश्चमेनार्धे(र्थे)चूळार्धे कर्णपृष्ठके ।
कर्णमूले त्वपाङ्गे च तस्य मूले च विन्यसेत् ॥ १०६

सर्वसिद्ध्यादिकं कर्णे(ण्ठे)कर्णरन्ध्रे च पृष्ठके ।
चूळीदक्षोत्तरे चैव कर्णपृष्ठे च रन्ध्रके ॥ १०७

वामात्त्वपाङ्गात् सर्वज्ञाः प्रादक्षिण्येन विन्यसेत् ।
हृदये मनुकोणस्थशक्तयोऽपि च पूर्ववत् ॥ १०८

नाभौ त्वष्टदळे तद्वत् वामे दक्षिणपार्श्वके ।
उदरे सव्यदेशे च न्यसेन्मनुचतुष्टयम् ॥ १०९

स्वाधिष्ठाने न्यसेत्स्वस्य पूर्वनाभ्यवसानकम् ।
मूलाधारे न्यसेन्मुद्रादशकं साधकोत्तमः ॥ ११०

पुनः सव्ये च वंशे च तथा वामान्तरालके ।
ऊर्ध्वाधो दशमुद्राश्च ऊर्ध्वाधो दशमः पुनः ॥ १११

ब्रह्माण्याद्यष्टकं दक्षजङ्घायामिति पूर्ववत् ।
वामजङ्घां समारभ्य वामादिक्रमतोऽपि च ॥ ११२

सिद्ध्यष्टकं न्यसेत्तेषु द्वयं पादतले न्यसेत् ।
कारणात्प्रसृतं न्यासं दीपाद्दीपमिवोदितम् ॥ ११३

एवं विन्यस्य देवेशि स्वात्माभेदेन चिन्तयेत् ।
ततश्च करशुद्ध्यादिन्यासं कुर्यात्समाहितः ॥ ११४

मूर्ध्नि गुह्ये च हृदये नेत्रत्रितय एव च ।
श्रोत्रयोर्युगले चैव मुखेऽपि भुजयोः पुनः ॥ ११५

पृष्ठे जानुनि नाभौ च विद्यान्यासं विधाय च ।
करशुद्धिं पुनश्चैव आसनानि षडङ्गकम् ॥ ११६

श्रीकण्ठादेश्च वाग्देवि चाधारे हृदये तथा ।
शिखायां बैन्दवस्थाने त्वग्निचक्रादिकं न्यसेत् ॥ ११७

तत्वत्रयं समस्तं च विद्याबीजत्रयान्वितम् ।
पादादिनाभिपर्यन्तमागळं सशिरं तथा ॥ ११८

व्यापकं चैव विन्यस्य स्वात्मीकृत्य परं वपुः ।
एवं चतुर्विधो न्यासः कर्तव्यो वीरवन्दिते ॥ ११९

एवं न्यासविधिं कृत्वा मूलेन व्यापकं तथा ।
देवीमयमथात्मानं भावयेदखिलात्मकम् ॥ १२०

अन्तर्देवीमयो भावो बहिः पाषाणवत्स्थितिः ।
निमेषोन्मेषरहितदृष्टिरेषाऽऽत्मभावना ॥ १२१

अग्निष्टोमसहस्राणि वाजपेयशतानि च ।
न्यासयज्ञस्य देवेशि कलां नार्हन्ति षोडशीम् ॥ १२२

इति सौभाग्यचिन्तामणौ पूर्वखण्डे पञ्चमः पटलः ॥

## षष्ठः पटलः

### बिम्बभेदविधिः

अथ वक्ष्यामि देवेशि बिम्बभेदविधिं क्रमात् ।
स्थितं निषण्णं शयनं(यितं) बिम्बं त्रिविधमुच्यते ॥ १

दारु शैलं च ताम्रं च रजतं रुक्ममित्यपि ।
क्रमोत्तरसहस्राणि द्रव्याणीमानि सद्गुणैः ॥ २

प्रवर्तकतया देव्या ध्रुवे तु शयनं न हि ।
ध्रुवे निषण्णमाख्यातं सुस्थितं जङ्गमं भवेत् ॥ ३

सधनुर्विधनुश्चेति निषण्णं द्विविधं भवेत् ।
शिवादृते निषण्णं तु शयने केवलं स्मृतम् ॥ ४

सधनुर्विधनुर्वापि विष्णुचिह्नमथापि वा ।
स्वतन्त्रे तु प्रकर्तव्यं प्रमाणं दशतालवत् (कम्) ॥ ५

प्रथमं ध्रुवबेरं स्यादुत्सवं तु द्वितीयकम् ।
तृतीयं बलिबेरं स्याच्चतुर्थं स्नपनीयकम् ॥ ६

पञ्चमं भोगमुद्दिष्टं यागबेरं तु षष्ठकम् ।
पञ्चभूतमयं मूलं इच्छाज्ञानक्रियात्मकम् ॥ ७

उत्सवं तु नभोरूपं इच्छाशक्तिमयं प्रिये ।
बलिबेरं मरुद्रूपं ज्ञानशक्तिमयं स्मृतम् ॥ ८

तेजोमयं चतुर्थं तु क्रियाशक्तिमयं स्मृतम् ।
चिच्छक्तिरूपकं भोगं तोयतत्वमुदाहृतम् ॥ ९

अचिच्छक्तिमयं यागं पृथिवीतत्वमम्बिके ।
एवमुक्तप्रकारेण षड्विधं बिम्बमुच्यते ॥ १०

बिम्बत्रयं वा कुर्वीत यथाविभवमम्बिके ।
मूलोत्सवबलिस्नानभोगाः स्युः पञ्चपक्षके ॥ ११

योगं भागं वीरमिति पूजाभोगोत्सवेषु च ।
त्रिपक्षे योगमूर्तौ तु स्नानपूजादिकं चरेत् ॥ १२

भोगे नित्योत्सवे भोगमुत्सवे वीरमुच्यते ।
सर्वावयवसंपूर्णं सर्वभूषणभूषितम् ॥ १३

पाशाङ्कुशेक्षुकोदण्डपञ्चबाणलसत्करम् ।
सुधांशुचारुमकुटं समदृष्टिमनोहरम् ॥ १४

ब्रह्मविष्णुमहेशाद्यैरमरैर्मुनिबृन्दकैः ।
योगिभिः सनकाद्यैश्च भावितं सततं हृदि ॥ १५

सिन्दूरारुणसङ्काशं सर्वलक्षणसंयुतम् ।
वेदमस्तकविन्यस्तहंसशोभिपदाम्बुजम् ॥ १६

पदपद्मजिताम्भोजं पृथग्बल्युत्सवान्वितम् ।
आविर्भावतिरोभावकारणं रक्षणोन्मुखम् ॥ १७

परापराख्यं गौर्यादिशक्तीनां मूलकारणम् ।
पाशाङ्कुशाभयवरैः शिवाङ्के जङ्गमं भवेत् ॥ १८

याद्दशं मूलबिम्बं तु ताद्दशं बिम्बवाहनम् ।
एवमुक्तप्रकारेण कुर्यात् बिम्बानि पार्वति ॥ १९

प्रतिष्ठाविधिमेतेषां मूलबिम्बवदाचरेत् ।
त्रिपुराध्याननिरतान् त्रिपुरापादपूजकान् ॥ २०

देवान् मुनीन् महाभागे वर्णाश्रमरतानपि ।
तानेव प्रतिमारूपान् कृत्वा यः पूजयेत्सदा ।
तस्यैव भोगमोक्षौ तु करस्थौ हि न संशयः ॥ २१

इति सौभाग्यचिन्तामणौ पूर्वखण्डे षष्ठः पटलः ।

## सप्तमः पटलः ।

### सिंहवाहनाङ्गशक्तिप्रतिष्ठाविधिः

अथ शुभ्रं महासिंहं कुर्याद्देव्यास्तु वाहनम् ।
कृताञ्जलिपुटं वीरं एकेनाकुञ्चजानुना ॥ १

तत्प्रतिष्ठाविधिं कुर्यात् वक्ष्यमाणेन वर्त्मना ।
प्रतिष्ठादिवसात्पूर्वरात्रौ कृत्वाङ्कुरार्पणम् ॥ २

पूर्वोक्तमण्टपे बिम्बं नीत्वा वेद्यां निधाय च ।
शिल्पिना कृतहस्तेन नयनोन्मीलनं चरेत् ॥ ३

पुण्याहं वाचयित्वाऽथ स्वसूत्रोक्तविधानतः ।
पञ्चगव्येन संस्नाप्य मन्त्रोन्मीलनमाचरेत् ॥ ४

जलाधिवासनं कृत्वा पीठे तद्विनिवेशयेत् ।
नारसिंहेन बीजेन कृत्वा कौतुकबन्धनम् ॥ ५

नवकुम्भांश्च संस्थाप्य दिक्पालानर्चयेत्क्रमात् ।
मध्ये सिंहं समावाह्य तद्बीजेन महेश्वरि ॥ ६

आवाहनादिमुद्राभिस्सकलीकृत्य तं पुनः ।
अभ्यर्च्य गन्धपुष्पाद्यैः स्थण्डिलं कारयेद्बुधः ॥ ७

द्रोणद्वितयसंख्याकैः शालिभिस्तण्डुलैस्तिलैः ।
नवपात्राणि संगृह्य क्षीरं दधि घृतं मधु ॥ ८

कषायं पञ्चगव्यं च मध्यादि विनिवेशयेत् ।
उष्णाम्भो नारिकेळाम्भो गन्धाम्भस्तीर्थवारि च ॥ ९

अभ्यर्च्य गन्धपुष्पाद्यैः वस्त्रेणाच्छादयेत्ततः ।
ततो वह्निं समाधाय समिदाज्यचरून् पृथक् ॥ १०

सहस्रं वा शतं वापि नृसिंहमनुना हुनेत् ।
ततः स्विष्टकृतं हुत्वा कलशानभिषिच्य च ॥ ११

अलङ्कृत्य विधानेन तत्वतत्वेश्वरीं(रान्) न्यसेत् ।
विन्यस्य मातृकां बिम्बे मूलमन्त्रेण संयुताम् ॥ १२

आधारशक्तिमन्त्रेण आधारं च प्रपूजयेत् ।
क्रियाशक्त्या पिण्डिकां च बीजरत्नानि मूलतः ॥ १३

सम्मुखे मूलबिम्बस्य स्थापनं तु समाचरेत् ।
कुम्भे सिंहन्तु संपूज्य बलिं दत्वा समन्ततः ॥ १४

कराभ्यां तत्समुद्धृत्य मूलेनैवाभिषेचयेत् ।
महानिवेदनं कृत्वा बलिं कृत्वा तदन्ततः ॥ १५

मन्त्रतन्त्रक्रियालोपशान्तये जुहुयाच्छतम् ।
ततः पूर्णाहुतिं हुत्वा क्षमस्वेति प्रणम्य च ॥ १६

करकौतुकमुत्सृज्य यथावत्पूजयेत्तथा ।
एवं वृषादिवाहानां प्रतिष्ठा तु निगद्यते ॥ १७

तथैव चाङ्गशक्तीनां प्रतिष्ठा विहिता बुधैः ।
तत्तन्मूलेन सर्वेषां जीवन्यास इहोच्यते ॥ १८

गुरवे दक्षिणां दद्यान्निष्कयुग्मं तु काञ्चनम् ।
ऋत्विजां मूर्तिपानां च यथार्हं पूजये(प्रददे)न्नृप ॥ १९

इति प्रतिष्ठा कथिता सिंहस्याग्रस्थितस्य च ।
अनुक्तमन्त्रास्तन्त्रेऽस्मिन् याः काश्चित्परिचारिकाः ।
स्वनाममनुभिः कुर्यात् कुम्भस्थानेषु सर्वशः ॥ २०

इति सौभाग्यचिन्तामणौ पूर्वखण्डे सप्तमः पटलः ॥

## अष्टमः पटलः ।

### श्रीचक्रमानस्

चक्रमानं प्रवक्ष्यामि यथावत् शृणु सुन्दरि ।
तन्मानं त्रिविधं प्रोक्तं तत्तत्कर्मानुसारतः ॥ १

स्नपने चालये गेहे विनियोगः पृथक् पृथक् ।
मानमात्राद्देहलब्धिः तेषामङ्गुलयः क्रमात् ॥ २

स्नपने षण्णवत्यः स्युः चतुर्विंशतिभिः परे ।
षोडशद्वादशाष्टौ षट् चतुर्भिर्वा गृहे भवेत् ॥ ३

प्रासादे स्नपने चैव मेरुप्रस्तारमादिशेत् ।
अथवा धरणीचक्रे स्नपनं कारयेद्बुधः ॥ ४

अर्धमेरुं गृहे कुर्यादालये भूमिरुच्यते ।
तण्डुले वा यवे वापि स्नपनं चक्रमालिखेत् ॥ ५

हैमराजतताम्राश्मदारुषु स्नापनं मतम् ।
न कुर्यादश्मदारुभ्यां गृहे श्रीचक्रमम्बिके ॥ ६

महारत्नमयं चक्रं सर्वसिद्धिप्रदायकम् ।
न कुर्याद्धातु(दारु)पाषाणैः काम्यकर्म विना क्वचित् ॥ ७

सर्वधा त्वर्चनाचक्रं जनानां नैव दर्शयेत् ।
संपूज्य गन्धपुष्पाद्यैः पूजान्तेष्वेव सेवयेत् ॥ ८

प्रतिमा सर्वदा सेव्या भोगमूर्तिर्न तल्पगा ।
घटिकाद्वादशादर्वाक्तल्पमारोपयेत्ततः ॥ ९

(आनिशार्धं तु संपूज्य तल्पमारोपयेत्ततः ।)
उत्सवे नवरात्र्यां च काम्यपूजाविधौ तथा ।
शान्त्यां संप्रोक्षणे चैव कालदोषो न विद्यते ॥ १०

चक्रोद्धारक्रमं वक्ष्ये संक्षेपेण महेश्वरि ।
यस्य विज्ञानमात्रेण साक्षाद्देवीमयो भवेत् ॥ ११

हैमरौप्यादि(राजत)पट्टेषु वृत्तमालिख्य शोभनम् ।
याम्यसौम्यायतं दद्यात् रेखानवकमम्बिके ॥ १२

(एवं चक्रं समालिख्य ऋजुरेखामनोहरम् ।
षण्णवत्यङ्गुलायामं प्रगृह्य धरणीं ततः ।
द्विधा विभज्य तां भूमिं मध्ये सूत्राणि पातयेत् ।
कादीनि नव टादीनि नव पादीनि पञ्च च ।
यादीन्यष्टाक्षराण्येवं ज्ञातव्यानि यथाक्रमम् ।)

देवी स्तुता मे गङ्गावत् गीस्तुतेति प्रदृश्यते ।
मानं श्रीचक्रनिर्माणं सूत्रेषु नवसु क्रमात् ॥ १३

आद्यन्ते च तदन्ते च तदन्तःस्थे च मध्यमे ।
मध्यमं च द्वया(ध्वजा)न्तोयं गुणभावं क्रमाद्व्रजेत् ।। १४

अधो द्वयं त्रिरूर्ध्वे स्यात् प्रथमां सप्तमीं नयेत् ।
युञ्जंश्चतुर्थ्यां नवमीं चतुर्थीमष्टमीं नयेत् ।। १५

षष्ठीं द्वितीयगां कृत्वा चतुर्थीमपि चाष्टमीम् ।
पञ्चमीं तु द्वितीयायां योजयेद्देशिकोत्तमः ।। १६

(आद्ये द्वितीयेऽष्टमे च नवमे च यथाक्रमम् ।
मार्जयेत् गुण.....वृत्तादन्तश्च सर्वतः ।
चतुर्थं षष्ठयोरन्यत्कलाश..... परिमार्जयेत् ।
पञ्चमस्य पुराणांशं मार्जयेदितरांस्तथा ।
द्वितीयान्तात्तृतीयान्ताच्चतुर्थान्ताच्च पञ्चमात् ।
सप्तमाष्टयोरेतत्तथा षण्णवमान्तयोः ।
प्रथमान्तात्सूत्रयुग्मं वृत्ततो मध्यमावधि ।
एवं संयोज्य देवशि नवयोन्याहितं भवेत् ।
......षडश्रं च ततः स्पष्टाष्टकं तथा ।)

मर्मभिश्चाष्टदशभिः युक्तं यन्त्रे सुलक्षणम् ।
वस्व(स्वा)रं वसुमानेन कलाश्रं च तथैव च ।। १७

भूरेखापुरमप्येवं विलिखेत्संप्रदायतः ।
मध्यान्तरत्रिकोणं च(णस्य)तिर्यग्रेखासमं पुनः ।। १८

वापीद्वारत्रिरेखाभिः सार्धं(मानं) तु द्विगुणं भवेत् ।
कृशाः स्थूलाश्च वक्राश्च रेखादोषाः प्रकीर्तितताः ।। १९

कृशाभिर्व्याधिजननं स्थूलाभिस्तु दरिद्रता ।
वक्राभिर्मरणं तस्मात्समं सम्यक्समालिखेत् ।। २०

(शुद्धे भूमितलेऽपि शुद्धदशादिक् प्रोलूतपुष्पान्विते
गन्धामोदसुधूपदीपसहिते सर्वोपचारैर्वरे ।
पट्टे हैममयेऽथ रौप्यजनिते ताम्रेऽथ सद्दर्पणे
कस्तूरीघनसारचन्दनसुखं श्रीचक्रराजं लिखेत्) ॥
जगत्सृष्ट्याद्यात्मकं च(त्मकं चैव) सर्वदैवमयं तथा ।
भूगृहं स्वरपत्राष्टदळं सृष्ट्यात्मकं त्रयम् ॥ २१

पूर्वाम्नायं महीजं च ब्राह्मीं तत्र प्रपूजयेत् ।
मन्वश्रं द्विदशारं च स्थितिरम्भोनभोमयम् ॥ २२

दक्षाम्नायं याजुषं च लक्ष्मीं तत्र प्रपूजयेत् ।
अष्टत्र्यश्रं मध्यमं च संहारं तैजसं वियत् ॥ २३

पश्चिमाम्नायरूपं च रुद्राणीं तत्र पूजयेत् ।
समस्तचक्रोल्लसितं दृश्यादृश्यस्वरूपकम् ॥ २४

अथर्वणोत्तराम्नाया पूजनीया नवात्मिका ।
इदमेव महाचक्रं षड्दर्शनसमन्वितम् ॥ २५

तत्तद्दर्शनमन्त्रैस्तु पूजितं सर्वसिद्धिदम् ।
भूगृहत्रितयं बौद्धं वज्रतारा तदात्मिका ॥ २६

तारे तारेति तारेति चतुरे स्वाहया युता ।
अनया पूजिता देवी तारयेत्सकलापदः ॥ २७

स्वरपत्राष्टपत्राब्जं ब्राह्मं(ह्मयं) दर्शनमीरितम् ।
ब्रह्माणं पूजयेत्तत्र तारेण तदनन्तरम् ॥ २८

मनुकोणं तु सौराख्यं सौराष्टाक्षरतो यजेत् ।
वैष्णवं द्विदशारं च तन्मन्त्रेण तु तं यजेत् ॥ २९

शाक्तं दर्शनमष्टारं इच्छाज्ञानक्रियात्मकम् ।
वर्गाष्टकैर्यजेच्छक्तिं नादब्रह्ममयीं पराम्(णिभामिनि) ३०

मध्यत्र्यश्रं सान्तरालं शैवं दर्शनमीरितम् ।
प्रासादशक्तियुक्तेन पञ्चार्णेन यजेच्छिवम् ।। ३१

षडङ्गानि च वेदानां ब्राह्मणादीनि भामिनि ।
मध्यत्र्यश्रादिचक्रेषु क्रमेणैव समर्चयेत् ।। ३२

ब्राह्मणानीतिहासानि पुराणानि च सुन्दरि ।
कल्पानि नाराशंसीश्च यजेदङ्गिरसस्तथा ।। ३३

स्वनामभिः समभ्यर्च्य वशिन्यादीश्च योगिनीः ।
नित्याः कामेशिकाद्याश्च योगिन्यो निखिलास्तथा ।। ३४

पृथिव्यादीनि भूतानि लोकाश्चैव चतुर्दश ।
ब्रह्माण्डान्यप्यसंख्यानि विराट् सम्राट् स्वराट् तथा ।।३५

देवाद्यष्टादशगणाः सर्वे चक्रं समाश्रिताः ।
सर्वाभीष्टं प्रयच्छन्ति पूजिताः स्वस्वनामभिः ।
देवीं चावरणैस्सार्धं पूजयेत्सर्व(दिष्ट)सिद्धये ।। ३६

सौभाग्यचिन्तामणौ पूर्वखण्डे अष्टमः पटलः ।।

## नवमः पटलः

### मन्त्रलक्षणम्

अथ मन्त्राणि वक्ष्यामि सर्वसिद्धिकराणि तु ।
मन्त्रं तु त्रिविधं प्रोक्तं मूलमङ्गं च यौगिकम् ।। १

**बीजमूलमन्त्रम्**

मूलमन्त्रं त्रिधा प्रोक्तं बीजषट्पदसंज्ञितम् ।
व्योम्नि मायादि बिन्द्वाढ्यं मूलबीजमुदाहृतम् ॥ २

व्योमेन्दू अपि(रवि) बिन्द्वाढ्य व्योमेन्दुस्वरबीजयुक् ।
व्योमेन्दुभुवनं सर्गि योगस्त्वेषां महामनुः ॥ ३

बीजमन्त्रमिदं प्रोक्तं सर्वसिद्धिप्रदायकम् ।
इदमन्यत्प्रवक्ष्यामि मन्त्रमानुष्टुभाह्वयम् ॥ ४

**आनुष्टुभा मन्त्राः**

उद्धृतं सर्ववेदेषु सारं सर्वागमेषु च ।
गन्धद्वारां वदेत्पूर्वं दुराधर्षां ततो वदेत् ॥ ५

नित्यपुष्टां ततश्चोक्त्वा करीषिणीं ततो वदेत् ।
ईश्वरीं सर्वभूतानां उक्त्वा तामिह वादयेत् ॥ ६

उपह्वये श्रियं चेति मन्त्रः श्रीमारसम्पुटः ।
एतन्मन्त्रवरं देवि सर्वतन्त्रेषु गोपितम् ॥ ७

तव स्नेहेन कथितं सर्वसिद्धिप्रदायकम् ।
यन्न देवाश्च जानन्ति सिद्धाश्च परमर्षयः ॥ ८

अन्धा इव महारत्नं मम मायाविमोहिताः ।
नास्मात्परतरं देवि मन्त्रं सर्वार्थसिद्धिदम् ॥ ९

अनेनाराधिता देवी सर्वाभीष्टं प्रयच्छति ।
अथ न्यासं प्रवक्ष्यामि विद्यामायुष्करीं शुभाम् ॥ १०

श्रीविद्येति प्रसिद्धा या श्रीसौभाग्यफलप्रदा ।
श्रियं लक्ष्मीं वदेत्पूर्वं औबलामम्बिकामिति ॥ ११

गां षष्ठीं च जयामिन्द्रसेनेत्युक्त्वोद आह्नुः च ।
तां विद्यां ब्रह्मयोनिं च सरूपां इह आयुषे ॥ १२

तर्पयामो घृतेनेति मन्त्रो मृत्युञ्जयः परः ।
अनेन जुहुयाद्यस्तु दूर्वाघृततिलौदनैः ॥ १३

पृथगष्टोत्तरशतैरब्दान्मृत्युहरो भवेत् ।
घृताभिषेकैर्देव्या वा गन्धोदैस्तर्पणात्प्रिये ॥ १४

मृत्युं तरति मासेन महादेव्याः प्रसादतः ।
पुनरन्यत्प्रवक्ष्यामि मन्त्रं पावीरवीति च ॥ १५

जपहोमार्चनाद्यैस्तु श्रियमिष्टां प्रदास्यति ।
मन्त्रो गौरीमिमायेति ततो देव्याः प्रकीर्तितः ॥ १६

नानेन सदृशं मन्त्रं भुक्तिमुक्तिप्रदायकम् ।
ऐश्वर्यारोग्यमोक्षाप्त्यै प्रोक्तानीमानि सुन्दरि ॥ १७

शक्तिबीजात्समुद्भूता वेदाश्च निखिलागमाः ।
वेदेभ्यो जज्ञिरेऽमूनि मन्त्राणि जगदम्बिके ॥ १८

तेभ्यश्च पदमन्त्राणि तेभ्यो बीजानि जज्ञिरे ।
बीजोद्भूतमिदं सर्वं जगत्स्थावरजङ्गमम् ॥ १९

बीजं बीजत्रयं चैव पदमन्त्रऋचस्तथा ।
सव्याहृतिस्सबीजेति षोढेयं मन्त्रसन्ततिः ॥ २०

महात्रिपुरसुन्दर्याः पदमन्त्रं शृणु प्रिये ।
वदेच्चित्रावसुपदं संबुद्ध्या स्वस्तिदेति च ॥ २१

पारं पदमशीयेति श्रीमायामारसंयुतः ।
येन विज्ञातमात्रेण साक्षाद्भावः प्रजायते ॥ २२

ब्रह्मा तच्छक्तिका माया धरणी भुवनेश्वरी ।
शिवश्चन्द्रो विधाता च शिवो भूमिश्च शक्तिका ।। २३

चन्द्रो विधिर्महामाया शक्तिरेवमुदाहृता ।
एतन्मन्त्रवरं देवि तत्तत्कामानुसारतः ।। २४

तत्तद्बीजं प्रयुञ्जीत जपहोमार्चनादिषु ।
महीमारुतबीजाढ्यं प्रतिष्ठायां निगद्यते (विधीयते) ।।२५

उत्सवे कमलाबीजं प्रोक्षणे व्याहृतीयुतम् ।
प्रणवव्याहृतीभिश्च पवित्रारोपणे मता ।। २६

शान्त्यां शक्तिसमायुक्तं डोलायां मारसंयुतम् ।
वह्नि(शक्ति)व्योमसमायुक्तं दीपाराधनकर्मणि ।। २७

धरणीजलसंयुक्तं नवाग्रायणकर्मणि ।
विद्याश्रवणकाले तु वाग्बीजाद्यं नियोजयेत् ।। २८

फाल्गुनोत्सवकाले तु स्वयंवरणविद्यया ।
पर्वण्यमृतबीजेन दर्शे सूर्यार्णसंयुतम् ।। २९

आदौ संयोज्य मन्त्रस्य पूजाहोमार्चनाः स्मृताः ।
बालामूले तदीदृग्भिः संमिश्रा निष्कला मता ।। ३०

व्याहृतीभिर्युता विद्या परेति परिकीर्तिता ।
ऋषिरस्य परो ब्रह्मा गायत्री छन्द उच्यते ।। ३१

देवता तु पराशक्तिस्त्रिपुरा सर्वरूपिणी ।
सर्वज्ञा नित्यतृप्ता च तथैवानादिबोधिनी ।। ३२

स्वतन्त्रा च तथाऽलुप्तशक्तिका नित्यपूर्विका ।
अनन्तशक्तिरेतानि बालया सविलोमया ।। ३३

तत्तत्पल्लवयुक्तानि चतुर्थ्यन्तानि विन्यसेत् ।
ऐं क्लीं सौरिति विद्येयं करशुद्धिविधायिनी ॥ ३४

वर्गा(र्णा)नुक्रमयोगेन वशिन्याद्यष्टकं न्यसेत् ।
रेफः कपर्दी पृथिवी षष्ठस्वरसबिन्दुयुक् ॥ ३५

ब्रह्मेन्द्रगगनाग्नेयचतुर्थस्वरबिन्दुयुक् ।
र(न)कारजलपृथ्व्यर्ध(र्थ)चतुर्थस्वरबिन्दुयुक् ॥ ३६

वायव्यमिन्द्रबीजस्थं षष्ठस्वरसबिन्दुकम् ।
द(झ)काररववर्णाढ्यं चतुर्थस्वरबीज(बिन्दु)युक् ॥ ३७

ईशेन्द्रपृथ्वीवरुणषष्ठस्वरसबिन्दुयुक् ।
द्राविणीकालदहनरविस्वरसबिन्दुयुक् ॥ ३८

संवर्तजीवदहन चतुर्थस्वरबिन्दुयुक् ।
इति मन्त्राष्टकं देवि वशिन्यादिकमीरितम् ॥ ३९

उक्तस्थानेषु विन्यस्य वर्गा(र्णा)नुक्रमयोगतः ।
शिरोललाटभ्रूमध्यकण्ठहृन्नाभिगोचरे ॥ ४०

आधारे व्यूहकाख्ये तु न्यासमष्टभिराचरेत् ।
न्यासान्तराणि सर्वाणि तत्र तत्र निगद्यते ॥ ४१

इति ते कथितो देवि मन्त्रयन्त्रविधिक्रमः ।
गुरुकारुण्यतो लब्ध्वा सद्य एव सुखी भवेत् ॥ ४२

इति सौभाग्यचिन्तामणौ पूर्वखण्डे नवमः पटलः ॥

## दशमः पटलः ।

### श्री चक्रप्रतिष्ठाविधिः

चक्रप्रतिष्ठां वक्ष्यामि यथावत् शृणु सुन्दरि ।
हेमं वा राजतं ताम्रं सर्वयुक्तमथापि वा ॥ १

नवरत्नमयं वापि शिलादारुज(पाषाणं दारु)मेव च ।
पञ्चगव्येन संशोध्य पट्टं प्रक्षाळयेज्जलैः ॥ २

गायत्रीसंख्ययाङ्गुल्या भूमिचक्रं समालिखेत् ।
यजमानस्य जन्मर्क्षवशाद्वा देशिकस्य वा ॥ ३

त्रिकोणाङ्कितयोनिं वा नवयोन्यात्मकं तु वा ।
सम्यकु(संख्ये) चक्रं समालिख्य पञ्चगव्येऽधिवासयेत् ॥४

वास्तुहोमं पुरः कृत्वा ततो वास्तुबलिं चरेत् ।
पुण्याहं वाचयित्वाऽऽदौ रक्षोघ्नैः प्रोक्षयेत्कुशैः ॥ ५

तत्तद्दिक्षु च दिक्पालान् पूजयेद्विधिवत्प्रिये ।
आजलान्तं महीं खात्वा भूसूक्तेनैव मन्त्रतः ॥ ६

सजलाभिश्च शुद्धाभिः सिकताभिः प्रपूरयेत् ।
नवरत्नानि संगृह्य श्रीसूक्तेनाभिमन्त्र्य च ॥ ७

ग्रहाणां मन्त्रतो वापि स्थापयेन्मूलमन्त्रतः ।
ततः कुम्भान् समादाय तन्मन्त्रेण च देशिकः ॥ ८

संस्थाप्य मूलमन्त्रेण पुण्याहं वाचयेत्ततः ।
आधारशक्तिमन्त्रेण पञ्चगव्यादिभिजलैः ॥ ९

प्रक्षाल्य विन्यसेत्तत्र तन्मन्त्रेणैव देशिकः ।
दीक्षात(म)न्त्रोक्तमार्गेण वक्ष्यमाणेन सुन्दरि ॥ १०

कृत्वा तद्द्वारपालादि यजनं बलिकर्म च ।
कुम्भानां स्थापनं तद्वद्धोमकर्मविधिस्तथा ॥ ११

सुमुहूर्ते सुलग्ने च स्थापयेच्चक्ररूपिणीम् ।
आत्वाहारिषमित्यृग्भिः प्रतिष्ठा(ध्रुवा)सीति मन्त्रतः ॥ १२

ततः कुम्भान्समादाय तत्तन्मन्त्रेण देशिकः ।
अभिषिञ्चेन्महाचक्रं महाश्रीत्रिपुरामयम् ॥ १३

महाहविर्निवेद्याथ षड्रसैस्तु समन्वितम् ।
पूर्ववद्देवि सान्निध्यं संप्रार्थ्य परमेश्वरीम् ॥ १४

प्रतिष्ठातन्त्रवद्राजा गुरवे दक्षिणां दिशेत् ।
तच्चक्रं त्रिगुणोत्सेधं चतुःपञ्चगुणं तु वा ॥ १५

श्रीचक्र(तदेव)मूलमानं तु कृत्वान्यान्यपि कारयेत् ।
इति ते कथितं सम्यक् श्रीचक्रस्थापनं प्रिये ॥ १६

मूलबेरार्धमात्रं स्यादुत्सवं परिकीर्तितम् ।
उत्सवस्यार्धमात्रं तु बलिबेरं प्रकीर्तितम् ॥ १७

बलिबेरार्धमात्रन्तु स्नपनीयमपि प्रिये ।
इदं सामान्यतः प्रोक्तं विशेषविधिरुच्यते ॥ १८

यत्राधिकं भवेन्मूलं कर्तुर्वा देशिकस्य वा ।
मूलार्धमुत्सवं चेति नियमो नास्ति सुन्दरि ॥ १९

न षोडशाङ्गुलन्यूनं न प्रादेशचतुष्टयात् ।
अधिकं नोत्सवं कुर्यात्तत्रायव्ययकल्पना ॥ २०

आयाधिकं भवेद्ग्राह्यं बिम्बेषु निखिलेष्वपि ।
यत्र वा द्विभुजं मूलं चतुर्भुजमथापि वा ॥ २१

षडष्ट(द्वादश)षोडशभुजं अथवा यत्र संस्थितम् ।
चक्राङ्कमुद्रितं वापि यत्र यत्र प्रदृश्यते ॥ २२

उत्सवादीनि बिम्बानि चतुर्हस्तानि कारयेत् ।
सृष्टिकं नोत्सवं कुर्यान्न संहारकरं तथा ॥ २३

स्थितिरूपं चतुर्हस्तमुत्सवादिषु शस्यते ।
सर्वावयवसम्पूर्णं सर्वभूषणभूषितम् ॥ २४

पाशाङ्कुशेक्षुकोदण्डपञ्चबाणलसत्करम् ।
सुधांशुचारुमकुटं समदृष्टिमनोहरम् ॥ २५

एवमुक्तप्रकारेण बिम्बपञ्चकमम्बिके ।
प्रतिष्ठाविधिमेतेषां मूलबिम्बवदाचरेत् ॥ २६

शङ्खचक्रान्वितं यागं विनान्यत्पञ्चकं समम् ।
य इदं शृणुयान्नित्यं सर्वान्कामानवाप्नुयात् ॥ २७

श्रीसौभाग्यचिन्तामणौ पूर्वखण्डे दशमः पटलः ॥

## एकादशः पटलः ।

### बलिपीठप्रतिष्ठाविधिः

बलिपीठप्रतिष्ठां च कथयामि यथाक्रमम् ।
चतुर्विंशतिसंख्यानि बलिपीठानि पार्वति ॥ १

तत्राष्टपीठमध्येषु विलिखेत्कर्णिकोदरम् ।
मध्यादि वह्निगेहं च वृत्तं भूभवनं क्रमात् ॥ २

प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
पूर्वे त्रिकोणषट्कोणवृत्तभूभवनान्वितम् ॥ ३

आग्नेये साग्निभूगेहं दक्षिणे सार्धचन्द्रकम् ।
नैर्ऋतेऽष्टाब्जवृत्ताङ्कं पश्चिमेऽष्टारवृत्तकम् ॥ ४

वायौ षट्कोणवृत्तं स्यादुदीच्यां व्योमवृत्तकम् ।
ईशे वह्न्यश्रवृत्तं च क्रमेणैव प्रकीर्तितम् ॥ ५

द्वितीयावरणं प्रोक्तं तृतीयावरणं शृणु ।
आदिवद्वा(च्चा)ब्जसंयुक्तं तृतीयावृतिलाञ्छनम् ॥ ६

प्रधानबलिपीठं तु मूलबिम्बसमुच्छ्रितम् ।
लसत्त्रिकोणषट्कोणवृत्तभूभवनान्वितम् ॥ ७

पीठलाञ्छनमाख्यातमुच्यते बलिदेवताः ।
प्रथमावरणे पूर्वं जम्भिनी पीठदेवता ॥ ८

आग्नेयादिचतुर्दिक्षु योगिन्यः कथिताः प्रिये ।
जया च विजया चैव भद्रा चैव च सुप्रभा ॥॥ ९

वायुसोमेशकाष्ठासु काळी दुर्गा च चण्डिका ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ १०

अग्रे तु कुरुकुल्ला स्यात् सर्वे देवगणास्तथा ।
वटुकः पितरो विघ्नो महाशास्ता च चण्डिका ॥ ११

विघ्नभूताः (तः) क्षेत्रपाश्च द्वितीयावरणे स्थिताः ।
द्वितीयावरणं प्रोक्तं तृतीयावरणं शृणु ॥ १२

तृतीयावरणस्याग्रे मनोन्मन्यत्र देवता ।
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ॥ १३

शङ्कुकर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठितः ।
सेन्द्राद्या वा निरिन्द्राद्यास्तृतीयावरणे स्थिताः ॥ १४

सर्वे भूताश्च वर्तन्ते महापीठाग्रतः सदा ।
अष्टपत्राम्बुजाकारं उन्नतं बलिपीठकम् ॥ १५

अङ्गशक्तिसमायुक्ता पीठमध्ये मनोन्मनी ।
आकाशभूतलोकानां देवानामपि मातरः ॥ १६

महादिक्षु (पूर्वादिषु) स्थिता ह्येता जयाद्याः कोणसंस्थिताः ।
जया च विजया चैव सुभद्रा सर्वमङ्गला ॥ १७

मण्टपं कल्पयित्वाऽऽदौ प्रपां वापि मनोहराम् ।
वेदिं कृत्वा तदन्ते तु स्थण्डिलं तत्र कारयेत् ॥ १८

भारद्वितयसङ्ख्याकैः शालिभिस्तण्डुलैस्तिलैः ।
कुण्डानि परितः कुर्यान्नव पञ्चैकमेव वा ॥ १९

प्राणानायम्य सङ्कल्प्य पुण्याहं वाचयेत्ततः ।
तन्मध्ये स्थण्डिलं कृत्वा तत्र श्रीचक्रमालिखेत् ॥ २०

तन्मध्यमे महाकुम्भं सर्वलक्षणसंयुतम् ।
चतुर्विंशतिकुम्भान्वा स्थापयेत्परितः क्रमात् ॥ २१

मध्ये देवीं समावाह्य परितो बलिदेवताः ।
पूजयेद्गन्धपुष्पाद्यैश्चतुर्थ्यन्तैः स्वनामभिः ॥ २२

परितो दिक्पतीनिष्ट्वा द्वारपालाश्रया(पा)नपि ।
अग्निं संस्कृत्य विधिवत् मूलेनाष्टसहस्रकम् ॥ २३

तत्तन्मन्त्रैः शतं हुत्वा नैवेद्यं परिकल्पयेत् ।
आत्माष्टाक्षरमन्त्रेण हुनेत्पूर्णाहुतिं ततः ॥ २४

परमात्मा चतुर्थ्यन्तः स्वाहान्तस्तारसंयुतः ।
आत्माष्टाक्षरमन्त्रोऽयं कर्मपूर्तिविधायकः ॥ २५

ततः कुम्भान् समुद्धृत्य मध्यकुम्भशुभान्वितम् ।
प्रदक्षिण(प्रादक्षिण्य)क्रमेणैव तत्तत्स्थानेऽभिषेचयेत् ॥ २६

मध्यकुंभेन वा (भांभसा) देवीं प्रोक्षयेन्मूलमन्त्रतः ।
मण्टपावरणं देवि बलिपीठं न कारयेत् ॥ २७

तत्तत्पीठे बलिं दद्यात्तत्तन्मन्त्रमुदीरयन् ।
सायं प्रातश्च देवेशि भक्तिश्रद्धासमन्वितः ॥ २८

तेषु नित्यबलिं दद्यात् देशिकस्तन्त्रपारगः ।
गुरुं सम्प्रीणयेद्यत्नाद्वस्त्रहेमाङ्गुलीयकैः ।
एवं यः स्थापनं कुर्यात् सर्वान्कामानवाप्नुयात् ॥ २९

इति सौभाग्यचिन्तामणौ पूर्वखण्डे एकादशः पटलः ॥

## द्वादशः पटलः ।

### खेटकप्रतिष्ठाविधिः

खेटकस्य प्रतिष्ठां च कथयामि समासतः ।
पुरतस्साधको देव्याः पुण्याहं वाचयेत्ततः ॥ १

संप्रोक्ष्य चास्त्रमन्त्रेण गोमयालिप्तभूतलम् ।
तत्र धान्यं परिस्तीर्य द्रोणत्रितयसंख्यकैः ॥ २

तण्डुलैश्च तिलैश्चैव साष्टपत्राम्बुजं लिखेत् ।
त्रिकोणान्तं न्यसेत्कुम्भं देवतापीठविग्रहम् ॥ ३

महामण्डूककालाग्निरुद्रावाधारशक्तिकाम् ।
कूर्मं च नागराजं च पृथिवीममृतार्णवम् ॥ ४

तन्मध्ये कल्पकोद्यानं कदम्बवनमन्ततः ।
तन्मध्ये हेमशैलं च रत्नमण्टपमन्ततः ॥ ५

रत्नसिंहासनं चैव तन्मध्ये परिचिन्तयेत् ।
धर्मं ज्ञानं च वैराग्यं पूर्वाद्यैश्वर्यमेव च ॥ ६

अज्ञानमप्यवैराग्यं अनैश्वर्यं तथापरम् ।
सत्वं रजस्तमश्चैव वह्नीशानाम्बुषु क्रमात् ॥ ७

तथा चन्द्रस्य सूर्यस्य हुताशस्य च मण्डलम् ।
संपूज्य च वशिन्याद्याः यजेदष्टसु दिक्षु च ॥ ८

आसनानि महा(यजेद्)देव्याः तत्तन्मन्त्रैस्तथोपरि ।
पीठं चैव महादेव्याः पीठमन्त्रेण पूजयेत् ॥ ९

''नमः सिंहमुखे देवि महापीठस्वरूपिणि ।
नमस्ते त्रिपुरवासे सुस्थितिं कुरु सर्वदा'' ॥ १०

इति पीठार्चनं कृत्वा कुण्डे वा स्थण्डिलेऽपि वा ।
अग्निं संस्कृत्य विधिवत्समिदाज्यचरून् हुनेत् ॥ ११

अष्टोत्तरशतं हुत्वा संपाताज्यं च कारयेत् ।
अथ शुद्धार्घ्यमादाय यानं संप्रोक्ष्य बालया ॥ १२

तत्वत्रयेण च तथा पञ्चगव्येन देशिकः ।
प्राणप्रतिष्ठां विधिवत् कृत्वा कुम्भे यजेत्ततः ॥ १३

अभ्यर्च्य गन्धपुष्पाद्यैः नैवेद्यं च निवेदयेत् ।
बलिं च परितो दद्यात्कुम्भस्य परमेश्वरि ॥ १४

संपाताज्येन मूलेन पुनश्शुद्धोदकेन च ।
प्रक्षाळ्य गन्धपुष्पाद्यैः पूजयेत्पीठदेवताम् ॥ १५

पाणिभ्यां कुम्भमुद्धृत्य नृत्तगीतपुरस्सरम् ।
श्रीपीठं त्रिः परिक्रम्य प्रादक्षिण्येन पार्वति ॥ १६

पीठमन्त्रं समुच्चार्य पीठमध्येऽभिषेचयेत् ।
दारुसंग्रहणे पादं फलका ह्यर्धशक्तिका ॥ १७

अर्चने तु त्रिपादं स्यादभिषेके तु पूर्णता ।
सुमुहूर्ते सुलग्ने च स्थापयेत्परमेश्वरीम् ॥ १८

इति सौभाग्यचिन्तामणौ पूर्वखण्डे द्वादशः पटलः ॥

## त्रयोदशः पटलः ।

### रथप्रतिष्ठाविधिः

रथप्रतिष्ठां वक्ष्यामि सर्वकामार्थसिद्धये ।
उत्तमं सर्ववाहेषु सर्वदेवप्रियङ्करम् ॥ १

रथाग्रे मण्डपं कृत्वा प्रपां वापि मनोहराम् ।
पञ्चगव्येन संस्नाप्य विधिदृष्टेन कर्मणा ॥ २

अलङ्कृत्याथ संकल्प्य बहुभिर्ब्राह्मणैस्सह ।
पुण्याहं वाचयित्वाऽथ कुर्यादङ्कुरकौतुकम् ॥ ३

अक्षेषु च वरूधे च कौतुकं परिकीर्तितम् ।
न कुर्यादङ्कुरं देवि पुराणस्यन्दनेषु तु ॥ ४

मण्टपं नवधा कृत्वा मध्यभागे तु वेदिकाम् ।
कुण्डानि परितः कुर्यान्नव पञ्चैकमेव वा ॥ ५

तत्र स्थण्डिलमाकल्प्य चतुर्द्रोणशिवैर्यवैः ।
तण्डुलैश्च तिलैर्युक्तैर्नवकुम्भान् प्रविन्यसेत् ॥ ६

प्रतिमां वस्त्रसंयुक्तां कुशकूर्चसमन्विताम् ।
नृसिंहमूलमन्त्रेण वाहमावाह्य मध्यमे ॥ ७

यो वाग्रे संस्थितो वाहस्तन्मन्त्रेण समावहेत् ।
पूजयेद्गन्धपुष्पाद्यैः परितो दिक्पतीनपि ॥ ८

अग्निं संस्कृत्य विधिवत्समिदाज्यचरून् पृथक् ।
नृसिंहबीजमन्त्रेण शतमष्टोत्तरं हुनेत् ॥ ९

अङ्गाग्निष्वङ्गमन्त्रैश्च हुनेदष्टौ च विंशतिः ।
ततः पूर्णाहुतिं हुत्वा पुण्याहं वाचयेत्ततः ॥ १०

हविर्निवेदनं कृत्वा परितो बलिमर्पयेत् ।
शान्तिसूक्तं जपित्वा तु प्रोक्षयेत्कुम्भवारिणा ॥ ११

गुरवे दक्षिणां दद्याद्यथावित्तानुसारतः ।
बृहस्पते परीत्यृचा रथमभ्यर्चयेत्ततः ॥ १२

सुमुहूर्ते सुलग्ने च देवीमारोपयेद्रथम् ।
गजोऽसि गर्वितो ज्यायान् जेता जलधिसंभवः ॥ १३

चित्रमाप्यायस्वेति मण्डले चन्द्र(सोम)सूर्ययोः ।
ब्रह्मादीनां तु ये वाहा हंसतार्क्ष्यवृषादयः ।
वाहनार्थे तु कथिता महादेव्या महोत्सवे ॥ १४

इति सौभाग्यचिन्तामणौ पूर्वखण्डे त्रयोदशः पटलः ॥

## चतुर्दशः पटलः ।

### ध्वजप्रतिष्ठाविधिः

ध्वजप्रतिष्ठां वक्ष्यामि संक्षेपेण महेश्वरि ।
लक्षणं ध्वजदण्डस्य पटस्य शृणु सुन्दरि ॥ १

एकविंशतिभिर्हस्तैः संयुक्तं सारदारुजम् ।
हेमरत्नैर्विरचितं उत्तमं दण्डमुच्यते ॥ २

कुर्यादेकोनविंशत्या हस्तसप्तदशेन वा ।
नवपञ्चदशान्यूनं ध्वजदण्डं तु कारयेत् ।। ३

हेमकच्छपपृष्ठेषु दण्डं बध्वाऽऽलयाग्रतः ।
तदादौ कारयेद्वेदिं शिलया सुधयापि वा ।। ४

त्रिहस्तोच्छ्रायविस्तारं मध्यपञ्चसमन्वितम् ।
क्षौमाद्यैरप्यलङ्कृत्य परितो दर्भमालया ।। ५

पञ्चताळायतं क्षौमं आदण्डं नववस्त्रकम् ।
दण्डात्पादविहीनं च सप्तहस्तं तु मध्यमम् (मानतः)।। ६

दण्डार्धयामसंयुक्तं पञ्चहस्तं प्रविन्यसेत् ।
एवं ध्वजपटं प्रोक्तं ध्वजरज्जुरिहोच्यते ।। ७

क्षौमैः कार्पासजैर्वापि अष्टोत्तरसहस्रकैः ।
सूत्रैः रज्जुं दृढं कृत्वा लम्बयेद्यन्त्रितो गुरुः ।। ८

दीपाधारद्वयं चादौ मध्ये सिंहो मनोहरः ।
अग्रे तु पूर्णकुम्भं च चामरद्वितयान्वितम् (यं पुनः)।।९

प्रान्तयोरङ्कुशादर्शौ शङ्खभेर्यौ तदन्तरे ।
रमां च स्वस्तिकं चैव लेखयित्वा तदन्तरे ।। १०

ये वाग्रे संस्थितो वाहस्तं वाहं वा पटे लिखेत् ।
गौर्यादिमूल(पञ्च)बेराणां मूलबेरं तु यद्भवेत् ।। ११

तमग्रे तद्ध्वजो वापि तत्तद्वाहः प्रकीर्तितः ।
नवहस्तोच्छ्रितं वस्त्रं पञ्चताळायतं नवम् ।। १२

पूर्वेद्युः शिल्पिनो हस्तात्पटमादाय देशिकः ।
निधाय धान्यद्रोण्यां(णे) तु नयनोन्मीलनं चरेत् ।। १३

पुण्याहं वाचयित्वाथ स्थण्डिलं कल्पयेत्पुनः ।
द्रोणद्वितयसंख्यैश्च शालिभिस्तण्डुलैस्तिलैः ॥ १४

पुण्याहसलिलैः प्रोक्ष्य मन्त्रोन्मीलनमाचरेत् ।
अङ्कुरं पूर्ववत्कृत्वा नववस्त्रसमन्वितान् ॥ १५

नव कुम्भांस्तु संस्थाप्य मध्ये सिंहं समर्चयेत् ।
परितो दिक्पतींश्चापि तत्तन्मन्त्रैः समर्चयेत् ॥ १६

नृसिंहमूलमन्त्रेण कृत्वा कौतुकबन्धनम् ।
''त्रिपुराध्वजसिंहाय देवीविग्रहधारिणे ॥ १७

नमो भीषणरूपाय जगतः शान्तिहेतवे'' ।
इति मन्त्रेण जुहुयात् संस्कृते हव्यवाहने ॥ १८

समिदाज्यचरूंश्चापि अष्टोत्तरशतं हुनेत् ।
इन्द्रादिभ्यः ततः पश्चात् हुनेदष्टौ च विंशतिः ॥ १९

अभ्यर्च्य गन्धपुष्पाद्यैरधिवासं च कारयेत् ।
प्राणप्रतिष्ठां विधिवत्कृत्वा कुम्भजले ततः ॥ २०

कुशमूलैस्स्पृशेत्पादं कुशमध्येन मध्यकम् ।
कुशाग्रैश्च शिरो जप्त्वा तावद्धोमं विधाय च ॥ २१

अभ्यर्च्य गन्धपुष्पाद्यैर्नैवेद्यं च निवेदयेत् ।
बलिं च परितो दत्वा कुम्भानां परमेश्वरि ॥ २२

धूपदीपादिकं दत्वा गन्धपुष्पादिनार्च्य च ।
कुम्भांभसा ततः कुर्यात् प्रोक्षणं ध्वजमन्त्रतः ॥ २३

इति प्रतिष्ठां कृत्वा तु देव्यग्रे धारयेद्ध्वजम् ।
अनेनैव तु मन्त्रेण प्रतिष्ठामंकुशस्य च ॥ २४

कृत्वा क्रोमिति मन्त्रेण देव्यग्रे विनिवेशयेत् ।
तद्वद्घण्टाप्रतिष्ठा स्याद्घण्टा नादस्वरूपिणी ।
तारादिवह्निजायान्तो घण्टामनुरुदाहृतः ॥ २५

इति सौभाग्यचिन्तामणौ पूर्वखण्डे चतुर्दशः पटलः ॥

## पञ्चदशः पटलः ।

**प्रासादप्रतिष्ठाविधिः**

प्रासादस्य प्रतिष्ठां च कथयामि समासतः ।
प्रासादस्याग्रतः कृत्वा मण्टपं तु मनोहरम् ॥ १

अङ्कुरं पूर्ववत्कृत्वा विशेषोऽस्त्यत्र कौतुके ।
एकाशीतिगुणं सूत्रं प्रासादादि प्रमाणकम् ॥ २

क्षौमं वा पट्टजं वापि कार्पासजमथापि वा ।
कुम्भद्वादशकं न्यस्य पूर्वोक्तेनैव वर्त्मना ॥ ३

परितस्तु वशिन्यादीः कामवज्रभगेश्वरीः ।
प्रतिमावस्त्रधान्यादीन् पूर्ववत्स्थापये(कारये)त्प्रिये ॥ ४

कुम्भं संस्थाप्य विधिवत् प्रासादं रन्ध्रवर्जितम् ।
वस्त्रैः क्षौमादिभिर्वेष्ट्य कुर्यादग्निमुखं ततः ॥ ५

हुनेत्पालाशकुसुमैस्तत्समिद्भिरथापि वा ।
अष्टोत्तरसहस्रं तु पायसेन घृतेन च ॥ ६

अङ्गाग्निष्वङ्गशक्तीनां अष्टोत्तरशतं हुनेत् ।
अष्टाविंशतिसंख्याकसमिदन्नघृतैः क्रमात् ॥ ७

पूजयेच्च परां शक्तिं चतुर्यामेषु देशिकः ।
वेदपारायणं कुर्यात् चतुर्दिक्षु यथाक्रमम् ॥ ८

रात्रौ जागरणं कुर्यात् तत्सू(श्रीसू)क्तश्रवणादिभिः ।
कृतपूर्वाह्निकः प्रातः देव्याः पूजां विधाय च ॥ ९

होमं च विधिवत्कुर्यात् पृथगष्टोत्तरं शतम् ।
वासांसि तस्मादुन्मुच्य बलिकर्म समाचरेत् ॥ १०

ततः कुम्भान् समुद्धृत्य स्नापयेत्प्रोक्षयेच्च वा ।
ब्राह्मणान् भोजयेत्पश्चाद्यथाविभवविस्तरम् ॥ ११

अत्रोपयुक्तद्रव्याणि धान्यानि वसनानि च ।
आचार्याय प्रदेयानि सर्वदेवमयाय च ॥ १२

एवं यः कुरुते भक्त्या प्रासादस्थापनं प्रिये ।
सर्वपापविनिर्मुक्तः सर्वेषामपि नायकः ।
पुत्रपौत्रादिसहितो ब्रह्मसायुज्यमश्नुते ॥ १३

इति सौभाग्यचिन्तामणौ पूर्वखण्डे पञ्चदशः पटलः ॥

## षोडशः पटलः ।

### अङ्गदेवतार्चनविधिः

श्रीदेव्युवाच—

देवदेव महादेव सर्वज्ञ करुणाकर ।
साङ्गमभ्यर्चनं श्रेष्ठं भवता तु पुरोदितम् ॥ १

कीदृशानि तु नामानि तासां रूपाणि किं तु वा ।
मन्त्राणि कीदृशान्यासां अर्चनं वा तु किं प्रभो ॥ २

ईश्वर उवाच—

शृणु देवि महाभागे यन्मां त्वं परिपृच्छसि ।
केवलं चाङ्गसंयुक्तं यजनं द्विविधं मतम् ॥ ३

आत्मार्थे केवलाम्बां वा साङ्गां वा पूजयेच्छिवे ।
साङ्गमभ्यर्चनं देव्याः परार्थे तु प्रकीर्तितम् ॥ ४

अनङ्गबिम्बमात्मार्थं साङ्गं बिम्बमथालयम् ।
पञ्चाङ्गसहिता शक्तिः सर्वाभीष्टफलप्रदा ॥ ५

अङ्गत्रययुता वापि केवला तु न शस्यते ।
तत्र कामेश्वरीपृष्ठे देवीसदृशविग्रहा ॥ ६

कुन्देन्दुधवळाकारा शुक्लमाल्यानुलेपना ।
मुक्तादामविभूषाङ्गी चित्राभरणधारिणी ॥ ७

इक्षुकोदण्डबाणांश्च पुस्तकं चाक्षमालिकाम् ।
वामे वज्रेश्वरी देवी श्यामा विद्युन्निभाम्बरा ॥ ८

वज्राभयधनुर्बाणान् बिभ्राणा हेमभूषणान् ।
दक्षिणे सुभगा देवी भगलिङ्गगुणांकुशान् ॥ ९

बिभ्राणा सप्तहेमाभा सर्वाभरण भूषिता ।
दक्षिणे च महालक्ष्मीः तप्तकाञ्चनसन्निभा ॥ १०

पद्मयुग्माभयवरान् धारयन्ती मनोरमा ।
वामे वाणीन्दुकुन्दाभा पुस्तकाक्षवराभयान् ॥ ११

बिभ्राणा सर्वभूषाढ्या सर्वविद्याधिदेवता ।
स्थिता वापि समा(पद्मासना)सीनाः कारयेदङ्गशक्तिकाः ॥ १२

समासीना महालक्ष्मीस्तथा चैव सरस्वती ।
जया च विजया चैव प्रथमद्वारपालिके ॥ १३

नीलोत्पलदळाभासा पटबद्धशिरोरुहा ।
गदां च तर्जनीमुद्रां बिभ्राणा पाशमंकुशम् ॥ १४

सार्धोरुकं च वसनं वृत्तनेत्रत्रयोज्ज्वला ।
सदंष्ट्रा भीमवदना जया स्याद्दक्षिणे स्थिता ॥ १५

सव्ये तु विजया नाम्ना भिन्नाञ्जनचयोपमा ।
तद्वल्लक्षणसंयुक्ता बद्ध(स्निग्ध)वक्षोजमण्डला ॥ १६

शङ्खपद्मनिधी चोभौ द्वितीयद्वारपालकौ ।
शङ्खश्च रुचिराभासः सर्वाभरणभूषितः ॥ १७

पीतकौशेयवसनः पूर्णेन्दुरुचिराननः ।
वाञ्छितार्थदुघं(ह्नं) पात्रं सुधापात्रं तथाऽक्षयम् ॥ १८

बिभ्राणः सर्वभूषाढ्यः स्रग्वी हारीन्दिरामयः ।
दक्षिणे स्थापनीयः स्यात्सर्वाभ्युदयहेतवे ॥ १९

वामे हेमाब्जसङ्काशो निधिः पद्माब्जलोचनः ।
हेमाब्जमालाभरणः सर्वाभरणभूषितः ॥ २०

दक्षिणे रत्नसंपूर्णकुम्भं वामेऽथ पङ्कजम् ।
दधानो जनिताशेषमङ्गळोल्लासिवीक्षणः ॥ २१

भैरवो भैरवी चौभौ तृतीयद्वारपाळकौ ।
तप्तकाञ्चनसच्छायः सार्धोरुवसनान्वितः ॥ २२

नवरत्नमयं पात्रं शूलं दण्डं वरप्रदम् (तथा वरम्) ।
स दधानो जटी भीमः किङ्किणीमालयोज्ज्वलः ॥ २३

सव्ये तु नवहेमाभा सर्वाभरणभूषिता ।
त्रिशूलं तर्जनीं मुण्डं घण्टां च दधती करैः ॥ २४

सार्धोरुपीतवसना दृढबद्धशिरोरुहा।
उत्तरेशानयोर्मध्ये द्वितीयावरणे स्थिता ॥ २५

श्यामा पद्मपलाशाक्षी मन्दस्मितमुखाम्बुजा ।
वीणापुस्तलसद्बाहा सर्वविद्याधिदेवता ॥ २६

सर्वशृङ्गारवेषाढ्या श्यामळा नाम सुन्दरी ।
तृतीयावरणे तद्बद्वार्ताली नाम संस्थिता ॥ २७

श्यामळा कोलवदना सर्वाभरणभूषिता ।
शङ्खं चक्रं च मुसलं हलं च दधती करैः ॥ २८

सर्वभूतैः परिवृता संस्थिता दण्डनायिका ।
ब्राह्म्याद्या मातरो दुर्गा महाशास्ता गणेश्वरः ॥ २९

इन्द्रादिलोकपालाश्च तृतीयावरणे स्थिताः ।
मन्त्राणि चासां वक्ष्यामि सर्वसिद्धिकराणि ते ॥ ३०

कामेश्वरी कामदात्री कल्याणी कामरूपिणी ।
तारश्रीशक्तिमाराद्यैश्चतुर्थ्यन्तैर्हृदा सह ॥ ३१

कामेश्वर्यादिकानां तु प्रोक्तं सर्वसमृद्धिदम् ।
वज्रेश्वरी वज्रधा(ध)रा वरदा वन्दनप्रिया ॥ ३२

भगमाला तु सुभगा भग(भाग्य)दा भग(भाग्य)रूपिणी ।
लक्ष्मीः श्रीः कमला पद्मा दुर्गा काल्यम्बिका शिवा ॥ ३३

वीणाविनोदिनी वाणी वीरवन्द्या विधिप्रिया ।
जया जयन्ती जयिनी ज्यायसी च जयप्रदा ॥ ३४

विजया विमला पीता वीर्यदा वृद्धिदेत्यपि(वित्तवृद्धिदा) ।
शङ्खः शङ्खनिधिः शान्तिः शान्तिदः शङ्करश्च सः ॥ ३५

पद्मः पद्मनिधिः पालः पद्ममाली परा(लापरोऽ)र्थदः ।
भैरवो भद्रको भीमो भद्राङ्गो भद्रदायकः ॥ ३६

भैरवी भद्रकाली च भूताङ्गा भूतनायिका ।
तारश्रीशक्तिमाराद्यैर्नामभिः स्वैर्हृदा सह ॥ ३७

पूजयेद्द्वारपालांश्च गन्धपुष्पाक्षतादिभिः ।
नमो भगवतीत्युक्त्वा मतङ्गकुलनायिके ॥ ३८

नादब्रह्ममये देवि सर्वां सिद्धिं प्रयच्छ मे ।
एतन्मन्त्रवरं देवि श्यामलारूपमास्थितम् ॥ ३९

समस्तविद्यानिलयं सर्वैश्वर्यप्रदायकम् ।
स्मरणादर्चनाद्धोमात् सर्वेषामिष्टसिद्धिदम् ॥ ४०

अनेन यजनं कुर्याच्छ्यामळां सर्वसिद्धये ।
"नमो वराहवदने वार्ताळी नाम ई(धी)श्वरि ॥ ४१

सर्वसिद्धिप्रदे देवि सर्वां सिद्धिं प्रयच्छ मे ।"
एतन्मन्त्रवरं देवि वार्ताळीरूपमास्थितम् ॥ ४२

सर्वशत्रुक्षयकरं सर्वापद्विनिवारणम् ।
भूतप्रेतपिशाचादिभवभीतिविनाशनम् ॥ ४३

अनेन यजनं कुर्यात् सर्वभूताधिदेवताम् ।
ब्राह्म्याद्या मातरो दुर्गा महाशास्ता गणेश्वरः ॥ ४४

इन्द्राद्या लोकपालाश्च पूजनीयाः स्वनामतः ।
स्वरूपमक्षमङ्गं च तदंशं तनुरेव च ॥ ४५

भृत्याश्चाखिलदेवानां षोढावरणदेवताः ।
पञ्चैव तु पराशक्तेरुदितं ब्रह्मवादिभिः ॥ ४६

वागाद्यन्तं स्वरूपं स्यात्कामेश्याद्यक्षमुच्यते ।
अङ्गमस्या वशिन्याद्या वार्ताली श्यामलांशके ॥ ४७

चण्डिकाद्याश्च याश्चान्याः शक्तयो लोकसंमताः ।
सर्वसिद्धिप्रदायिन्यः स्वातन्त्र्ये पर्यवस्थिताः ॥ ४८

तनुभूताः पराशक्तेः दृश्यन्ते या जगत्त्रये ।
एवमङ्गार्चनं प्रोक्तं सर्वसिद्धिप्रदायकम् ॥ ४९

सर्वमृत्युप्रशमनं महापापनिकृन्तनम् ।
चक्रे वा नवयोन्यां वा कुम्भे वा केवलार्चनम् ॥ ५०

आत्मार्थयजनं कुर्याद्देव्याः सर्वोपचारकैः ।
न्यासमुद्रादिकं कृत्वा होमोत्सवबलिं विना ॥ ५१

इति सौभाग्यचिन्तामणौ पूर्वखण्डे षोडशः पटलः ॥

## सप्तदशः पटलः ।

### वाहनलक्षणम्

श्रीदेव्युवाच—

देवदेव महादेव सर्वज्ञ करुणाकर(निधे) ।
स्थापनं वाहनानां च श्रुतं तु भवतः प्रभो ॥ १

वाहनानि पुरोक्तानि मृगेन्द्रादीनि पञ्च च ।
तावन्ति सन्ति वान्यानि वाहानि वदतां वर ॥ २

एतं मे संशयं देव छेत्तुमर्हसि शङ्कर ।
ईश्वर उवाच—
शृणु देवि महाभागे यन्मां त्वं परिपृच्छसि ॥ ३

सर्वासां देवतानां च वाहनानि द्विधोच्यते ।
प्रधानमप्रधानं च द्विविधं कथितं बुधैः ॥ ४

शक्तिप्राधान्यभावाच्च मृगेन्द्रादीनि पञ्च च ।
मुख्यानि तानि वाहानि कथितानि मया पुरा ॥ ५

सामान्याकारतस्तानि शृणु वक्ष्यामि भामिनि ।
कथ्यन्ते च द्विधैतानि जीवाजीवविभेदतः ॥ ६

ग्राम्यारण्यविभेदेन जीववाहा द्विधा मताः ।
ग्राम्या गजाश्ववृषभनरमेषाः प्रकीर्तिताः ॥ ७

आरण्याः सिंहशरभद्वीपिताक्ष्र्यमृगोरगाः ।
भावजीवाः प्रभाचन्द्ररविसिंहासनाचलाः ॥ ८

अग्राम्याः कथिता वाहाः सजीवा वा कृतापि वा ।
देशकालान्मृगं श्रेष्ठं कचिद्धन्यास्सचेतनाः ॥ ९

अन्ये हेमादिरचिता वाहास्ते सर्वदा शुभाः ।
जीववाहास्सदा श्रेष्ठाः सर्वदेवेषु चोदिताः ॥ १०

सल्लक्षणाः सदाश्लाघ्याः मध्या मध्यमलक्षणाः ।
ग्राम्येषु चोत्तमा नारी श्रेष्ठो वन्येषु केसरी ॥ ११

ग्राम्यो नित्येषु वाहेषु वन्यो नैमित्तिकेषु च ।
ग्राम्येषु चोत्तमा नारी सिंहो वनभवेषु च ॥ १२

भावजीवेषु वाहेषु श्रेष्ठं सिंहासनं भवेत् ।
अजीवे जीवभावे च जीवन्यासो विधीयते ॥ १३

सजीवा वाप्यजीवा वा ग्राम्यास्स्युश्शुभलक्षणाः ।
दारार्थे वाहनार्थे च दास्यर्थे चालयस्य वा ॥ १४

सलक्षणाः परिग्राह्या नान्याः सद्वंशसम्भवाः ।
स्वस्यैवानिष्टदा भार्या देवकन्यालयात्तु वा ॥ १५

तद्राष्ट्रनाशदाऽग्राह्या यद्यत्सल्लक्षणं ततः ।
शस्ता नान्येषु देवेषु नारी शक्तिप्रधानकी ॥ १६

पूर्वं तस्याः परीक्षेत पश्चात्तां न परित्यजेत् ।
नित्योत्सववहा नारी नैमित्तिकपरः पुमान् ॥ १७

नित्यो बली तु नैमित्तात् तस्मान्नारी पुरोच्यते ।
नखास्ताम्रास्समौ पादौ श्लक्ष्णाङ्गुलिसमन्वितौ ॥ १८

गूढगुल्फपदौ पादतले कमलसन्निभे ।
वज्राङ्कुशौ पाशहलौ नस्वेदावसिरौ मृदू ॥ १९

जङ्घे च रोमरहिते सव्यदक्षे च जानुनी ।
अस्फोटौ विमलौ चोरू विपुलं मदनालयम् ॥ २०

श्रोणीललाटान्तशिरो निगूढं संवृतं मणिः (बहिः) ।
नितम्बो मांसलो यस्या नाभिर्गम्भीरविस्तृतिः ॥ २१

स्तनौ कठिनवृत्तौ च वक्षो रोमविवर्जितम् ।
समा त्रिवलिसंयुक्ता ग्रीवा स्यादुत्तमस्त्रियाः ॥ २२

सूक्ष्मा द्वात्रिंशका दन्ता ओष्ठौ बिम्बसमौ मतौ ।
नासा समा समपुटा दृशौ नीलोत्पलप्रभे ॥ २३

भ्रुवौ बालेन्दुसङ्काशे संहते रोमवर्जिते ।
त्रिवलीकं समं फालं नीलाः सूक्ष्माश्च मूर्धजाः ॥ २४

असिरौ मांसलौ पाणी सुस्निग्धौ रुचिरौ दृढौ(मृदू) ।
पाणौ पादेऽथवा वज्रमत्स्यस्वस्तिकनीरजाः ॥ २५

कलशं चतुरश्रं च कोष्ठं वा सा सुखास्पदा ।
कनिष्ठामूलमारभ्य रेखा प्रादेशिनीं व्रजेत् ॥ २६

सूक्ष्मा सुखवती ज्ञेया चिरायुस्स्थूलया(जा)वना ।
त्रीणि यस्याः प्रलम्बन्ते ललाटमुदरं शिरः ॥ २७

सा पतिघ्नी समाख्याता तथा पारावताक्षिणी ।
उद्भ्रान्ताक्षी कोकिलाक्षा रक्तकेशा च धूसरा ॥ २८

अतिरक्ताऽति कृष्णाऽतिस्थूलदन्तोग्रभाषिणी ।
निर्मांसशुष्कवदना रोगशीलाऽतिलालसा ॥ २९

वर्जयेद्वाहनार्थे तां भार्यार्थे वा द्विजोत्तमः ।
हंसस्वरा मेघवर्णा या नारी रक्तलोचना ॥ ३०

अष्टौ च लभते पुत्रानाप्नोति च महत्सुखम् ।
यस्यास्तु दक्षिणावर्तास्सर्वे चापि प्रदक्षिणाः ॥ ३१

सूक्ष्मरोमा स्निग्धकेशी सौभाग्यफलभाग्भवेत् ।
पादौ सगुल्फौ प्रथमं जङ्घे जानु द्वितीयकम् ॥ ३२

गुह्योरुजघनं पश्चात् कटिनाभिः चतुर्थकम्।
उदरं पञ्चमं प्राहुः हृदयं षष्ठमुच्यते ॥ ३३

सप्तमं समजत्रूणि ओष्ठमष्टममुच्यते ।
नयनं नवमं प्राहुर्दशमं भ्रूललाटकम् ॥ ३४

शिरस्त्वेकादशं प्राहुर्द्वादशं च तथापरे ।
पृथक्सल्लक्षणेष्वेषु जन्माष्टाब्दे फलं लभेत् ॥ ३५

दशसंवत्सरं चान्ये द्वादशाब्दमथापरे ।
एवं स्त्रीलक्षणं प्रोक्तं संक्षेपेणैव भामिनि ॥ ३६

अन्ये गजादयो वाह्याः सुशीला- बलवत्तराः ।
मनोहरास्सुपुष्टाङ्गास्सजीवा लक्षणान्विताः ॥ ३७

सर्वदेवप्रियकरास्सर्वसिद्धिप्रदाः स्मृताः ।
अजीवा जीवभावा वा तत्तल्लक्षणसंयुताः ॥ ३८

लोकसंतोषजनकाः वाह्यास्सर्वफलप्रदाः ।
येषु येषु च बिम्बेषु वाहनेषु गजादिषु ॥ ३९

जायते मानसी तुष्टिः ते वै सल्लक्षणाः स्मृताः ।
उत्सवेषु वरं नित्यं वाहनेषु वराङ्गना ॥ ४०

बिम्बेषु चापबाणाङ्कं प्रातः कालेषु शस्यते ।
तथैव धारयेद्बिम्बमभावे पुरुषैश्च वा ॥ ४१

महोत्सवेषु सर्वेषु वाहनैरेव धार्यते (धारयेत्) ।
ब्रह्मादीनां तु ये वाह्याः हंसतार्क्ष्यवृषादयः ।
वाहनार्थे तु कथिता महादेव्या महोत्सवे ॥ ४२

इति सौभाग्यचिन्तामणौ पूर्वखण्डे सप्तदशः पटलः ॥

## अष्टादशः पटलः ।

### गुर्वर्चकादिलक्षणम्

गुरुत्वादर्चकत्वाच्च निदानत्वाच्च सर्वतः ।
लक्षणं पुरुषाणां च संक्षेपेण मयोच्यते ॥ १

एकं रोमयुतं निम्नं शिरःस्थं यस्य शोभनम् ।
अखण्डवृत्तविस्तीर्णं उत्तमाङ्गं शुभप्रदम् ॥ २

दीर्घं चाप्येकमृदुलकेशयुक्तं शुभप्रदम् ।
पादौ सगुल्फौ प्रथमं जानुजङ्घे द्वितीयकम् ॥ ३

मुष्कोरुमेढ्रकं त्रीणि कटिनाभि चतुर्थकम् ।
हृदयं पञ्चमं प्राहुः स्तनान्तं षष्ठमुच्यते ॥ ४

अंसस्कन्धौ(मूलौ) सप्तमं च ओष्ठं कन्धरमष्टमम् ।
नवमं नयने भूयस्सफालं दशमं शिरः ॥ ५

सर्वे सल्लक्षणा येषां सुखिनस्ते तु सर्वदा ।
पृथक् सल्लक्षणं यस्य यत्रांशो तु प्रदृश्यते ॥ ६

वर्षेषु दशसंख्येषु तस्य तस्य फलं भवेत् ।
मुखमाद्यन्तु देहस्य मुखे सर्वं प्रतिष्ठितम् ॥ ७

तत्रापि नासिका श्रेष्ठा ततो मुख्येऽक्षिणी मते ।
कान्तिस्नैग्ध्याद्बलं चैव क्रमशोत्तरमुच्यते ॥ ८

रक्ताक्षो हेमवर्णश्च दीर्घबाहुश्च मांसलः ।
धनस्त्रीवित्तसौख्यानां भाजनं जायते नरः ॥ ९

चक्षुस्स्नेहेन सौभाग्यं दन्तस्नेहेन भोजनम् ।
त्वचस्स्नेहेन सच्छय्या पादस्नेहेन वाहनम् ॥ १०

शिरोललाटवदनं त्रिविस्तीर्णं प्रशस्यते ।
वक्षः कक्षो नखा नासाः कृकाटी च समुन्नताः ॥ ११

ह्रस्वं च लिङ्गपृष्ठं च ग्रीवा शङ्खं प्रशस्यते ।
नेत्रान्तौ पाणिपादौ च नखताल्वोष्ठकारुणाः ॥ १२

सूक्ष्माणि चाङ्गुलीपर्वदन्तकेशकरोद्भवाः ।
अक्षि पक्ष्म च वक्षश्च घ्राणस्कन्धौ ललाटिका ॥ १३

उन्नतानि षडेतानि शोभनानि प्रशस्यते ।
पादौ स्फिके च पार्श्वे(पाणी) च वृषणे चक्षुषी स्तनौ ॥ १४

कण्ठोष्ठावक्षि जङ्घे च हस्तौ बाहंसकौ तथा ।
चतुर्दश समान्याहुर्द्वन्द्वकानि शुभानि तु ॥ १५

अक्षितारे भ्रुवौ श्मश्रु केशाश्चैवायताः शुभाः ।
अङ्गुल्यो हृदयं नेत्रे दशनाश्च समा नृणाम् ।। १६

जिह्वोष्ठतालवश्चास्य मुखं नेत्रे स्तनौ नखाः ।
हस्तपादौ च शस्यन्ते पद्माभा दश देहिनाम् ।। १७

पाणी पादावुरो ग्रीवा वृषणं हृदयं शिरः ।
ललाटमुदरं पृष्ठं बृहन्तः पूजिता दश ।। १८

नेत्रे तारायुते स्निग्धे दशनाश्च सिताश्शुभाः ।
तेजो गुणाद्बहिरपि छाया यस्य प्रकाशते ।। १९

यथा स्फटिककुम्भस्थदीपज्वालेव भासुरा ।
स्निग्धत्वङ् नखरे केशे स्वच्छाया संप्रकाशते ।। २०

स्निग्धा सिता च हरिता सौभाग्यं तु ततो भृशम् ।
अप्यच्छाया सिता स्वच्छा हरिता वापि शोभना ।। २१

एतल्लक्षणमाख्यातं संक्षेपेण महेश्वरि ।
एतल्लक्षणसंपन्नानाश्रिताः शोभना गुणाः ।
एवं लक्षणमाख्यातं स्त्रीणां पुंसां च तत्वतः ।। २२

इति सौभाग्यचिन्तामणौ पूर्वखण्डे अष्टादशः पटलः ।।

## एकोनविंशः पटलः ।

**मण्डललक्षणम्**

अथ वक्ष्यामि देवेशि मण्डलं भावबन्धनम्।
सर्वसिद्धिकरं पुम्सां देवताभावसिद्धिदम् ।। १

दीक्षायां च प्रतिष्ठायां पवित्रारोपणेऽपि च ।
उत्सवे नवरात्र्यां च मण्डलं परिकल्पयेत् ।। २

पूर्वे वाप्युत्तरे वापि वेदिं कृत्वाऽग्निकुण्डतः ।
अग्रे वा कारयेद्देव्याश्चतुर्हस्तं समन्ततः ॥ ३

शालितण्डुलपिष्टैश्च रक्तपीतसितासितैः ।
शोभोपशोभासंयुक्तं मण्डलं तत्र कारयेत् ॥ ४

पद्मं च सर्वतोऽब्जं च चक्रं चैवाभिचोदितम् ।
लिङ्गं च सर्वतो लिङ्गं योन्यङ्कमभितस्तथा ॥ ५

योनिलिङ्गाङ्कितं चैव स्वस्तिकं सर्वतोमुखम् ।
नवचक्रात्मकं चेति द्वादशैव प्रकीर्तिताः ॥ ६

वेदिमध्यं तु सुधया मृदा वा गोमयेन वा ।
श्लक्ष्णं कृत्वा ततो देवि पुण्याहं वाचयेत्ततः ॥ ७

संप्रोक्ष्य कुशकूर्चेन मण्डलं कारयेत्ततः ।
पञ्चवर्णयुतैश्चूर्णैस्तथा तूलिकयापि वा ॥ ८

तत्राष्टपत्रं कमलं वृत्तत्रयपरीवृतम् ।
सोमसूर्याग्निबिम्बत्वेनैव कुर्याद्विचक्षणः ॥ ९

चतुरश्रं बहिस्तस्य त्रिकोणं कर्णिकान्तरे ।
पीतं पूर्वे सितं देयं(देव्याः) पश्चिमेऽप्युत्तरे तथा ॥ १०

दक्षिणे कृष्णवर्णं च पाटलं वह्निसंस्थितम् ।
नैर्ऋते नीलवर्णं च वायव्ये धूम्रवर्णकम् ॥ ११

ईशे गौरं समुद्दिष्टं अष्टपत्रेष्वयं क्रमः ।
पृथ्व्यम्बु वह्निवातौ खपाशाङ्कुशधनुःशरान् ।
विलिख्य वर्णकैः सम्यक् तत्र देवीं समर्चयेत् ॥ १२

इति सौभाग्यचिन्तामणौ पूर्वखण्डे एकोनविंशः पटलः ॥

## विंशः पटलः ।

**मण्डलभेदाः**

अथान्यत् संप्रवक्ष्यामि मण्डलं भावबन्धनम् ।
यस्य दर्शनमात्रेण सर्वशक्तिमयो भवेत् ॥ १

चतुरश्रं चतुर्हस्तं समन्ताद्दिग्विभाजितम् ।
मध्यकोष्ठचतुष्केषु (चतुर्हस्तं) त्रिकोणं परिकल्पयेत् ॥ २

त्र्यश्रोर्ध्वे वार्धचन्द्रं तु द्विपदं द्विगुणं क्रमात् ।
द्विपदं द्वारखण्डं तु द्विगुणं चोपकण्ठतः ॥ ३

एवं द्वारचतुष्कं तु वर्तितव्यं प्रयत्नतः ।
द्वाराभ्यां कोणदेशं तु द्विपदं द्वारपञ्चकम् ॥ ४

पार्श्वद्वारद्वयस्यास्य कण्ठं सार्धपदं विना (दान्वितम्) ।
त्रिकोणमध्ये कमलं साष्टपत्रं सकर्णिकम् ॥ ५

मध्यं कुन्देन्दुवर्णाभं त्रिकोणं रक्तसन्निभम् ।
अर्धचन्द्रं तदूर्ध्वे तु पीतं काञ्चनसन्निभम् ॥ ६

द्वाराणि पीतकृष्णानि कोणं वज्राञ्जनप्रभम् ।
एवं निर्वर्त्य विधिवत् मण्डलं भावबन्धनम् ॥ ७

पूजायां सर्वशक्तीनां प्रशस्तं सर्वसिद्धिदम् ।
अयान्यत्संप्रवक्ष्यामि मण्डलं सर्वतोमुखम् ॥ ८

चतुष्षष्टिपदं कृत्वा रक्तपीतसितासितैः ।
क्रमेण पूरयेद्वर्णैर्यथाशोभोपशोभितम् ॥ ९

तत्र संपूजयेद्देवीं सर्वान्देवांस्तथैव च ।
लिखेदूर्ध्वं च रेखानां तिर्यक्चापि त्रयोदश ॥ १०

मध्यषोडशकोष्ठेन महायोनिं प्रकल्पयेत् ।
आद्यन्ते तु परित्यज्य मध्यवीथीद्वयेन तु ॥ ११

योन्यष्टकं प्रकुर्वीत सुरेन्द्राद्यष्टदिक्षु च ।
तदन्तरगतैः कोष्ठैश्चतुर्भिस्तु पृथक् पृथक् ॥ १२

शोभनान्यष्टलिङ्गानि कल्पयेत विचक्षणः ।
पद्मानि तु महादिक्षु स्वस्तिकानि विदिक्षु च ॥ १३

वज्राद्यस्त्राणि बाह्ये तु तत्तद्दिक्षु समालिखेत् ।
शिष्टकोष्ठेषु सर्वेषु पद्मान्येव प्रकल्पयेत् ॥ १४

रेखाभिस्तिसृभिर्देवि कुर्यान्मण्डलवेष्टनम् ।
विलिखेद्वर्णपङ्क्तैर्वा तत्तच्चूर्णैरथापि वा ॥ १५

शोभोपशोभासंयुक्तं कुर्यान्मण्डलमुज्ज्वलम् (वेष्टनम्) ।
योनिमध्ये भवेद्रक्तं तद्बहिः पीतमुच्यते ॥ १६

तद्बहिर्गौरवर्णं तु कृष्णवर्णं तु तद्बहिः ।
पङ्कजं पूर्ववत्कृत्वा अन्यत्सर्वं यथारुचि ॥ १७

एतन्मण्डलमध्ये तु योऽर्चयेत्परदेवताम् ।
तदात्मा जायते सद्यो मूढो वा परमार्थवित् ॥ १८

एकयोन्यङ्कितं वापि बाणाद्यायुधशोभितम् ।
बहिस्त्रिरेखया युक्तं यथा शोभोपशोभितम् ॥ १९

तत्रार्चयेद्वा देवेशीं पूर्ववत्सिद्धिमाप्नुयात् ।
एवमुक्तप्रकारेण लिङ्गं चक्रं च पद्मकम् ॥ २०

नवाङ्कमेकयुक्तं वा बाणाद्यायुधसंयुतम् ।
कृत्वा तन्मध्यमे देवीं पूजयेदिष्टसिद्धये ॥ २१

पद्मं चक्रं च लिङ्गं च ब्रह्मादीनामनुक्रमात् ।
पूजयेदिष्टदेवीनां नवाङ्कं वापि मुद्रितम् ॥ २२

सर्वशक्तिप्रियकरं (मयं श्रेष्ठं) सर्वदेवात्मकं तथा ।
श्रीचक्रं नवचक्राङ्कं पञ्चवर्णाभिरञ्जन(ञ्जित)म् ॥ २३

बाणाद्यायुधसंवीतं वज्राद्यस्त्रविभूषितम् ।
अथवा नवयोन्यङ्कं तथा वर्णोपशोभितम् ॥ २४

बाणाद्यायुधसंवीतं कृत्वा तत्रार्चयेच्छिवाम् ।
इति प्राधान्यतो देवि संक्षेपेण मयोदितम् ॥ २५

अन्यानि बहुशः सन्ति मण्डलानि महामते ।
विस्तरेण मयोक्तानि शक्तीनां तत्र तत्र तु ॥ २६

इति सौभाग्यचिन्तामणौ पूर्वखण्डे विंशः पटलः ॥

## एकविंशः पटलः ।

### गुरुशिष्यभावः

अथ वक्ष्यामि देवेशि सद्भावं गुरुशिष्ययोः ।
मुद्रा तु दुर्लभा लोके गुरुशिष्यौ च दुर्लभौ ॥ १

शिष्यभावमविज्ञाय न मुद्रां दर्शयेत्क्वचित् ।
तत्क्रमेण प्रवक्ष्यामि सावधानमनाः शृणु ॥ २

देवतोपासकः शान्तो विषयेष्वपि निस्पृहः ।
अध्यात्मविद्ब्रह्मवादी ब्राह्मणस्समदर्शनः ॥ ३

निगमागमसारज्ञः सर्वशास्त्रपुराणवित् ।
श्रुतिस्मृत्युदिताचारो गृहस्थो गुरुरुच्यते ॥ ४

शिष्यस्य लक्षणं चैव क्रमेण प्रोच्यते शृणु ।
आस्तिको गुरुभक्तश्च जिज्ञासुः श्रद्धया सह ॥ ५

कामक्रोधादिदुःखोत्थवैराग्यो वनितादिषु ।
सर्वात्मनोत्तितीर्षुश्च भवाब्धेर्भवदुःखवित् ॥ ६

ब्राह्मणो धर्ममोक्षार्थी कामार्थे विगतस्पृहः ।
किं वा धर्मार्थमोक्षार्थी निष्कामश्चाथवा द्विजः ॥ ७

मनोवाक्कायचित्तैस्तु नित्यं शुश्रूषको गुरोः ।
स्ववर्णाश्रमधर्मोत्थकर्मनिष्ठः सदा शुचिः ॥ ८

अयं प्राथमिकश्शिष्यस्तच्छिष्यः क्षत्रियः स्मृतः ।
क्षत्रियस्य तृतीयस्तु वैश्यः शिष्यः क्रमाद्भवेत् ॥ ९

विशश्शिष्याश्चतुर्थाः स्युः यदि देवीपरायणाः ।
प्रधानगुर्वनुज्ञायाः शिष्यद्वारा क्रमेण ते ॥ १०

शुचिव्रततमाश्शूद्रा धार्मिका द्विजसेवकाः ।
स्त्रियः पतिव्रताश्चान्याः प्रतिलोमानुलोमजाः ॥ ११

लोकाश्चण्डालपर्यन्तं सर्वेऽप्यत्राधिकारिणः ।
स्वजातिधर्मनिरता नित्यं देवीं समाश्रिताः ॥ १२

उपदेशक्रमस्तेषां तत्तज्जात्यनुसारतः ।
जातिभेदात्क्रियाभेदो मन्त्रभेदश्च कुत्रचित् ॥ १३

आत्मार्थयजनं तेषां परार्थे नाधिकारिणः ।
नोपदेशाधिकारोऽस्ति पुत्रादिष्वपि भामिनि ॥ १४

गुरोर्वा तत्सुतेभ्यो वा ग्राह्यास्तद्वंशजादपि ।
अभावेष्वेषु पुत्राणां दद्यादेव पिता स्वयम् ॥ १५

मातुर्वा ग्राहयेन्मन्त्रं स्त्रीभ्यो वृद्धाभ्य एव वा ।
अन्येभ्यो ग्राहयेद्वापि पारम्पर्यागतं मनुम् ॥ १६

परीक्ष्याब्देन तच्छीलं गुरुशिष्यौ परस्परम् ।
सच्छिष्येभ्यो ददेद्विद्वान् ग्राहयेत्सद्गुरोर्मुखात् ॥ १७

सद्गुरुभ्यस्तथा प्राप्ता सच्छिष्येषु प्रतिष्ठिता ।
सा विद्या सकलान्कामान् प्रयच्छति तयोः सदा ॥ १८

अलसा मलिनाः क्लिष्टा डाम्भिकाः कृपणास्तथा ।
दरिद्रा रोगिणो दुष्टा द्रोहिणो भोगलालसाः ॥ १९

असूयामत्सरग्रस्ताश्शठाः परुषवादिनः ।
अन्यायोपार्जितधनाः परदाररताश्च ये ॥ २०

विदुषां वैरिणश्चैते अज्ञाः पण्डितमानिनः ।
भ्रष्टवृत्ताश्च ये कष्टवृत्तयः पिशुनाः खलाः ॥ २१

बह्वाशिनः क्रूरचेष्टा दुरात्मानश्च निन्दिताः ।
इत्येवमादयोऽप्यन्ये पापिष्ठाः पुरुषावधूः (धमाः) ॥ २२

अकृत्येभ्योऽनिवार्याश्च गुरुशिष्यासहिष्णवः ।
एवंभूताः परित्याज्याः शिष्यत्वेनोपकल्पिताः ॥ २३

यद्येते ह्युपकुर्वीरन् देवताक्रोधभाजनाः ।
भवन्तीह दरिद्रास्ते पुत्रदारादिवर्जिताः ॥ २४

नरकांश्चैव देहान्ते तिर्यक्षु प्रभवन्ति ते ।
ये गुर्वाज्ञां न कुर्वन्ति पापिष्ठाः पुरुषावधूः (धमाः) ॥ २५

न तेषां नरकक्लेशनिस्तारो देवि जायते ।
लुब्धाः प्रलोभितास्तैस्तैर्निन्दितेभ्यो दिशन्ति ये ॥ २६

विनश्यत्येव तत्सर्वं सिन्धुसैकतशालिवत् ।
यैः शिष्यैश्शश्वदाराध्य गुरवो ह्यवमानिताः ॥ २७

पुत्रमित्रकलत्रादि संपद्भ्यः प्रच्युता हि ते ।
अधिक्षिप्य गुरुं मोहात्परुषं प्रवदन्ति ये ॥ २८

सूकरत्वं भवत्येव तेषां जन्मशतेष्वपि ।
ये गुरुद्रोहिणो मूढाः सततं पापकारिणः ॥ २९

तेषां च यावत्सुकृतं दुष्कृतं स्यान्न संशयः ।
एवं भूतौ महाभागे गुरुः शिष्यो भवेद्यदि ।
दीक्षयेद्दर्शयेन्मुद्रां नान्येषां तु महेश्वरि ॥ ३०

इति सौभाग्यचिन्तामणौ पूर्वखण्डे एकविंशः पटलः ॥

## द्वाविंशः पटलः ।

### मुद्रारचना

अथ वक्ष्यामि देवेशि मुद्रास्सर्वार्थसिद्धिदाः ।
दर्शितास्सर्वदेवानां मोदका द्रावकास्तथा ॥ १

शिष्यभावमविज्ञाय न मुद्रां दर्शयेत्क्वचित् ।
गन्धलिप्तौ करौ कृत्वा मुद्रादर्शनमाचरेत् ॥ २

षडङ्गाख्या हृदाद्यास्तु पश्चादावाहनादिकाः ।
ऋषिच्छन्दोदेवतानां मुद्रास्सर्वाङ्गुलीयकाः ॥ ३

**षडङ्गमुद्राः**

अनामिकामध्यमयोः प्रवेश्याङ्गुष्ठमायतम् ।
कृत्वा मुष्टिं हृदि न्यस्येन्मुद्रा तु हृदयाभिधा ॥ ४

अधोमुखी तु सा मुष्टिरङ्गुष्ठाग्रेण मूर्धनि ।
स्थापयेत्तु सतर्जन्या शीर्षमुद्रेयमम्बिके ।। ५

ऊर्ध्वांगुष्ठं दृढं बध्वा मुष्टिं न्यस्येच्छिखापदे ।
शिखामुद्रेयमाख्याता वर्ममुद्रा ततोऽम्बिके ।। ६

प्रवेश्याभ्यन्तराङ्गुष्ठं बद्ध्वा मुष्टिप्रवेशनम् ।
उन्नम्य किञ्चिदग्रेण विततान्तेन मुष्टिना ।। ७

वर्मभावनया भावः कवचन्तु प्रकीर्तितम् ।
तर्जन्यंगुष्ठकं बध्वा विततं चाङ्गुलित्रयम् ।। ८

विन्यसेन्नेत्रयोर्मध्ये नेत्रमुद्रेयमीरिता ।
तर्जन्यङ्गुष्ठयोः स्फोटा दिक्षुस्यादस्त्रमुद्रिका ।। ९

षडङ्गमुद्रासंज्ञासु हस्तस्सर्वत्र दक्षिणः ।
कनिष्ठादित्रिभिर्बध्वा मुष्टिं साङ्गुष्ठमुन्नतम् ।। १०

विधाय तर्जनीं तेन भ्रामयेदग्निचक्रवत् ।
अग्निप्राकारमुद्रैषा चात्मरक्षाकरी परा ।। ११

नाभेरधस्ताद्विन्यस्य सव्यं करतलं पुनः ।
उत्तानमितरं तस्य विन्यसेदुपरीदृशी ।। १२

योगमुद्रा भवेदेषा ततस्स्याद्योगसंपुटम् ।
पूर्ववत्सव्यमासज्य समाङ्गुष्ठपुटं परम् ।। १३

इमे तत्वोपसंहारे समुत्पत्तौ च कीर्त्यते ।
योगसम्पुटमुद्रैषा वाचिता घटवत्कृता ।। १४

ऊर्ध्वाभ्यां कुम्भमुद्रैषा तया स्नानं समाचरेत् ।
तर्जन्याऽनामिकाग्रन्तु वेष्टयित्वा क्रमेण तु ।। १५

तथाऽङ्गुष्ठौ तु विन्यस्येत् ज्ञेया संहारमुद्रिका ।
तत्वानां संहृतौ चैव देवतोद्वासने तथा ॥ १६

एषा मुद्रा प्रयोक्तव्या सर्वकर्मसु सर्वदा ।
संहताभिस्समस्ताभिरङ्गलीभिश्च संहृतिः ॥ १७

विमुक्ततर्जनीभ्यां च संयोगस्तत्वमुद्रिका ।
तत्वन्यसनकाले च मुद्रैषा परिकीर्तिता ॥ १८

ज्ञानमुद्रा तु सैषा स्यादज्ञानतिमिरापहा ।
ऊर्ध्वयोः करयोर्मध्ये मध्यमाभ्यां तु संस्पृशेत् ॥ १९

उत्तानितौ करौ कृत्वा न्यासमुद्रा निगद्यते ।
देव्यात्मदेहयोर्मन्त्रन्यासमुद्रेयमीरिता ॥ २०

अङ्गुष्ठाभ्यां तु करयोः तर्जन्योरुभयोरपि ।
मध्यमाभ्यां स्पृशेदन्यां विस्तृताभिर्यथा तथा ॥ २१

जपमुद्रेति विज्ञेया जपकाले प्रदर्शयेत् ।
आवाहने च सृष्टौ च मुद्रैषा परिकीर्तिता ॥ २२

अङ्गुलीभिस्समस्ताभिर्दक्षिणेतरहस्तयोः ।
सम्पुटीकरणं ब्रह्ममुद्रा संशब्दिता बुधैः ॥ २३

अङ्गुष्ठे द्वे कनिष्ठे द्वे तथा स्यात्तर्जनीद्वयम् ।
सहयुक्ताग्रगाः शिष्टा विष्णुमुद्रेति कीर्तिता ॥ २४

सा चैव शेषिताङ्गुष्ठा समस्तेन परस्परम् ।
उभयाङ्गुष्ठमुद्रा स्यात् रुद्रस्य कथिता प्रिये ॥ २५

श्रोत्रे पिधाय पाणिभ्यां दण्डवद्दक्षिणं करम् ।
प्रसारयेत् गुरूणां तु मुद्रा तु विहिता बुधैः ॥ २६

सव्यहस्ताङ्गुलीस्सव्यकर्णे न्यस्य तथेतरम् ।
प्रसारयेद्विघ्नराजमुद्रा विघ्नविनाशिनी ।। २७

अन्तस्तु तर्जनीयुग्मं संहृत्याङ्गुष्ठकद्वयम् ।
मुद्रा भगवती साक्षात्का(क)रयुक्ते तु सम्पुटे ।। २८

मुद्रा सिद्धिकरी प्रोक्ता गुरुपङ्क्तौ तु शस्यते ।
दक्षे करतले देवि संस्मरेद्रक्तपङ्कजम् ।। २९

तन्मध्ये चिन्तयेदग्निं त्रिकोणं तेजसां निधिम् ।
अवाङ्मुखं करतलं कृत्वा तत्रोपरि न्यसेत् ।। ३०

ज्ञेया दहनमुद्रैषा द्रव्यशुद्धिप्रदा सदा ।
सव्ये करतले स्वस्य पङ्कजं षोडशच्छदम् ।। ३१

कलाषोडशसम्पूर्णं शशिनं पङ्कजासनम् ।
तन्मध्ये चिन्तयित्वा तु स्रावितं वाऽमृतं स्मरेत् ।। ३२

तेनामृतेन तद्भस्म क्षाळितं कुण्ठितं स्मरेत् ।
आप्यायनीयमुद्रैषा कथिता वरवर्णिनि ।। ३३

अङ्गुष्ठे द्वे कनिष्ठे द्वे तथा स्यात्तर्जनीद्वये ।
शिष्टं प्रसारयेद्देवि अङ्गुल्यस्तु करद्वये ।। ३४

मध्यमां दक्षिणकरेऽनामिकां च तथेतरे ।
संहृत्य प्रसरेच्छेषं करयोरुभयोरपि ।। ३५

ज्ञेया सुरभिमुद्रा स्याद्यागद्रव्यविशोधिनी ।
हस्ताभ्यामञ्जलिं कृत्वा ईषद्विकसितस्फुटम् ।। ३६

आवाहनस्य मुद्रैषा दर्शनात्सन्निधिं भजेत् ।
मूलाधारात् द्वादशान्तं आनीता कुसुमाञ्जलिः ।। ३७

त्रिस्थानगततेजोभिर्विहिता प्रतिमादिषु ।
आवाहनीयमुद्रैषा देवतायागकर्मणि ।। ३८

एषैवाधोमुखी मुद्रा स्थापने शस्यते पुनः ।
उच्छ्रिताङ्गुष्ठमुष्ट्योस्तु संयोगात्सन्निधायिनी ।। ३९

अन्तः प्रवेशिताङ्गुष्ठा सैव संरोधिनी मता ।
मुष्टिद्वयस्थिताङ्गुष्ठौ संमुखौ तु परस्परम् ।। ४०

संश्लिष्टावुच्छ्रितौ कुर्यात् सेयं संमुखमुद्रिका ।
प्रस्तृताङ्गुलिकौ हस्तौ मिथः श्लिष्टौ च संमितौ ।। ४१

कुर्यात्स्वहृदये सेयं मुद्रा प्रार्थनसंज्ञिका ।
समस्तदेवतानां च मुद्रा सामान्यतोदिता(भवेत्) ।। ४२

प्रसार्य करजान्सर्वान् मणिबन्धे समेत्य तौ ।
अन्तःप्रवेशिताङ्गुष्ठौ वामहस्तस्य मुष्टिकम् ।। ४३

कृत्वा चाङ्गुष्ठतर्जन्यौ संयुक्ते प्रसृते समे ।
तिस्रस्तु दक्षिणा सान्यां बध्नीयान्मुष्टिमूर्ध्वगाम् ।। ४४

शङ्खमुद्रेयमुदिता ज्ञानदा मोक्षदा चिरात् ।
चण्डादीनां भवेन्मुष्टिमुद्रैषा बलिमुद्रिका ।। ४५

अङ्गुष्ठानामिकाभ्यां तु तथा स्याद्वस्त्रमुद्रिका ।
मुष्टिमुद्रा तु मुद्रा स्यादङ्गुष्ठेन निवेशिता ।। ४६

ज्ञानमुद्रेति सा ज्ञेया सैव मुक्तकनिष्ठिका ।
गन्धमुद्रेति सा ज्ञेया विमुक्तानामिका च सा ।। ४७

पुष्पमुद्रेति विज्ञेया विमुक्ता मध्यमा च सा ।
मध्यमाङ्गुष्ठशिरसि सङ्गतिश्चाग्रपर्वणः ।। ४८

यज्ञोपवीतमुद्रैषा अङ्गुष्ठेन कनिष्ठिका ।
आकल्पमुद्रिका ज्ञेया देवताप्रीतिकारिणी ॥ ४९

सङ्गताग्राङ्गुलीनां तु कृत्यन्यतिकराङ्गलिः ।
सहै (तथै) वोर्ध्वीकृताङ्गुष्ठकराभ्यां धूपमुद्रिका ॥ ५०

ऊर्ध्वां तु मध्यमां कृत्वा संहृत्याङ्गुष्ठमेव च ।
तर्जन्यनामिकाभ्यां तु संहृत्य च कनिष्ठिकाम् ॥ ५१

तेनैव वामहस्तेन दक्षिणेन कृता च या ।
दीपमुद्रेति सा प्रोक्ता सर्वदेवप्रिया शुभा ॥ ५२

अन्येषां उपचाराणां मुद्रा सा स्यात्कृताञ्जलिः ।
या स्यादूर्ध्वीकृताङ्गुष्ठा शेषाभिर्मुष्टिभिः कृता ॥ ५३

सा ज्ञेया प्रतिमामुद्रा सर्वसान्निध्यकारिणी ।
उत्तानीकृत्य हस्तं च वक्रिताग्राङ्गुलिः क्रमात् ॥ ५४

अङ्गुष्ठं च पृथक्कृत्वा ज्ञेया स्वागतमुद्रिका ।
सा चैव प्रार्थना मुद्रा सा चैषा यानमुद्रिका ॥ ५५

पञ्चाङ्गुलीनामग्रं तु संयोज्य परमेश्वरि ।
अन्वारब्धेन वामेन पाणिना दक्षिणेन च ॥ ५६

निवेद्य परमान्नादि मुद्रा सा ग्राससंज्ञिका ।
मध्यमानामिकाभ्यां तु अङ्गुष्ठाग्रेण सङ्गतिः ॥ ५७

कनिष्ठातर्जनीयुग्मं ऋजूकृत्य यथायथम् ।
तिलव्रीहियवादीनां होमकर्मणि शस्यते ॥ ५८

ततस्तु दर्शयेन्मुद्रास्त्रिखण्डाद्या दश प्रिये ।
तन्त्रेषु पूर्वमेवोक्ताः सर्वसिद्धिप्रदाः शुभाः ॥ ५९

लिङ्गमुद्रा शिवस्योक्ता मुद्रा त्वावाहनी द्वयोः ।
देव्यास्तु शक्तिमुद्रा स्याद्योनिमुद्राऽथवा स्मृता ॥ ६०

उच्छ्रितं दक्षिणाङ्गुष्ठं वामाङ्गुष्ठेन बन्धयेत् ।
वामाङ्गुलीर्दक्षिणाभिरङ्गुलीभिश्च वेष्टयेत् ॥ ६१

लिङ्गमुद्रेयमाख्याता शिवसान्निध्यकारिणी ।
अन्योन्याङ्गुलिसंश्लिष्टौ अङ्गुष्ठौ मध्यमे न्यसेत् ॥ ६२

तर्जन्यनामिके योज्या शक्तिमुद्रा शिवप्रिया ।
ततस्तु दर्शयेन्मुद्राः त्रिखण्डाद्या दश प्रिये ॥ ६३

तन्त्रेषु पूर्वमेवोक्ता नवचक्रार्चनाक्रमे ।
अनामान्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ॥ ६४

कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरि ।
त्रिखण्डेयं महामुद्रा त्रिपुराह्वानकर्मणि ॥ ६५

मध्यमे मध्यगे कृत्वा कनिष्ठाङ्गुष्ठरोपिते ।
तर्जन्यौ दण्डवत्कृत्वा मध्यमोपर्यनामिके ॥ ६६

एषा तु प्रथमा मुद्रा सर्वसंक्षोभकारिणी ।
एतस्या एव मुद्राया मध्यमे सरले यदि ॥ ६७

क्रियते परमेशानि सर्वविद्राविणी तथा ।
मध्यमानामिकाभ्यां तु कनिष्ठानामिके समे ॥ ६८

अङ्कुशाकाररूपाभ्यां मध्यगे परमेश्वरि ।
इयमाकर्षिणी मुद्रा त्रैलोक्याकर्षकारिणी ॥ ६९

पुटाकारौ करौ कृत्वा तर्जन्यावङ्कुशाकृती ।
परिवर्त्य क्रमेणैव मध्यमे तदधोगते ॥ ७०

क्रमेण देवि तेनैव कनिष्ठानामिके अपि ।
संयोज्य निबिडाः सर्वा अङ्गुष्ठौ च क्रमेण तु ॥ ७१

मुद्रैषा परमेशानि सर्ववश्यकरी स्मृता ।
संमुखौ तु करौ कृत्वा मध्यमामध्यगेऽनुजे ॥ ७२

अनामिके तु सरले तदन्तस्तर्जनीद्वयम् ।
दण्डाकारौ नताङ्गुष्ठौ मध्यमानखदेशगौ ॥ ७३

मुद्रैषोन्मादिनी नाम्ना क्लेदिनी सर्वयोषिताम् ।
अस्यास्त्वनामिकायुग्ममधः कृत्वाङ्कुशाकृतिम् ॥ ७४

तर्जन्यामपि तेनैव क्रमेण विनियोजयेत् ।
इयं महांकुशा मुद्रा सर्वकार्यार्थसाधिनी ॥ ७५

सव्यं दक्षिणदेशे तु दक्षिणं सव्यदेशगम् ।
बाहुं कृत्वा महेशानि हस्तौ संपरिवर्त्य च ॥ ७६

कनिष्ठानामिके देवि युक्त्वा तेन क्रमेण तु ।
तर्जनीभ्यां समाक्रान्तिः सर्वोर्ध्वमपि मध्यमे ॥ ७७

अङ्गुष्ठौ तु महेशानि कारयेत्सरलावपि ।
इयं सा खेचरीनाम्ना मुद्रा सर्वोत्तमा प्रिये ॥ ७८

रचितेयं महादेवि शत्रुतेजोऽपहारिणी ।
बद्धयैव तया देवि दृश्यते साधकोत्तमः ॥ ७९

योगिनीसर्वबृन्दैश्च ज्वलत्प्राकारसन्निभः ।
साकिनीराकिनीबृन्दैर्लाकिनीकाकिनीगणैः ॥ ८०

याकिनीहाकिनीभिश्च ध्यातेयं परमेश्वरि ।
एतया ज्ञातया गौरि योगिनीनां भवेत्प्रियः ॥ ८१

यतस्समयमुद्रेयं सर्वासां परिकीर्तिता ।
प्रयतोऽप्रयतो वापि शुचौ देशेऽथवाऽशुचौ ॥ ८२

उत्थितश्चोपविष्टो वा चङ्क्रमन्निश्चलोऽथवा ।
मुद्रया मध्यमेऽङ्गुल्यौ परिवर्त्य क्रमेण तु ॥ ८३

पार्थिवैस्साधकैर्युक्तः सद्यः खेचरतां व्रजेत् ।
परिवर्त्य करौ पृष्ठमध्ये वक्राकृतिः प्रिये ॥ ८४

तर्जन्यंगुष्ठयुगलैः युगपत्कारयेत्ततः ।
अधिकानिष्ठवष्टब्धे मध्यतो विनियोजयेत् ॥ ८५

तथैव कुटिले योज्य सर्वाधस्तादनामिके ।
बीजमुद्रेयमचिरात्सर्वसिद्धिप्रदायिनी(वर्तिनी) ॥ ८६

मध्यमे कुटिलाकारे तर्जन्युपरि संस्थिते ।
अनामिकामध्यगते तथैव हि कनिष्ठिके ॥ ८७

सर्वा एकत्र संयोज्य अङ्गुष्ठपरिबन्धिता ।
एषा तु प्रथमा मुद्रा योनिमुद्रेति सा स्मृता ॥ ८८

एता मुद्रा महेशानि त्रिपुराया मयोदिताः ।
पूजाकाले प्रयोक्तव्या यथाकर्मानुसारतः ॥ ८९

इति सौभाग्यचिन्तामणौ पूर्वखण्डे द्वाविंशः पटलः ॥

## त्रयोविंशः पटलः

### देशिकाचारविधिः

अथ वक्ष्यामि देवेशि देशिकाचारमुत्तमम् ।
यत्कृत्वा सकलान् कामान् प्राप्नुवन्ति मनीषिणः ॥ १

ब्राह्मे मुहूर्ते चोत्थाय ब्रह्मरन्ध्रे सिताम्बुजे ।
चिच्चन्द्रमण्डले शुद्धे स्फटिकाभं वराभये ॥ २

दधानं रक्तया शक्त्याऽऽश्लिष्टं वामाङ्कसंस्थया ।
दधत्योत्पलदण्डं च नेत्रद्वन्द्वोपशोभितम् ॥ ३

प्रसन्नवदनं शान्तं स्मरेत्तन्नामपूर्वकम् ।
तत्तन्मुद्रान्वितैर्मन्त्रैरुपचारैः प्रपूजयेत् ॥ ४

तत्तन्नाम पुरस्कृत्य स्वात्मानं देवतामयम् ।
ध्यात्वा तदैक्यभावेन कञ्चित्कालं सुखीभवेत् । ५

भद्रं कर्णे प्रातरग्निं शश्च मेति जपेद्द्विजः ।
विधायाथाजपां जप्त्वा निश्वासोच्छ्वासरूपकम् ॥ ६

अजपाजपनिवेदनम्

षट्चक्रे तु गणेशादिदेवताभ्यस्समर्पयेत् ।
अजपाजपमुच्छ्वासनिश्वासेन दिने दिने ॥ ७

''मया कृतं षट्शतानि सहस्राण्येकविंशतिः ।
निवेदयामि विघ्नादिदेवताभ्यः'' उदीरयेत् ॥ ८

''मूलाधारे दिव्यचक्रे गणेशाय स्थिताय च ।
अहं निवेदयाम्यद्य षट्शतं त्वजपाजपान् ॥ ९

मणिपूरे नाभिमूले(चक्रे) बिन्दुचक्रे गदाभृते ।
निवेदयाम्यहं षट्च सहस्राण्यजपाजपान् ॥ १०

स्वाधिष्ठाने लिङ्गमूले बीजचक्रे प्रजापतौ ।
निवेदयाम्यहं षट्च सहस्रमजपाजपान् ॥ ११

अनाहते च हृदये नादचक्रे पिनाकिने ।
निवेदयाम्यहं षट्च सहस्रमजपाजपान् ॥ १२

विशुद्धौ स्वरचक्राख्ये जीवाय पुरुषात्मने ।
अहं निवेदयाम्यद्य सहस्रमजपाजपम् ॥ १३

भ्रूमध्ये ज्ञानशान्त्याख्यचक्रे श्रीपरमात्मने ।
अहं निवेदयाम्यद्य सहस्रमजपाजपम् ॥ १४

ब्रह्मरन्ध्रे शान्त्यतीते चक्रे श्रीहृदयात्मने ।
निवेदयाम्यहं ह्यद्य सहस्रमजपाजपम् ॥'' १५

एवं निवेद्य सकलीकुर्यादृष्यादिकान् स्मरेत् ।
हंसस्य ऋषिरव्यक्तो गायत्री छन्द ईरितम् ॥ १६

परा परमहंसः स्यात् (सस्य) देवता परिकीर्तिता ।
सूर्यात्मनेति हृदयं ततस्सोमात्मने शिरः ॥ १७

निरञ्जनात्मने चूडा निराभासात्मने पुनः ।
कवचं स्यात्तनः (तः) सूक्ष्म प्रचोदया(बोधा)त्मनेऽथ दृक् ॥

अथाव्यक्तप्रबोधाथ नम इत्यस्त्रमीरितम् ।
अक्षीबैर्बिन्दुदीर्घैश्च हंसार्णं भेदितं क्रमात् ॥ १९

प्रयोगे तु षडङ्गादेः मन्त्रैरेतैः प्रयोजयेत् ।
तथाऽहोरात्रयोरेकविंशतिष्षट्शताधिकाम् ॥ २०

सहस्राण्यहमुच्छ्वासनिश्वासेनाजपाजपान् ।
करिष्ये इति संकल्प्य पञ्चविंशतिसंख्यया ॥ २१

तारमभ्यस्य च परेऽप्यन्यदेवं समाचरेत् ।
पश्चात्संहृत्य चात्मानमण्डरूपं विचिन्तयेत् ।
षट्त्रिंशत्तारमावर्त्य ध्यायेत्सच्चित्सुखावहम् ॥ २२

अरुणकनकवर्णं पद्मसंस्थं च गौरी-
हरनियमितचिह्नं सौम्यतानूनपादम् ।

भवतु भवदभीष्टप्राप्तये पाशटङ्का-
भयवरदकराब्जं रूपमर्धाम्बिकेशम् ॥ २३

पाशटङ्काभयवरान् बिभ्राणं चन्द्रशेखरम् ।
प्रविभक्तमहाभूषं भजेद(जाम्य)र्धाम्बिकेश्वरम् ॥ २४

ततो बहिश्च निर्गत्य कुर्याच्छौचादिकाः क्रियाः ।
केवलं मान्त्रिकं दैवं स्नानं तु त्रिविधं भवेत् ॥ २५

सामान्या श्रोत्रिया वीरा मनुष्यास्त्रिविधास्स्मृताः ।
क्रमोत्तरगुणास्ते तु वीरो वेदान्तवित्तमः ॥ २६

**स्नानप्रकाराः**

एकद्वित्र्यभिषेकास्तु क्रमेणैव प्रचोदिताः।
केवलं मलशुद्ध्यर्थं वारुणं पापनाशनम् ॥ २७

दैवत्वसिद्धिदं दैवं विशेषादिष्टसिद्धिदम् ।
स्नानं तु केवलं कृत्वा स्नायात्सङ्कल्पपूर्वकम् ॥ २८

सङ्कल्पं सूक्तपठनं स्नानं चैवाघमर्षणम् ।
पावीरवी पर्वतादा गन्धद्वारां तदित्यृचः ॥ २९

अदितिश्चेत्यृचः पञ्च जपेदन्तर्जले तु यः ।
ज्ञानाज्ञानकृतैः पापैः मुच्यते नात्र संशयः ॥ ३०

अथवा मूलविद्यां वा जपेदक्षरसंख्यया ।
ब्रह्महत्यादिपापेभ्यः तत्क्षणादेव मुच्यते ॥ ३१

नवसप्तत्रिवारं वा स्मरेद्वा तत्पदाम्बुजम् ।
मुच्यते सर्वपापेभ्यः सर्वान्कामानवाप्नुयात् ॥ ३२

देवर्षीणां पितॄणां च तर्पणं तर्पणं भवेत् ।
सबालया तु व्याहृत्या संप्रोक्ष्य वस(क्ष्याच्छाद)नं शुभम् ॥ ३३

परिधायोत्तरीयं च त्रिराचम्य सपुण्ड्रकः ।
मन्त्रस्नानमिति प्रोक्तं दैविकं च ततः शृणु ॥ ३४

यत्तु सातपवर्षेण तत्स्नानं दिव्यमुच्यते ।
एवं तु त्रिविधं स्नानं पृथग्वासास्तु यश्चरेत् ॥ ३५

गङ्गादिसर्वतीर्थेषु स्नातो भवति नित्यशः ।
आर्द्रवासाथवा कुर्यात्सपुण्ड्रस्सकुशस्सदा ॥ ३६

मूलमन्त्रेण वा कुर्यात् प्रोक्षणं द्वादशात्मना ।
अथवा तत्पदाम्भोजस्मरणं सर्वशुद्धिदम् ॥ ३७

सोहमस्मीति यो भावस्सर्वस्मादपि चोत्तमः ।
संप्रोक्ष्य विमलं वासो व्याहृत्या तु सबालया ॥ ३८

ततो जलात्समुत्तीर्य मेधावी शुद्धमानसः ।
परिधाय त्रिराचम्य देशिकस्समदर्शनः (र्वैवित्तमः) ॥ ३९

**पुण्ड्रधारणम्**

चतुरश्रं पुन(र): पश्चात् त्रिपुण्ड्रं मौनमास्थितः ।
मृदा च भस्मना चैव कुर्यात्फाले तु लाञ्छनम् ॥ ४०

चतुरश्रं च पद्माङ्कं वृत्ते त्र्यश्रं त्रिपुण्ड्रकम् ।
चतुरश्रं द्विजातीनां पद्माङ्कं बाहुजन्मनाम् ॥ ४१

वैश्यानां वर्तुलं देवि त्र्यश्रं स्यात्पादजन्मनाम् ।
त्रिपुण्ड्रमपि तैः सर्वैर्धार्यं साधारणेन तु ॥ ४२

ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं च तैर्धार्यं नेतरैश्शिवे ।
समदर्शनवन्तो ये ह्येतत्तन्त्रोक्तमार्गगाः ॥ ४३

एवं क्रमज्ञो देवेशि सौरीं सन्ध्यामुपासयेत् (स्य च) ।
दैवीं सन्ध्यां उपासीत ततस्सर्वार्थसिद्धये ॥ ४४

त्रिराचम्य शुचिर्भूत्वा प्राणानायम्य मूलतः ।
ततस्तु मूलमन्त्रेण कराङ्गान्यपि विन्यसेत् ॥ ४५

प्रोक्षयेन्नवधात्मानं मूलेनैवाग्रपाणिना ।
परिषिच्य च मूलेन तेनैवापस्त्रिधा पिबेत् ॥ ४६

तेनैव नवधा प्रोक्ष्य तेनैव परिषिच्य च ।
दक्षपाणितले सप्तवारं मूलेन मन्त्रितम् ॥ ४७

जलं संस्मृत्य मूलेन (चिद्रूपं) तारसङ्घट्टमुद्रया ।
वामहस्तस्थया मूर्ध्नि त्रिवारं मूलविद्यया ॥ ४८

अभिषिच्यावशिष्टाम्भः समानुष्येऽथवान्तरम् ।
तेन प्रक्षाल्य कलुषं कज्जलाभं विचिन्तयेत् ॥ ४९

नाड्या पिङ्गलयाऽस्त्रेण स्फालयेद्वामतः स्थिते ।
वज्रोपले तदाख्यातं मन्त्रस्नानाद(नम)नन्तरम् ॥ ५०

अवते हेडमन्त्राभ्यामेताभ्यामुत्तराननः ।
''धरण्यां (धारणं)पोषणं त्वत्तो भूतानां देवि सर्वदा ॥ ५१

तेन सत्येन मां पाहि पाशान्मोचय धारिणि ।
अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ॥ ५२

तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ।''
ध्यात्वा तामर्कबिम्बस्थां सम्पूज्य मनसाऽऽम्बिकाम् ॥ ५३

अनन्यमानसो देवि(मौनी) गायत्र्या देविपूर्वया ।
सूर्यबिम्बस्थितायै च त्रिरुत्क्षिप्य जलाञ्जलिम् ॥ ५४

ह्रीं नमो भुवनेश्वर्यै स्वाहान्तमनुनाऽमुना ।
दक्षहस्तेन हृदयं स्पृष्ट्वा ध्यात्वा महेश्वरीम् ॥ ५५

**स्नानाङ्गतर्पणम्**

स्योनापृथिविमन्त्रेण समभ्यर्च्य मही ततः ।
संप्रोक्ष्य चासनं कृत्वा त्रिराचम्योपविश्य च ॥ ५६

अष्टाविंशतिकृत्वो वा दश वा तर्पयेदथ ।
वसून्रुद्रांस्तथादित्यांस्तथैवाङ्गिरसस्तथा ॥ ५७

वाणीं रमामुमां ब्रह्मविष्णुरुद्रान्ग्रहानपि ।
नत्रक्षराशियोगांश्च करणानि यथाक्रमम् ॥ ५८

चतुर्थीवह्निजायान्तैः देवतीर्थेन तर्पयेत् ।
मरीचिमत्रिं पुलहं पुलस्त्यं क्रतुमेव च ॥ ५९

वसिष्ठं च भरद्वाजं गौतमागस्त्यनामकौ ।
लोपामुद्रामहल्यां च तर्पयेन्मुनितीर्थतः ॥ ६०

चतुर्थ्यन्तनमोन्तं च प्रत्येकं द्विः प्रतर्पयेत् ।
अग्निष्वात्तान् बर्हिषदः पितॄम्श्च स्वपितॄन् क्रमात् ॥ ६१

स्वधान्ते हृदयान्तं च पितृतीर्थेन तर्पयेत् ।
भैरवाः क्षेत्रपालाश्च कुमार्यो योगिनीगणाः ॥ ६२

भूतानि सर्वशब्दाद्यास्तृप्यन्त्वेतानि तर्पयेत् ।
सूर्याय नम इत्यन्तं ह्रां ह्रीं ह्रूमिति मन्त्रतः ॥ ६३

सूर्यायार्घ्यत्रयं दत्वा मूलबीजचतुष्टयैः ।
चतुस्तत्वान्तिकैश्शोधयाम्यन्तैस्सलिलं पिबेत् ॥ ६४

चतुर्विशेषाचमनैर्देहतत्वविशोधनः ।
सकलीकृत्य तां देवीं चित्सुधासाररूपिणीम् ॥ ६५

पञ्चशक्तिचतुर्वह्निपद्मद्वयमहीमये ।
महाचक्रे सावरणं(णां)पूजामार्गेण वारिणि ॥ ६६

विभाव्य तर्पयेदद्भिस्सुधारूपाभिरन्वहम् ।
यद्वा भृगुहवह्न्यश्रनवयोन्यां प्रतर्पयेत् ।। ६७

पीठदेवीं यथाशक्ति साङ्गां शक्तिं गुरुं तथा ।
सम्पूज्य गन्धपुष्पाद्यैर्ध्यात्वा देवीमनन्यधीः ।। ६८

ततस्समाहितो विद्यां जपेत्तर्पणसंख्यया ।
निष्कलीकृत्य हृदये देवीमुद्वास्य सत्कृताम् ।। ६९

सकलीकृत्य हृदये तीर्थे मार्ताण्डमण्डले ।
कृत्वा षडङ्गमुत्तिष्ठेद्वज्रपञ्जरमध्यगः ।। ७०

न बाह्यान् भाषमाणस्सन् न स्पृशन्नावलोकयन् ।
प्रविशेदालयं देव्याः तत्सूक्तस्तुतिबृंहितः ।
एवं यः कुरुते नित्यं तस्यात्माहं ममैव सः ।। ७१

इति सौभाग्यचिन्तामणौ पूर्वखण्डे त्रयोविंशः पटलः ।।

## चतुर्विंशः पटलः

### दीक्षाविधिः

श्रीदेव्युवाच—

देव देव महादेव परिपूर्णप्रथा(भा)मय ।
श्रोतुमिच्छामि दीक्षाया विधानं तत्फलं तथा ।। १

ईश्वर उवाच—

शृणु देवि महाभागे यन्मां त्वं परिपृच्छसि ।
यत्कृत्वा सकलां सिद्धिं प्राप्नुवन्ति मनीषिणः ।। २

तन्त्रज्ञो दीक्षितो विद्वान् नित्यं देवीपरायणः ।
यदा गुरुस्समायाति तदा दीक्षां समाचरेत् ।। ३

पारम्पर्यक्रमायातो यदि स्याद्देशिकोत्ततः ।
वक्ष्यमाणेषु कालेषु दीक्षाकर्म समाचरेत् ॥ ४

**दीक्षाकालः**

दुःखं सुखं प्राणहरं (पुनरघं) बन्धुनाशस्समृद्धता ।
क्षयः पूजा धनर्धी च(समृद्धिश्च) सुखं ज्ञानक्षयो धृतिः ॥ ५

समृद्धिर्मधुमासादिमासेषु तु विधीयते ।
निन्दितो मलमासस्स्याद्वारौ सौरिकुजावपि ॥ ६

अश्विनीरोहिणीस्वातीविशाखाहस्तभेषु च ।
ज्येष्ठोत्तरत्रयेष्वेव कुर्यान्मन्त्राभिषेचनम् ॥ ७

पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा ।
त्रयोदशी च दशमी प्रशस्ता सर्वकामदा ॥ ८

पञ्चाङ्गशुद्धदिवसे सोदये गुरुशक्रयोः ।
गुरुशुक्रोदये शुद्धे लग्ने द्वादशशोधिते ॥ ९

चन्द्रतारानुकूले च कुर्याद्दीक्षाभिषेचनम् ।
सूर्यचन्द्रोपरागे तु नान्यदन्वेषणं भवेत् ॥ १०

अतस्ततो महादेव्या दीक्षाविधिमथाचरेत् ।
ब्रह्मचर्यव्रतं कुर्याद्दीक्षादौ नववासरम् ॥ ११

आदौ तु वपनं कुर्यात् व्रतानामपि सर्वदा ।
विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् ॥ १२

व्रतं तु द्विगुणं प्रोक्तं तेषां तु परमेश्वरि ।
ते तु पातकयुक्ताश्चेत्तेषां तु वपनं चरेत् ॥ १३

ततो वह्निं समाधाय स्वसूत्रोक्तविधानतः ।
हुनेदष्टोत्तरशतं व्याहृतीभिः घृतेन तु ॥ १४

लब्धानुज्ञस्तु सङ्कल्प्य कुर्याद्दीक्षाक्रमक्रुरम् ।
दक्षिणां गुरवे दद्यात्सदस्येभ्यो यथोचितम् ॥ १५

**यमनियमौ**

यमादिसहितो भूयात् दीक्षाकर्मसमाप्तये ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयाऽऽर्जवम् ॥ १६

क्षमा धृतिर्मिताहारश्शौचश्चेति यमा दश ।
मनस्सन्तोष मास्तिक्यं ईश्वराराधनं तथा ॥ १७

सिद्धान्तश्रवणं देवि लज्जा दानं मतिस्तथा ।
तपो धृतिर्दशैते तु नियमाश्च मयोदिताः ॥ १८

यमैश्च नियमैर्युक्तो देवीं सञ्चिन्तयन्हृदि ।
मृज्जलाभ्यां बहिस्स्नायात्पञ्चगव्येन चान्तरा ॥ १९

नित्यं त्रिषवणस्नायी दर्भपाणिरनाकुलः ।
जप्त्वा सहस्रं गायत्रीं शतमष्टोत्तरं हुनेत् ॥ २०

गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलमनुलेपनम् ।
व्रतस्थो वर्जयेन्नित्यं तथैव बहुभाषणम् ॥ २१

गुरुभक्तो मिताहारः कुर्वन्देवद्विजार्चनम् ।
पूजयेदतिथीन्नित्यं व्रतस्थो भिक्षुकानपि ॥ २२

स्वस्ववर्णाश्रमाचारसंयुक्ता ब्राह्मणोत्तमाः ।
शास्त्रज्ञा वेदविद्वांसो धर्मनिश्चयपारगाः ॥ २३

कैवल्यज्ञानिनो ये च क्षमावन्तो दयाळवः ।
समदर्शनवन्तो ये स्त्रियश्चापि पतिव्रताः ॥ २४

प्रीणयेद्वस्त्रहेमाद्यैर्यथार्हं परमेश्वरि ।

## व्रतविशेषाः

वाग्यतो विजितक्रोधो नक्ताशी धरणीशयः ॥ २५

ब्रह्मचर्यव्रतधरस्समुञ्जीकस्समेखलः ।
न धर्मव्यपदेशेन पापं कृत्वा व्रतं चरेत् ॥ २६

अङ्कुराहं समारभ्य नवरात्रं व्रतं चरेत् ।
त्रिपुराप्रतिमादानं तदा कुर्यादनन्यधीः ॥ २७

पलैस्त्रिद्व्येकसंख्यैर्वा नवहेम्नैव बुद्धिमान् ।
देव्याः प्रतिकृतिं कुर्याद्यथाविभवमम्बिके ॥ २८

### पञ्चगव्ययोजनम्

शुद्ध्यर्थं प्रतिमायास्तु पञ्चगव्याधिवासनम् ।
कुर्याद्विधानतः कृत्वा तद्विधानं तु वक्ष्यते ॥ २९

गोमूत्रं ताम्रवर्णायाः श्वेतायाश्चैव गोमयम् ।
पयः कनकवर्णाया दधि स्यात्सर्ववर्णकम् ॥ ३०

घृतं तु कापिलं ह्येतत्पञ्चगव्यं महेश्वरि ।
गव्यस्य पयसोऽलाभे गव्यमेव भवेद्दधि ॥ ३१

दध्यभावे तु तक्रं स्याद्गोमयं तदलाभतः ।
सर्वाभावे घृतं प्रोक्तं कापिलं वन्यमेव वा ॥ ३२

गोमूत्रमष्टमं भागं गोमयं देवि षोडश ।
क्षीरं स्याद्द्वादश प्रोक्तं दध्नो दश वरानने ॥ ३३

गोमूत्रवद्घृतं कृत्वा प्रणवेनैव मेलयेत् ।
तदर्धं कुशतोयं स्याद्गायत्र्या योजयेदिदम् ॥ ३४

स्नानमेतेन कृत्वाऽथ प्राश्य किञ्चिद्ध(संप्रोक्ष्यैवं व)रानने।
गोष्ठेषु शेते यस्तस्मात्सर्वपापैः प्रमुच्यते ॥ ३५

आसप्ताहमिदं कर्म कृच्छ्रं सान्तपनं स्मृतम् ।
चतुर्दशाहाद्देवेशि महासान्तपनं भवेत् ॥ ३६

इति ते कथितो देवि पञ्चगव्यस्य निर्णयः ।
ततो नवाहे संप्राप्ते प्रतिमादानमाचरेत् ॥ ३७

गोचर्ममात्रमालिप्य गोमयेन महीतलम् ।
आस्तीर्य तण्डुलैर्भारैर्मण्डलं तत्र कारयेत् ॥ ३८

तत्कर्णिकायां विन्यस्य पूजयेद्धेमरूपिणीम् ।
सर्वज्ञां सर्वगां नित्यां सर्वकारणकारणाम् ॥ ३९

वेदवेदान्तवेद्यां तां वेदान्तैकनिवासिनीम् ।
अर्चनाद्ध(अच्युतां भ)क्तवरदां कारुण्यामृतसागराम् ॥४०

ब्रह्मविष्णुगिरीशेशसदाशिवगरीयसी(हृदासिका)म् ।
पाशाङ्कुशेक्षुकोदण्डपञ्चबाणलसत्कराम् ॥ ४१

कबरीभारविलसच्चन्द्ररेखाविभूषणाम् ।
पूर्णचन्द्रप्रतीकाशमुखपङ्कजराजिताम् ॥ ४२

करुणापूर्णनयनवीक्षणोज्ज्वलिताखिलाम् ।
नाटङ्कयुगलोल्लासिगण्डमण्डलभासुराम् ॥ ४३

मन्दस्मितमुखाम्भोजधिक्कृताखिलचन्द्रिकाम् ।
मुक्ताहारलतोपेतसमुन्नतपयोधराम् ॥ ४४

तनुमध्यां पृथुश्रोणीं सिन्दूरारुणविग्रहाम् ।
रक्तवस्त्रपरीधानां रक्ताभरणमण्डिताम् ॥ ४५

मञ्जुमञ्जीरनिनदसंशोभिपदपङ्कजाम् ।
दिक्पालदेवगन्धर्वमुनिबृन्दनिषेविताम् ॥ ४६

अप्सरोगणसङ्गीतनृत्तदर्शनतत्पराम् ।
कोशातीतां गुणोन्मत्तां अवस्थात्रयवर्जिताम् ॥ ४७

त्रयीमयीं त्रिधा भिन्नां त्रिगुणां त्रिपुराम्बिकाम् ।
एवं संचिन्त्य मनसा पूजयेत्पङ्कजैश्शुभैः ॥ ४८

लेपयेत्कुङ्कुमाद्यैश्च रक्तचन्दनचर्चितैः ।
क्षौमे च वाससी दद्याद्धूपं चागरुभिश्चरेत् (पयेच्चागरुद्रुजैः) ॥ ४९

नैवेद्यं पायसं दद्यात्ततो नीराजनादिकम् ।
प्रदक्षिणत्रयं कृत्वा निवेद्य परमात्मने ॥ ५०

वेदवेदाङ्गतत्वज्ञं शान्तं देवीपरायणम् ।
ज्ञानविज्ञानपसंपन्नं नित्यनैमित्तिके रतम् ॥ ५१

अभ्यर्च्य गन्धपुष्पाद्यैस्सशिवां परमेश्वरीम् ।
प्रणिपत्य च साष्टाङ्गं मन्त्रमेतदुदीरयेत् ॥ ५२

''त्रयीमयि त्रिधाभिन्ने त्रिपुरे त्रिगुणाम्बिके ।
त्वत्प्रसादेन देवेशि पापं नश्यतु सर्वदा(तः) ॥ ५३

(यत्पापं वाङ्मनःकायसम्भवं सर्वजन्मसु ।
त्वत्प्रसादेन मे सर्वं पापं नश्यतु सर्वतः ॥)

सत्कर्मनिरते सत्ये(ऋच्यः) सर्वदुष्कृतहारिणि ।
तव रूपप्रदानान्मे पापं नश्यतु मेऽखिलम् ॥ ५४

प्रकाशे यत्कृतं पापं यद्रहस्ये कृतं मया ।
तव रूपप्रदानान्मे विलयं यातु सर्वतः(दा) ॥ ५५

अज्ञे(ज्ञ)भावे तिरोभावे त्वामेव शरणं गते ।
मयि पूर्वाघनाशाय कृपां कुरु महेश्वरि ।।'' ५६

इत्यामन्त्र्य ततो दद्यात्पराम्बा प्रीयतामिति ।
क्रियाकलापमखिलं स्वात्मानमपि भामिनि ।। ५७

सर्वं निवेदयेद्देव्यै नमस्कृत्य महेश्वरीम् ।
आत्मानमर्चयित्वा तु ततो विप्रं विसर्जयेत् ।। ५८

अनेन विधिना यस्तु प्रदद्यात्प्रतिमामिमाम् ।
तस्य नश्यन्ति पापानि बहून्यपि न संशयः ।। ५९

जीविते हि भवेत्पापं अवश्यं मनुजात्मनः ।
तस्य पापस्य नैवास्ति प्रायश्चित्तमिदं विना ।। ६०

तस्मात्सर्वप्रयत्नेन यथाविभवविस्तरम् ।
कृत्वा दानमिदं पश्चाद्दीक्षाकर्म समाचरेत् ।। ६१

कृत्वा दीक्षाङ्गमेतच्च रात्रावङ्कुरकौतुकम् ।
मण्टपं वा प्रपां वापि सुविशालं तु कारयेत् ।। ६२

षण्णवत्यङ्गुलायामां वेदिं कृत्वा तु मध्यतः ।
कुण्डानि परितः कुर्यान्नव पञ्चैकमेव वा ।। ६३

महादेव्यास्तु पूर्वेद्युः (तु) कुर्यान्मण्डलवेदिकाम् ।
अलङ्कुर्याच्चतुर्दिक्षु कदलीपूगतोरणैः ।। ६४

ततस्तु गोमयेनाक्त्वा प्रविशेद्ब्राह्मणैस्सह ।
सङ्कल्प्य पुण्याहजलैः प्रोक्षयेत् सर्वतो बहिः ।। ६५

आचार्यमृत्विजश्चैव वृणीयादुपचारतः ।
अभावे ऋत्विजं दक्षमेकं वाऽऽचार्यमम्बिके ।। ६६

ततश्शिष्यमुपाहूय भक्तिनम्रमकल्मषम् ।
प्रोक्षयेत्पावमानीभिः पुण्याहसलिलैर्नवैः ॥ ६७

अहते वाससी दद्याद्भोजयित्वा ततो गुरुः ।
नवनीतं च गन्धं च मौञ्जीं कृष्णाजिनं तथा ॥ ६८

अञ्जनं च क्रमेणैव पञ्चबाणेन कारयेत् ।
वाचंयमत्वं मूलेन देवीसूक्तेन वाऽखिलम् ॥ ६९

आवह्निदर्शनं मौनं कुर्याद्देवीं हृदि स्मरन् ।
ततो बहिर्विनिर्गत्य चतुर्द्वारेषु देशिकः ॥ ७०

**श्रीचक्रपूजा**

तत्तद्दिक्षु च दिक्पालान्तदस्त्राणि च पूजयेत् ।
गणेशं वटुकं दुर्गां क्षेत्रेशं दिक्षु च क्रमात् ॥ ७१

तत्तन्मन्त्रैर्बलिं दद्यादन्नेन सलिलेन च ।
अस्य गोत्रस्य पुत्रश्च पौत्रश्चेदिह दीक्षितः ॥ ७२

त्रिरुक्त्वोपांशुना चैव त्रिरुच्चैरुच्चरेद्गुरुः ।
ततो वेदिं परिस्तीर्य तण्डुलैर्बहुभिः शुभैः ॥ ७३

प्रतिकुम्भं शिवामात्रैस्तदर्धार्धार्धतस्तिलैः ।
तत्र श्रीचक्रमालिख्य यथावल्लक्षणान्वितम् ॥ ७४

दशोत्तरशतं कुम्भं विन्यसेत्क्रमशः प्रिये ।
हैमान्वा राजतांस्ताम्रान्मृण्मयान्वा सुनिर्मलान् ॥ ७५

संगृह्य वस्त्रेणावेष्ट्य सूत्रैर्वा पट्टसंभवैः ।
कार्पासतन्तुभिर्वापि यथालाभं महेश्वरि ॥ ७६

गुग्गुल्वादिप्रधूपैस्तु धूपयेत्प्रणवेन तु ।

## कुम्भेषु आवरणशक्तीनां आवाहनम्

विन्यस्य तत्तत्स्थानेषु मुखे चाश्वत्थपल्लवान् ॥ ७७

तत्तन्मन्त्रेण चापूर्य नारिकेलफलान्यसेत् ।
कुम्भानां स्थापनं कृत्वा शक्तीरावाहयेत्क्रमात् ॥ ७८

प्राणानायम्य मूलेन षडङ्गन्यासपूर्वकम् ।
ध्यात्वा यथोक्तमार्गेण देवीमावाहयेद्गुरुः ॥ ७९

व्यस्तैस्त्रिभिस्सप्तभिश्च समस्तैः पुरुषीयुतैः ।
व्याहृतीभिस्समुद्राभिरावाह्यानन्तरं जपेत् ॥ ८०

कोणाग्रेषु च कामेशी वज्रेशी भगमालिनी ।
पाशाङ्कुशधनुर्बाणान् त्रिकोणस्य बहिर्यजेत् ॥ ८१

वशी कामी च मोदी च विमला चारुणा जयी ।
सर्वेशी कौळिनीत्यष्टौ वाग्देव्यः क्रमशोऽष्टसु ॥ ८२

ततस्तु चतुरश्रान्ते समारभ्य तु वारुणीम् ।
अणुर्वशित्वं च तथा लघु प्राकाम्यमेव च ॥ ८३

महिमा भुक्तिरीशित्वं इच्छा प्राप्तिस्तथोर्ध्वयोः ।
सर्वकामं च सम्पूज्य वारुणे चेन्द्रतस्तथा ॥ ८४

इति केचित्प्रशंसन्ति क्रमात्संक्षोभणादिकाः ।
संक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाः ॥ ८५

खेचरीबीजयोन्याख्यास्त्रिखण्डाद्याश्च पूजयेत् ।
दिक्षु ब्राह्मी च माहेशी कौमारी वैष्णवी तथा ॥ ८६

वाराही चैव माहेन्द्री चामुण्डा मा विदिक्ष्वपि ।
कामो बुद्धिरहङ्कारश्शब्दश्च स्पर्शरूपकौ ॥ ८७

रसो गन्धश्चित्त(स्तथा)धैर्यं स्मृतिर्नाम च बीजकम् ।
आत्मामृतशरीराणामाकर्षिण्यः क्रमाद्यजेत् ॥ ८८

अष्टाब्जे कुसुमा देवि(मदा)मेखला मदनातुरा ।
रेखा वेगिन्यङ्कुशा च मालिन्यपि महेश्वरि ॥ ८९

आदावनङ्गशब्दाढ्यास्स्वनामभिरथार्चयेत् ।
क्षोभिणी द्राविणी देवी चाकर्षाह्लादमोदिनी ॥ ९०

स्तम्भिनी जृम्भिणी (जम्भिनी) चैव वशङ्कर्यपि रञ्जनी ।
उन्मादिन्यर्थदात्री च सर्वसंपत्तिपूरणी ॥ ९१

सर्वमन्त्रमयी देवी सर्वद्वन्द्वक्षयङ्करी ।
सर्वपूर्वाखिलास्तत्र वामावर्तेन पूजयेत् ॥ ९२

सिद्धिस्संपत्प्रियाकामदायिन्यो मङ्गळं तथा ।
ततो दुःखस्य मृत्योश्च विघ्नस्य च निवारकाः ॥ ९३

सुन्दरी चार्थदायिन्य इति सर्वपदान्विताः ।
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यप्रदा तथा ॥ ९४

सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी ।
सर्वाधारस्वरूपा च सर्वपापहरा तथा ॥ ९५

सर्वरक्षास्वरूपा च सर्वानन्दस्वरूपिणी ।
सर्वेप्सितप्रदा चेति सर्वपूर्वाखिलाः प्रिये ॥ ९६

मध्ये मध्ये महेशानि मूलमन्त्रेण पूजयेत् ।
चक्रमध्ये तु संचिन्त्य विशेषेण तु पूजयेत् ॥ ९७

कामं वसन्तं ब्रह्माणं हरिं च सह शक्तिभिः ।
संपूजयेन्महादिक्षु चक्रबाह्ये महेश्वरि ॥ ९८

गणेशं वटुकं दुर्गां क्षेत्रपालं विदिक्ष्वपि ।
एवं दशोत्तरशतं कुम्भान्संस्थाप्य पूजयेत् ॥ ९९

हुताशमधि(थ)संस्कृत्य मौनं दृष्ट्वा विसृज्य च ।
दर्शयेत् पूर्णकुम्भान्गां कन्याश्चैव सुमङ्गलीः ॥ १००

जप्त्वा सौभाग्यहृदयमात्मानमभिरक्ष्य(षिच्य) च ।
सहस्रैर्नामभिर्देव्याः पूजयेत्फुल्लपङ्कजैः ॥ १०१

जातीचम्पकपुन्नागैस्तथा सौगन्धिकादिभिः ।
धूपदीपादिकं दत्वा परमान्नं निवेदयेत् ॥ १०२

नीराजनादिकं दत्वा पुनरभ्यर्चयेत्ततः ।
ततो गौरीशिवाकारं मिथुनं चैकमर्चयेत् ॥ १०३

भोजयेद्भक्ष्यभोज्याद्यैर्दक्षिणाभिश्च तोषयेत् ।
दिनवृद्ध्या नवाहान्तं मिथुनानि च पूजयेत् ॥ १०४

गोभूवस्त्रहिरण्याद्यैस्तोषयेद्देशिकोत्तमः(म्) ।
गुरुस्तत्रा(तोऽ)ग्निमभ्यर्च्य पूर्वोक्तेन विधानतः ॥ १०५

महागणेशमन्त्रेण हुनेदष्टोत्तरं शतम् ।
अपूपैः घृतसंमिश्रैर्मध्वाज्यपरिसंप्लुतैः ॥ १०६

देव्यावरणदेवीभ्यो दशाष्टौ त्रिस्र एव वा ।
तथा मूलेन होतव्यं अष्टोत्तरसहस्रकम् ॥ १०७

पालाशकुसुमैर्होमैर्देवीसन्तोषकारकैः ।
पनसैस्त्रिमधुप्लुष्टैस्तथैव कदलीफलैः ॥ १०८

अपूपैः गुळ(घृत)संमिश्रैः तथैव परमोदनैः ।
ततो घृतेन होतव्यं अष्टोत्तरसहस्रकम् ॥ १०९

शतमष्टोत्तरं वापि द्रव्यैरेतैः पृथक् पृथक् ।
पुनरष्टसहस्रं तु हुत्वा पूर्णाहुतिं चरेत् ॥ ११०

नैवेद्यं परिकल्प्याथ कुम्भे वह्नौ च मण्डले ।
परितस्तु बलिं दद्यात्तेषामेव पृथक् पृथक् ॥ १११

तथैव द्वारदेशेषु तत्तन्मन्त्रैर्बलिं ददेत् ।
अग्नौ कुर्यात्तु नैवेद्यं परमान्नेन(अग्नेरेव तु) यत्कृतम् ॥ ११२

अन्यानि सर्वभोज्यानि दीक्षान्ते बहुशो हुनेत् ।

**दीक्षार्थकव्रताभिषेकादि**

दीक्षितस्य व्रतं दद्यात्पयो दधि घृतं मधु ॥ ११३

रात्रौ जागरणं कुर्यात् देवीसूक्तं परं जपन् ।
शृणुयाद्ब्राह्मणेभ्यश्च तत्सूक्तानि च सर्वशः ॥ ११४

एवं दिवा च रात्रौ च नव सप्ताथ पञ्च वा ।
एकाहं वापि कुर्वीत देशकालबलान्वितः ॥ ११५

नवाहे चैव सप्ताहे कुर्यादेवं वरानने ।
पञ्चाहे तु त्र्यहे चैव कुम्भषोडशकं न्यसेत् ॥ ११६

आयुधानि (नवयोनौ) बहिर्यष्ट्वा नवकुम्भांस्तु विन्यसेत् ।
एकाहे कुम्भमेकं तु विन्यसेद्देशिकोत्तमः ॥ ११७

एकाहे वा त्र्यहे वापि शतकुम्भार्चनं वरम् ।
कुम्भस्थदेवतानां तु हुनेदष्टोत्तरं शतम् ॥ ११८

यदि निद्रा समायाति सौभाग्यहृदयं जपेत् ।

**दीक्षाभिषेकः**

ततः प्रभात उत्थाय कृतपूर्वाह्णिको गुरुः ॥ ११९

पूजाहोमे च निर्वर्त्य बलिकर्म समाचरेत् ।
ततश्शिष्यमुपाहूय भक्तिनम्रमकल्मषम् ॥ १२०

तद्देहे न्यासजालानि कुर्यात्पूर्वोक्तवर्त्मना ।
षडाधारयुतं पीठमादौ कृत्वा तु दारुणा ॥ १२१

तन्मध्ये पङ्कजं न्यस्येदष्टपत्रं विचित्रितम् ।
पुण्याहं वाचयित्वा तु प्रोक्षयित्वा तदासनम् ॥ १२२

ततस्संप्रोक्ष्य विधिवत् शिष्यं पीठे निधापयेत् ।
ऋत्विग्भिस्सह संगृह्य कुम्भान्मध्यादि सर्वशः(तः)॥ १२३

अभिषिञ्चेच्च तन्मूर्ध्नि देवीसूक्तं परं जपन् ।
अब्लिङ्गैः पावमानीभिस्ततो मूलेन मन्त्रवित् ॥ १२४

ऋत्विग्भिस्सह देवेशि अभिषेकं समाचरेत् ।
वाससी परिदध्याच्च चन्दनाद्यैर्विलिप्य च ॥ १२५

कुण्डले चाङ्गलीयं च भूषणानि च सर्वशः(तः) ।
पञ्चबाणेन कुर्वीत मूलमन्त्रेण चाम्बिके ॥ १२६

न्यासजालं पुनर्न्यस्य मूर्ध्नि स्पृष्ट्वा शतं जपेत् ।
ततः प्रणम्य शिरसा देशिकं शिवरूपिणम् ॥ १२७

आददीत गुरोस्तस्माद्विद्यां परमशोभनाम् ।
ततो यथोचितं तस्मै गोभूवस्त्रादिकं धनम् ॥ १२८

दक्षिणार्थे प्रदातव्यं तुष्ट्यर्थं देशिकस्य च ।
येन केन प्रकारेण गुरुं सन्तोषयेच्छिवे ॥ १२९

यदा तुष्टो गुरुर्देवि प्रसन्ना देवता तदा ।
एवं लब्ध्वा महादीक्षां कृतार्थस्स्यान्न संशयः ॥ १३०

अपवित्रः पवित्रस्स्यादज्ञो विज्ञानवान्भवेत् ।
अज्ञश्च विबुधो भूयान्मूको वाचस्पतिर्भवेत् ॥ १३१

दासा भवन्ति भूपाला देवताश्च वशं गताः ।
विषाण्यप्यमृतानि स्युर्भूषायन्ते महोरगाः ॥ १३२

वह्निश्शीतत्वमभ्येति खेचरत्वं च जायते ।
यद्यत्कर्म करोत्येषः तत्सर्वं सुकृतायते ॥ १३३

सर्वं देव्याः प्रभावेण मङ्गलं तस्य जायते ।
शिव एव भवेन्मर्त्यः (न्मूर्तौ)साक्षाद्देवीमयो भवेत् ॥ १३४

बहुनात्र किमुक्तेन तस्य दीक्षाविधेः फलम् ।
न शक्यते मया वक्तुं कल्पकोटिशतैरपि ॥ १३५

इति दीक्षाविधानं ते कथितं वरवर्णिनि ।
शृणुयाद्यस्तु धर्मात्मा सर्वपापैः प्रमुच्यते ॥ १३६

सम्यक् ज्ञात्वा तु यो देवि श्रावयेद्द्विजसत्तमः ।
श्रद्धया सहितो विद्वान् दीक्षाफलमवाप्नुयात् ॥ १३७

इति सौभाग्यचिन्तामणौ पूर्वखण्डे चतुर्विंशः पटलः ॥

## पञ्चविंशः पटलः

### दीक्षारहस्यम्

श्रीदेव्युवाच—

देवदेव महादेव सर्वागममय प्रभो ।
प्रसादादेव हि गुरोः विद्यास्सिद्ध्यन्त्ययत्नतः ॥ १

तदभावे तु सा विद्या साध्यते त्यज्यतेऽथवा ।
एतन्मे संशयं देव छेत्तुमर्हसि शङ्कर ॥ २

ईश्वर उवाच—

शृणु देवि महाभागे यन्मां त्वं परिपृच्छसि ।
रहस्यातिरहस्यत्वात्सर्वतन्त्रेषु गोपितम् ॥ ३

विद्याप्राप्तिर्द्विधा प्रोक्ता गुरोर्वक्त्राच्च शास्त्रतः ।
दीक्षयाऽभ्यागतं मन्त्रं पारम्पर्याद्गुरोर्मुखात् ॥ ४

तदभावेऽन्यतो ग्राह्यं श्रेयसे दीक्षितस्य तु ।
शास्त्रदृष्टम(क्शास्त्र)दीक्षाङ्गं देवतात्मापि नो यजेत् ॥ ५

शास्त्रज्ञो देवताभक्तो यष्टुकामश्च देवताः ।
अदीक्षितं वा मन्त्रज्ञं श्रेयांसं देवतापरम्(मयम्) ॥ ६

संपूज्य दीक्षया सार्धं गृह्णीयान्मन्त्रमुत्तमम् ।
आचार्याभावतो दीक्षा त्रिविधा परिकीर्त्यते ॥ ७

शिवो मुनिर्देवता च गुरवो मन्त्रसंग्रहे ।
सर्वेषामपि मन्त्राणां(वर्णानां) प्रोक्तो ह्यादिगुरुश्शिवः ॥ ८

यो मुनिर्यस्य मन्त्रस्य तस्य मन्त्रस्य सो गुरुः ।
नान्यो मन्त्रादिदेवस्स्याद्गुरवो मन्त्रसंग्रहे ॥ ९

परार्थे यष्टुकामस्य देवता सैव सद्गुरुः ।
तन्मुनिर्वा शिवो वापि गुर्वर्थे तु प्रकीर्तितौ ॥ १०

एतेष्वेकं विनिश्चित्य तद्गुरोः प्रतिमां बुधः ।
कुड्ये वा पटमध्ये वा यथावत्संप्रकल्पयेत् ॥ ११

प्राङ्मुखं कारयित्वा तु प्राणानावाह्य मूलतः ।
अथवा हेमपट्टस्थं कुम्भमध्ये समावहेत् ॥ १२

मन्त्रज्ञाभावतो मन्त्रं हैमे वा राजतेऽपि वा ।
तालपत्रेऽथवाऽऽलिख्य साङ्गं मन्त्रवरं बुधः ॥ १३

गुरोरग्रे समाधाय पूजयेत् स्वस्वनामतः ।
तद्दत्तां भावयित्वा तु ग्राहयेल्लिखितां मनुम् ॥ १४

अङ्कुराद्यभिषेकान्तं ततो दीक्षां समाचरेत् ।
अदीक्षितस्तु मन्त्रज्ञो यदि विद्येत पार्वति ॥ १५

गुर्वर्थे वरयेत्तं वा तेन दीक्षां समाचरेत् ।
मन्त्रज्ञेनापि तत्कार्यं शिवादिगुरुपूजनम् ॥ १६

अनुज्ञया गुरुस्तस्य दीक्षाकर्म समाचरेत् ।
मन्त्रज्ञाद्ग्राहयेन्मन्त्रं दीक्षान्ते देवताधिया ॥ १७

न पत्रलेखनं कार्यं गुरुश्चास्यापि वै यतः ।
पुण्यर्क्षतिथिवारेषु गुरुवक्त्रात्समाग(मुद्र)ता ॥ १८

श्रद्धाभक्तियुता सैषा सिद्धिदा परिकीर्तिता ।
आत्मार्थयजनं तेन कर्तव्यं सर्वसिद्धये ॥ १९

विशेषादीक्षितो देवि परस्यात्मन एव च ।
नैव दीक्षाधिकारोऽस्ति प्रिये ह्यस्योत्सवादिषु
(नोत्सवादिषु सुन्दरि) ॥ २०

आचार्यदीक्षितो मन्त्री सर्वागमरहस्यवित् ।
उत्सवाद्यधिकारी स्याच्छिवरूपो हि वै यतः ॥ २१

आचार्यदीक्षाभावे तु कुर्याद्वैशेषिकेन वा (को वरः) ।
समयस्थेन वा कार्यं तदभावे परार्चनम् ॥ २२

निर्वाणनाम या दीक्षा संन्यासोऽखिलकर्मणाम् ।
तस्मिन्नैवाधिकारोऽस्य समये वा विधीयते ॥ २३

नोत्सवाद्यधिकारोऽस्य विशेषाचार्यकैरपि ।
स मुक्तस्सिद्धसङ्कल्पः परां गतिमवाप्नुयात् ॥ २४

यस्य मन्त्रस्य या दीक्षा तस्य तन्त्रे विधीयते ।
तेनैव कारयेद्दीक्षां नान्यतन्त्रेण केनचित् ॥ २५

सजातीयेन तन्त्रेण तदनुक्तं न(तु) कारयेत् ।
शैवं शैवान्तरेणैव शाक्तं शाक्तान्तरेण च ॥ २६

अन्येन वैष्णवेनैव विष्णुतन्त्रे तु कारयेत् ।
सामान्यं सर्वदेवानां सर्वतन्त्रेषु गोपितम् ॥ २७

समानमिदमेतेषां सर्वर्षीणां च संमतम् ।
अनेनैव तु तन्त्रेण तेषां कृत्वा न दोषभाक् ॥ २८

अल्पार्थसार्थमल्पीयः प्रत्यवायविवर्जितम् ।
सर्वार्थसाधनं चैव सर्वापद्विनिवारणम् ॥ २९

तत्तद्वर्णविभागेन चतुर्धा परिभाजितम् ।
क्रियाविशेषसंपन्नं सद्यस्सिद्धिविधायकम् ॥
दीक्षारहस्यमाख्यातं किमन्यत् श्रोतुमिच्छसि ॥ ३०

इति सौभाग्यचिन्तामणौ पूर्वखण्डे पञ्चविंशः पटलः ॥

## षड्विंशः पटलः

### नित्यार्चनं चतुर्विधन्यासपूर्वकपूजा

अथ वक्ष्यामि देवेशि नित्यार्चनविधिं परम् (धिक्रमम्)
यद्विधानान्महेन्द्राद्याः परमानन्दभाजनाः ॥ १

प्रक्षाळ्य करपादौ च आचान्तश्शुद्धचेतनः (मानसः) ।
देवा(व्या)लयं समासाद्य साष्टाङ्गं प्रणमेत्पुरः ॥ २

द्वारस्य वामपार्श्वे तु यजेत्सूर्यं सशक्तिकम् ।
द्वारस्य दक्षपार्श्वे तु यजेच्चैव गणेश्वरम् ।
स्थण्डिलं कल्पयित्वा तु प्रस्थद्वितयतण्डुलैः ॥ ३

तत्पुरो धरणीगेहं वृत्तत्र्यश्रात्ममण्डलम् ।
विलिख्य सामान्यार्घ्यस्य पात्रं संस्थाप्य पूजयेत् ॥ ४

वह्न्यर्कसोमबिम्बानि यन्त्रिकापात्रवारिषु।
शङ्खाब्जसुरभीमुद्रां प्रदर्श्याङ्गानि पूजयेत् ॥ ५

आपो वेत्यभिमन्त्र्याद्भिः प्रोक्ष्य द्रव्याणि चात्मना ।
चतुर्भुजं वराभीतिपङ्कजद्वयधारिणम् ॥ ६

प्रभामण्डलमध्यस्थं वामार्ध(ङ्क)दयितं रविम् ।
सौराष्टाक्षरमन्त्रे(मार्गे)ण समभ्यर्च्य दिवाकरम् ॥ ७

द्वारपार्श्वं समासाद्य सह शिष्यैस्तु देशिकः ।
दीपानारोपयित्वाऽथ नमस्कुर्यान्महेश्वरीम्॥ ८

पूजयेद्गन्धपुष्पाद्यैश्शाखयोर्दक्षवामयोः ।
देहलीं च विशेदन्तर्दक्षपादपुरस्सरम् ॥ ९

गणेशं वटुकं दुर्गां क्षेत्रेशं स्वस्वमन्त्रकैः ।
जाति(आदि)युक्तस्वनाम्ना वा वह्निकोणादि पूजयेत्॥ १०

दक्षादारभ्य धातारं (वीरं च) शास्तारं स्कन्दमर्चयेत् ।
रत्नमण्टपमभ्यर्च्य तद्द्वारस्य तु संमुखे ॥ ११

नत्वा तद्दक्षशाखायां कामं क्लींकारतो रतिम्।
क्रों(प्रों)कारेण यजेद्वामशाखायां स्वाद्यबीजकम्(तः)॥ १२

वसन्तं प्रीतिसहितं ऊर्ध्वोदुम्बरशाखयोः ।
दक्षान्ययोर्गणपतिं पूर्ववच्च सरस्वतीम् ॥ १३

द्वारश्रियं च तन्मध्ये देहलीं पूर्ववद्यजेत् ।
तद्वारपार्श्वयोर्देवि शरभं शरभीं यजेत् ॥ १४

''स्फुरच्चण्डोग्ररूपाय पक्षविक्षिप्तभूभृते ।
अष्टपादाय रुद्राय नमश्शरभमूर्तये ॥'' १५

एतद्विघ्नविनाशार्थं पूजयेच्छरभद्वयम् ।
शान्त्यतीता शान्तिविद्या(द्ये) प्रतिष्ठा च निवृत्तिका ॥ १६

कलावर्णादिनामान्तं चतुर्दिक्षु स्वनामतः ।
आग्नेयीं दिशमारभ्य ईशानान्तं सरस्वतीम् (नावधि यावतीः)॥ १७

श्रियं दुर्गां भद्रकालीं स्वस्तिं स्वाहां शुभङ्करीम् ।
गौरीं च लोकधात्रीं च वागीशीं च समर्चयेत् ॥ १८

पङ्क्त्या समुपविष्टाश्च (पद्मवत्या समेताश्च)
सरस्वत्यादिकाः स्त्रि(स्त्र)यः ।
देव्योऽर्चयेच्छ्रियं वाणीं पार्श्वयोर्दक्षवामयोः ॥ १९

बाह्ये तु पूजयेद्ब्रह्मविष्णुरुद्रादिकांस्तथा ।
बाह्यावृतौ महेन्द्राद्यास्सवाहनपरिच्छदाः ॥ २०

अन्तः स्त्रीरूपिणीः पूज्या ब्रह्मविष्णुशिवास्तथा ।
भक्ताः स्वानन्यसंसिद्धा बहिरन्तश्च नित्यशः ॥ २१

स्वस्वमन्त्रैस्तु सम्पूज्य प्रणमेद्वारपार्श्वतः ।
गङ्गां च यमुनां चैव ऊर्ध्वोदुम्बरशाखयोः ॥ २२

गोदावरीं च कावेरीं तदन्ते पूजयेच्छिवे ।
सिन्धुकां नर्मदां चैव तदन्ते पूजयेत्ततः ॥ २३

ऊर्ध्वे द्वारश्रियं वामे तान्त्रां(म्रं) दक्षे सरस्वतीम् ।
ततः कवाटमुद्घाट्य दूर्वासिर्षपमञ्जरीम् ॥ २४

(ततो दूर्वां सर्षपं च तिलं च खरमञ्जरीम् ।)
अर्घ्यपात्रे तु निक्षिप्य हस्तेनादाय तज्जलम् ।
अस्त्रं पाशुपतं जप्त्वा प्रक्षिपेत्तिग्मलोचनः ॥ २५

मन्त्रैस्तु पशुवर्मास्त्रैः प्रोक्तं पाशुपते मनुः ।
इति विघ्नान्समुत्पा(त्त्वा)ट्य निर्माल्यं तु निरासयेत् ॥ २६

आरोप्य दीपजालानि पूजाद्रव्याण्यथानयेत् ।
आदौ गणं(प्राग्गणेशं) गुरुं दुर्गां स्मरेत्क्षेत्रेशमात्मनि ॥ २७

आसने कूर्मपीठे वा शोभने धातुचित्रिते ।
कुशास्तरणवैयाघ्रचर्मवासोविनिर्मिते ॥ २८

मनोहरे मृदुश्लक्ष्णे निम्नोन्नतविवर्जिते ।
पीठं वा चतुरश्रं वा वृत्तमष्टाश्रमेव वा ॥ २९

विचित्रं धातुपाषाणैर्यज्ञकाष्ठविनिर्मितम् ।
एकहस्तं द्विहस्तं वा पीठं पङ्कजचित्रकम् ॥ ३०

निवेशयेच्च तं मन्त्री साधारं क्ष्मातलाश्रयम् ।
(तत्पीठे चोत्तरास्यो वा तलं वा क्ष्मातलाश्रयम्)
भावयेन्मातृकाम्भोजमासनं स्वस्तिकादिकम् ॥ ३१

आसने चासिकामन्त्रं जप्त्वाऽन्तश्च विशेद्गुरुः ।
तारं नमो भगवति निविश स्वासने ततः ॥ ३२

जीवं रक्षयुगं ह्येतत्स्वाहान्तश्चासिकामनुः ।
प्राणायामत्रयं कृत्वा मूलमन्त्रेण संयुतः ॥ ३३

ध्यात्वा देवीं ज्वलद्रूपां सहस्रार्कसमप्रभाम् ।
ज्वालाकोटिसमाकीर्णां ज्वलन्तीं सर्वतोमुखीम् ॥ ३४

तेन संपूरयेद्विश्वमाब्रह्मभवनान्तिकम् ।
दिगौघं प्रज्वलन्तं च भावयेन्मन्त्रतेजसा ॥ ३५

क्ष्मामण्डलमिदं सर्वं ध्यायेत्पक्वं तु वह्निना ।
पुटवह्निविपाकेन मृण्मयं भाजनं यथा ॥ ३६

ततस्तन्मौलिनिष्यन्दसुधाकल्लोलसेचनात् ।
जगदादि कृतं ध्यायेत् स्थानशुद्धिरियं भवेत् ॥ ३७

अस्त्रमन्त्रेण दिग्बन्धं कुर्याद्दिक्षु विदिक्षु च ।
सप्राकारं तु संस्थानं कवचेनावकुण्ठयेत् ॥ ३८

अवकुण्ठ्याथ तर्जन्यौ मन्त्रं कवचमुच्चरन् ।
वज्रकञ्चुकरूपेण यथावद्देशिकोत्तमः ॥ ३९

गगनस्थैरदृश्यस्सन्नाचरेन्न्यासमात्मनः ।
पुनः पाशुपतास्त्रेण कुर्यात्प्राकारशोधनम् ॥ ४०

तिस्रः प्रो(त्रिस्त्रिरु)क्तेन तेनैव मूलहृन्मूर्धसु क्रमात् ।
पृथ्व्यादि चतुरण्डस्थभेदप्रत्यूहशान्तये ॥ ४१

अन्तस्तालत्रयं कुर्याद्बहिस्तालत्रयं तथा ।
पार्ष्णिघातकरास्फोटसमुदञ्चितवक्त्रकः ॥ ४२

पाताळभूनभोलीनभेदप्रत्यूहशान्तये ।
सकृत्सकृत्तदेवोक्त्वा बध्नीयाच्च दिशो दश ॥ ४३

त्रिरग्निवेष्टनं तेन त्रिः कुर्याद्व्यापकं तनौ ।
प्रणवद्वादशावृत्त्या नाडीशुद्धिमथाचरेत् ॥ ४४

हृदि स्वजीवचैतन्यं संपूर्णं तेन वर्त्मना ।
हंसमन्त्रेण सङ्कट्टमुद्रयोर्ध्वं समुन्नयेत् ।। ४५

द्वादशान्तस्थिते शुद्धे योजयेत्परतेजसि ।
अस्त्रेण कृत्वा तद्रक्षां ततो भूतानि शोधयेत् ।। ४६

पादाद्याजानु पृथ्वीं च जान्वाद्यामूलमम्बु च ।
मूलाद्याहृदयं तेजः हृदाद्याकण्ठकं मरुत् ।। ४७

कण्ठाद्यामस्तकं व्योम स्मृत्वा तेषां विचिन्तयेत् ।
निवृत्यादिकलावर्णैः बीजान्यथ पतीनपि ।। ४८

बीजैः क्रमेण ह्रां ह्रीं ह्रूं ह्रैं ह्रौं इति लयं नयेत् ।
षष्टिसंख्यां समारभ्य द्वादशं द्वादशं त्यजेत् ।। ४९

बीजैः पूर्वोदितैरेव प्रतिलोमेन वर्धयन् ।
पृथिवीवायुबीजाभ्यां काठिन्यं सुषिरं स्मरेत् ।। ५०

सोहं मूर्ध्नश्च हृत्पद्मं समानीय शिवात्मकम् ।
नीत्वात्मानं स्मरेद्देहं षट्त्रिंशत्तत्त्वरूपिणम् ।। ५१

प्राणप्रतिष्ठां विधिवत्कृत्वा तेन समाहितः ।
गुदात्तु द्व्यङ्गुलादूर्ध्वं सुषुम्नामूलरन्ध्रगम् ।। ५२

वादिसान्तार्णलसितं पङ्कजं कनकप्रभम् ।
तत्र विद्युल्लतारूपां तेजोरूपामणीयसीम् ।। ५३

आदिकुण्डलिनीमूर्ध्वं नयेत्षड्ग्रन्थि(चक्र)भेदिनीम् ।
संयोज्य द्वादशान्तस्थे शिवे तन्मथनोद्भवम् ।। ५४

तेजोज(ञ)लैर्विनिस्सार्य मातृकान्यासमारभेत् ।
अथ देवि प्रवक्ष्यामि मातृकान्यासमुत्तमम् ।। ५५

सर्वसिद्धिकरं पुंसां सर्वविद्यास्वरूपकम् ।
ऋचो यजूंषि सामानि तेषामङ्गानि सर्वशः ॥ ५६

वाङ्मयं निखिलं चैव सर्वं तन्मातृकामयम् ।
करतत्पृष्ठतद्व्याप्यषडङ्गान्विन्यसेत्ततः ॥ ५७

अङ्गुष्ठादिकनिष्ठान्तमन्यान्शिष्टान्स्वरानपि ।
दक्षप्रदेशिनीमूलाद्विन्यसेत्कादिसान्तकान् ॥ ५८

कनिष्ठिकाग्रपर्यन्तं वामस्यार्णं चतुश्चतुः ।
एकैकशोऽप्यंगुलीनां पर्वस्वग्रेषु विन्यसेत् ॥ ५९

हलावङ्गुष्ठयोर्न्यस्य सर्वानग्रेषु विन्यसेत् ।
आद्यन्तस्वरषट्कस्य लघुदीर्घस्य मध्यगैः ॥ ६०

विन्यस्यैकैकमेषां च षडङ्गानि यथाक्रमम् ।
ऋषिर्ब्रह्मा मनोश्छन्दो गायत्री देवता पुनः ॥ ६१

सरस्वती हसौमाद्यां हसौमन्त्रं च मातृकाम् ।
निर्वाप्य मातृकां न्यस्येत्ततो दशविधामपि ॥ ६२

मूर्धास्ययोश्चक्षुषोश्च श्रोत्रयोर्नासयोस्तथा ।
कपोलयोरोष्ठयोश्च दन्तपङ्क्तौ(पङ्क्त्योः) च मूर्धनि ॥ ६३

आस्ये च विन्यसेन्मन्त्री स्वरान् षोडश शक्तितः ।
कचवर्गद्वयं बाह्वोः पञ्च सन्धिषु विन्यसेत् ॥ ६४

टतवर्गद्वयं पादसन्ध्यग्रेषु तथा न्यसेत् ।
पवर्गं पार्श्वयुगळे पृष्ठनाभ्युदरेषु च ॥ ६५

शिष्टान्दशार्णान्हृदयकरमूलककुत्सु च ।
पादयोः करयुग्मे च कुक्षौ वक्षसि च न्यसेत् ॥ ६६

षड्दीर्घबिन्दुसंभिन्नमुक्त्वा जातिसमन्वितम् ।
बीजं नभक्षमलवरयूं अङ्गानि कल्पयेत् ॥ ६७

मा मालिनी मूर्तये च हृदा मूर्तिप्रकल्पना ।
अबभावलीर्घा(र्धा)टीठाझञौ(जञौ) सर्गादिरेळजौ ॥ ६८

पसहाबलसक्षामास्थान्वा(न्त्रा)त्तविद्धयोदभौ ।
एतत्क्रमागतैर्वर्णैरुक्तस्थानेषु विन्यसेत् ॥ ६९

शक्तिश्रीमालिनीमूर्त्यै त्रिपुरायै नमोऽन्तकम् ।
मन्त्रोऽयं सर्ववपुषि न्यस्तव्यः प्रथमं पुनः ॥ ७०

शिखायां मालिनी न्यस्या ग्रसिनी शिरसि स्थिता ।
निवृत्तिः पश्चिमे वक्त्रे प्रतिष्ठा तथोत्तरे ॥ ७१

विद्या दक्षिणवक्त्रे स्यात् शान्तिः पूर्वे प्रतिष्ठिता ।
चामुण्डा चोर्ध्वदेशे स्यान्नेत्रयोः प्रियदर्शिनी ॥ ७२

नासाग्रे गुह्यशक्तिश्च श्रुतौ नारायणी धृता ।
मोदिनी कण्ठभूषस्था प्रज्ञा वामस्य भूषणा ॥ ७३

वदने वज्रिणी प्रोक्ता दक्षदंष्ट्रासु कर्कटा ।
वामोर्ध्वे काळिका दन्ते घोराऽधोदन्तदक्षिणे ॥ ७४

वामाधो विरजा दन्ते शिवा दन्तान्तरालके ।
माया जिह्वास्थिता देवी वाचि वागीश्वरी तथा ॥ ७५

शिखिवाहा स्थिता कण्ठे भीमा स्कन्धे तु दक्षिणे ।
वामस्कन्धे त्वग्निवेगा वामा दक्षभुजे स्थिता ॥ ७६

विनायकी वामभुजे पूर्णिका करमध्यगा ।
करपृष्ठे स्थिता शक्तिर्झङ्कारी दक्षिणाङ्गुलौ ॥ ७७

वामाङ्गुलौ कुब्जिनी च जीवे च परमात्मिका ।
अम्बिका तु स्थिता प्राणे पूतना दक्षिणे स्तने ॥ ७८

वामस्तने छगळजा आमोदी स्तनदुग्धिका ।
लम्बोदरी तूदरगा नाभौ तु हरिणी स्थिता ॥ ७९

महालक्ष्मीर्नितम्बस्था गुह्ये तु कुसुमायुधा ।
वामा शुक्रे स्थिता देवी तारा चोरुद्वये स्थिता ॥ ८०

जनार्दी दक्षजानुस्था वामजानौ क्रिया तथा ।
गायत्री दक्षजङ्घस्था सावित्री वामजङ्घगा ॥ ८१

दहना(नी)दक्षिणे पादे फट्कारी वामपादगा ।
पञ्चवक्त्रधरां देवीं पञ्चबाणेक्षुशोभिताम् ॥ ८२

निवृत्यादिकलायुक्तां प्रतिवक्त्रं त्रिलोचनाम् ।
पाशाङ्कुशधरां देवीं पञ्चशक्तिस्वरूपिणीम् ॥ ८३

पञ्चयुग्मभुजोपेतां सुधाशक्तित्रिशूलिनीम् ।
वरदाब्जाभयोद्योतां इच्छाज्ञानक्रियात्मिकाम् ॥ ८४

रक्तवस्त्रपरीधानां रक्तमाल्यानुलेपनाम् ।
पङ्कजासनमध्यस्थां मालिनीं भावयेच्छिवाम् ॥ ८५

मूलं वाग्भवमुच्चार्य तत्स्थितं विषयं बहिः ।
भावयन्कामराजेन पूरयेदुपसंहरेत् ॥ ८६

सम्भावयन् चिदात्मानं शक्तिबीजेन कुम्भयेत् ।
मूलं हृद्बिन्दुशीर्षेषु व्यस्तया च समस्तया ॥ ८७

विन्यसेच्छुद्धया त्वेकीकुर्याल्लिङ्ग चतुष्टयम् ।
न्यासमार्गेण तत्तेजः संक्रमय्य(मानीय)कराञ्जलौ ॥ ८८

सबिन्दुकामृतानन्दसत्यानुग्रहवान् भृगुः ।
दक्षादिमनुनाऽनेन कुर्यात्षट्करशोधनम् ।। ८९

विभज्य मध्यमानामकनिष्ठाङ्गुष्ठतर्जनी ।
तलेषु विन्यसेद्बालां केशाद्याचरणं त्रिशः ।। ९०

तथैव व्याप्य च तथा मूलहृद्बिन्दुमूर्धसु ।
न्यसेद्बालां समुच्चार्य ततस्त्रिपुरसुन्दरि ।। ९१

आत्मानं रक्ष रक्षेति कुर्याद्रक्षां हृदि स्पृशन् ।
प्राणायामत्रयं कृत्वा बालया रेचकादिभिः ।। ९२

मूलाग्रे चैव हृदये भ्रुवोर्मध्ये च मूर्धनि ।
विन्यसेन्मूलविद्याया बीजैर्व्यस्तैस्ससंयुतैः ।। ९३

मूलविद्यां स्मरेद्वह्निसोमसूर्यत्रयात्मिकाम् ।
द्वादशान्ते तु विगळत्पीयूषेणात्मनस्तनुम् ।। ९४

सम्प्लाव्य तन्मयो भूत्वा न्यसेत्पश्चान्नवासनम् ।
करशुद्धिकरी चाद्या त्रिपुरे चामृतार्णवा- ।। ९५

(आ)सनाय नम इत्येको बालान्ते त्रिपुरेश्वरि ।
पीताम्बुजासनायेति नमोऽन्तश्शक्तिकाम(मि)सौ ।। ९६

त्रिपुरासुन्दरीदेव्या ह्या(त्मा)सनाय नमो नमः ।
स्याद्धैं हं क्लीं हसौरन्ते त्रिपुरावासिनीति च ।। ९७

चक्रासनाय इत्यन्यो मन्त्रो हैं(हैं) ह्रौं ततः परम् ।
क्लीं हौं सौ(:) त्रिपुराश्रीति सर्वमन्त्रासनाय हीम् ।।९८

क्लीं ब्लें त्रिपुरमालिन्यै अन्ते साध्यपदोपरि ।
सिद्धासनाय ह्चान्यो ह्रीं श्रीं सौस्त्रिपुरा ततः ।। ९९

सिद्धे सिंहोद्धृतपदमासनाय नमो नमः ।
हसैं हसक्लीं हसौः त्रिपुराम्बा पदमुच्चरेत् ॥ १००

पर्यङ्कशक्तिपीठासनाय हृन्मनुरष्टमः ।
षट्कूटविद्याबीजान्ते ततस्त्रिपुरभैरवी ॥ १०१

सदाशिवमहाप्रेतरक्तपद्मासनाय हृत् ।
एताश्च पादजानूरुजघनापानलिङ्गके ॥ १०२

मूलमन्त्रा(ध्या)ग्रहस्ता(हं ता)भिर्ब्रह्मरन्ध्रेषु विन्यसेत् ।
अङ्गुष्ठाभ्यां हृत्तथान्यास्वङ्गुलीषु तले न्यसेत् ॥ १०३

षडङ्गान्यपि विन्यस्य मूलेन व्यापकं न्यसेत् ।
करयोर्मूलमध्याग्रमूलहृद्बिन्दुषु न्यसेत् ॥ १०४

मूलबीजत्रयावृत्त्या तुर्येण ब्रह्मरन्ध्रके ।
तेनैव व्यापकं कृत्वा परान्यासं समाचरेत् ॥ १०५

ब्रह्मरन्ध्रे सहस्रारमरुणाधोमुखाम्बुजम् ।
तत्कर्णिकायामरुणं पूर्णचन्द्रस्य मण्डलम् ॥ १०६

तन्मध्ये स्वशिखामूलदेशाग्रे यन्त्रमुत्तमम् ।
श्रींकारं चिन्तयित्वास्य नवचक्रान्तरात्मकम् ॥ १०७

प्राकाररूपां तन्मध्यादुद्यन्तीममृतात्मिकाम् ।
स्थितां कुण्डलिनीमूलपर्यन्तं व्यापयेत्ततः ॥ १०८

चतुर्दलाधारपद्मकर्णिकानलमण्डले ।
त्रिकोणस्वाग्रकोणाग्रनवचक्रान्तरात्मकम् ॥ १०९

सार्धत्रिवलयाकारा(सपरार्धकसारूपा)तन्मयी वह्निमण्डला ।
लिङ्गाकारं तदोत्थाप्य योनिरूपं ततः परम् ॥ ११०

सुधां च कुण्डलीमध्ये प्रवेश्योर्ध्वं च तां नयेत् ।
ग्रन्थिभेदक्रमेणैव मुकुलेन्दुपदावधि ॥ १११

अमृतानलकुण्डल्योस्तयोर्मथनसम्भवैः ।
करुणामृतवर्षैस्तं सिञ्चेन्मध्यमनुस्मरेत् ॥ ११२

इत्थं तदैक्यचिन्तात्मा पश्यन्तीन्यासमाचरेत् ।
शिरस्त्रिकोणकाग्रादि वामावर्तेन विन्यसेत् ॥ ११३

रेखासु त्रितयं पञ्च तत्त्रिकं च क्रमात्कलाः ।
वामा ज्येष्ठा च रौद्री अम्बिका कामरूपिणी ॥ ११४

इच्छाज्ञानक्रियाशक्त्यहङ्कारात्मा ततः परम् ।
तथाहङ्काररूपा च चतुर्थी हृदयात्मिका ॥ ११५

अनु(नि)च्छाधिकृताकारशून्या बिन्दुद्वयात्मिका ।
स्पर्शषट्कोणरेखा च नादोऽर्धेन्दुध्वनिस्तथा ॥ ११६

वृत्तबिम्बेऽ(बा)कारशक्तिर्बिन्दुद्वयसबीजका ।
सहरूपाक्षमात्मा च नवयुग्मान्यनुत्तमान्(क्रमात्) ॥ ११७

विशेषेण त्वात्मने च हृन्नादाय विशेष्यके ।
ब्रह्मरन्ध्रादिमूलान्तं नवाधारेषु विन्यसेत् ॥ ११८

कृत्वैवं मध्यमान्यासं वैखरीन्यासमाचरेत् ।
षडाधारं त्रिधा कृत्वा वैखर्यर्णानपि त्रिधा ॥ ११९

आद्याधारद्वये वादिसान्ता बादिलसीमकान् ।
हसौमन्तान् प्रविन्यस्य प्रत्येकं तत्पदद्वये ॥ १२०

वादीन् बादीन् कादिठान्तान्हसौमन्तान्क्रमान्न्यसेत् ।
तृतीयाब्जद्वये पश्चात् स्वरान्लक्षौ हसैं परान् ॥ १२१

विन्यस्य चित्सुधावृष्ट्यासेकादुज्ज्वलितप्रभान् ।
वर्णान्न्यस्त्वा षडाधारेष्वेतैरन्तस्तमो दहेत् ।। १२२

चन्द्रकान्तप्रतीकाशाः पुष्पबाणेक्षुकार्मुकाः ।
पाशाङ्कुशधरा मूर्त्यो ध्येयास्तद्वर्णदेवताः ।। १२३

ईकारोर्ध्वगतो बिन्दुर्मुखं भानुरधोगतौ ।
स्तनौ दहनशीतांशू योनिर्हार्धात्पदद्वयम् ।। १२४

नासाद्वि(द्वी)पाङ्कजातं तु मुखं बिन्दोस्समुत्थितम् ।
स्तनबिन्दुद्वयाद्धाहयोनिर्हार्धात्पदद्वयम् ।। १२५

एवं कामकलारूपदेवतामयमात्मनः ।
वपुर्विचिन्त्य देवेशि आयुधन्यासमाचरेत् ।। १२६

बाणौ नेत्रे(शरौ नेत्रे) भ्रुवौ चापौ कर्णे(कण्ठे) पाशद्वयं न्यसेत् ।
सृणिद्वयं तु नासाग्रे दक्षिणाद्यं तु विन्यसेत् ।। १२७

एवं विन्यस्य देवेशि स्वाभेदेन विचिन्तयेत् ।
ततस्तु करशुद्ध्यादिन्यासं कुर्यात्समाहितः ।। १२८

मूर्ध्नि गुह्ये च हृदये नेत्रत्रितय एव च ।
श्रोत्रयोर्युगळे देवि मुखेऽपि भुजयोः पुनः ।। १२९

पृष्ठे जानुनि नाभौ च विद्यान्यासं विधाय च ।
करशुद्धिं पुनश्चैव आसनानि षडङ्गकम् ।। १३०

वक्त्रे च हृदये कण्ठे हृदि कुक्षौ च नाभिके ।
आधारे गुह्यदेशे च वाग्देवीस्तु प्रविन्यसेत् ।। १३१

अग्निसूर्येन्दुचक्रेशीकामवज्रभगेश्वरीः ।
त्रिपुरां सर्वचक्रेशीमाधारे हृदये तथा ।। १३२

शिखायां व्यापकत्वेन विन्यसेत्क्रमशः प्रिये ।
एवं न्यासविधिं कृत्वा सर्वान्कामानवाप्नुयात् ॥ १३३

सर्वे रोगाश्च नश्यन्ति नश्यन्ति सकलापदः ।
शिव एव भवेत्सद्यः साक्षाद्देवीमयो भवेत् ॥ १३४

उपायस्सर्वसिद्धीनामस्मात्परतरो नहि ।
एवं न्यासविधिं कर्तुमशक्तश्चेत् द्विजोत्तमः ॥ १३५

मूलाक्षरपदाङ्गानां कृत्वा न्यासं च भक्तितः ।
सिद्धमन्त्रो भवेद्देवि पूजार्हश्चोपजायते ॥ १३६

इति सौभाग्यचिन्तामणौ पूर्वखण्डे षड्विंशः पटलः ॥

## सप्तविंशः पटलः

### नित्यार्चनविधिः

अथ वक्ष्यामि देवेशि नित्यार्चनविधिक्रमम् ।
प्राणानायम्य सङ्कल्प्य ध्यात्वा देवीं महेश्वरीम् ॥ १

ततः शुद्धोदकेनैव मूलमन्त्रैस्त्रिभिः पदैः ।
समस्तेन पुरो देव्याः सामान्यार्घ्यं प्रदापयेत् ॥ २

ततः स्थण्डिलमाकल्प्य गन्धपङ्केन तण्डुलैः ।
द्रोणद्वयैर्लिखेत्तत्र षट्कोणान्तरसंयुतम् ॥ ३

तन्मध्ये बैन्दवस्थाने विन्यसेत्क्रमशः प्रिये ।
विद्यातत्त्वेश्वरीं शक्तिं ज्ञानतत्त्वेश्वरीं तथा ॥ ४

शिवतत्त्वेश्वरीं चैव शक्तितत्त्वेश्वरीं तथा ।
विन्यसेत्सर्वतत्त्वेशीं त्रिपुराम्बां यथा पुरा ॥ ५

ध्यात्वा देवीं समभ्यर्च्य गन्धपुष्पाक्षतादिभिः ।
तन्मध्ये कलशं न्यस्य साधारं तोयपूरितम्॥ ६

एलालवङ्गकस्तूरीकर्पूरसुरभीकृतम् ।
ततः पाशुपतास्त्रेण सरित्तीर्थानि सर्वशः ॥ ७

आवाह्यावाहनादींश्च मुद्राः सन्दर्श्य चार्चयेत् ।
विदिक्षु हृदयादींश्च दिक्ष्वस्त्रं मध्यमेक्षणम् ॥ ८

आधारे तु कलापात्रे(वह्नेः) मध्ये (पात्रे) सूर्यस्य वै कलाः ।
जले चन्द्रकलाश्चैव मुद्रया चामृतीकृते ॥ ९

एवं शुद्धेन तोयेन पूजापात्राणि पूरयेत्।
ततः स्थण्डिलमास्तीर्य द्रोणसंख्यैश्च तण्डुलैः ॥ १०

तन्मध्ये विलिखेत्पद्मं साष्टपत्रं सकर्णिकम् ।
मध्यादिमधुपर्कादिनवपात्राणि विन्यसेत्॥ ११

पाद्यार्घ्याचमनस्नानपात्राण्यैन्द्रादिषु क्रमात् ।
ईशे त्वावाहनं पात्रं वह्नौ गण्डूषमुच्यते ॥ १२

नैर्ऋत्यां तैलमुद्दिष्टं स्नानीयं वायुगोचरे ।
मधुपर्के दधिक्षीरमध्वाज्यफलमावपेत् ॥ १३

पाद्यपात्रे क्रमेणैव (प्रदातव्यं) दूर्वां श्यामां क्रमेण च ।
विष्णुक्रान्ताम्बुजं चैव न्यसेत्पाद्यस्य सिद्धये ॥ १४

अर्घ्यपात्रे कुशाग्रं च तिलं सर्षपमेव च ।
दूर्वागन्धाक्षतान् पुष्पमर्घ्यपात्रे विनिक्षिपेत् ॥ १५

तथाऽऽचमनपात्रेऽपि जातीफललवङ्गकौ ।
तक्कोलं चैव निक्षिप्य कुर्यादाचमनीयकम् १६

स्नानपात्रे च कोष्ठं च हरिद्रां चम्पकं तथा ।
वचाशैलेयलामज्जान् क्षिपेत्स्नानस्य सिद्धये ।। १७

आवाहनार्थपात्रे तु गन्धपुष्पाक्षतान् क्षिपेत् ।
गण्डूषे गन्धपुष्पाणि निक्षिपेद्देशिकोत्तमः ।। १८

अभ्यञ्जनार्थपात्रेऽपि गन्धतैलं विनिक्षिपेत् ।
ततः स्नानीयपात्रेऽपि हरिद्रामलकादिकम् ।। १९

स्नानं भोज्यमलङ्कारमासनं त्रिविधं भवेत् ।
पाद्यादिस्नानपर्यन्तं स्नानासनपरिग्रहः ।। २०

वस्त्रादिदीपपर्यन्तमलङ्कारासने विदुः ।
मधुपर्कं च नैवेद्यं भोज्ये चाचमनं तथा ।। २१

अन्यत्सर्वमलङ्कारे स्वस्थाने वा समाचरेत् ।
ततः स्थण्डिलमाकल्प्य चतुर्दळसरोरुहम् ।। २२

मध्यादि क्षीरदध्याज्यशकृन्मूत्राण्यनुक्रमात् ।
आप्याय दधि शुक्रं च गन्धद्वारां तदित्यृचा ।। २३

अभिमन्त्र्य च संप्रोक्ष्य स्नानद्रव्याणि कल्पयेत् ।
पञ्चगव्यं पञ्चामृतं इक्षुजं नाळिकेरजम् ।। २४

क्षीरं चैन्द्रादिषु न्यस्य मूलमन्त्रेण मन्त्रितम् ।
अभ्यर्च्य सपवित्रेण वस्त्रेणाच्छाद्य सुन्दरि ।। २५

पात्रत्रयं वा विन्यस्य पाद्यार्घ्याचमनानि च ।
गन्धपुष्पादिनाऽभ्यर्च्य प्रणवेनैव केवलम् ।। २६

प्रणवान्तर्भवा देवाः प्रणवे पर्यवस्थिताः ।
वाङ्मयं प्रणवं तस्मात् प्रणवं च समभ्यसेत्।। २७

कपाटोद्घाटवेळायां समावाहनकर्मणि ।
धूपे दीपे च नैवेद्ये तथा नीराजनाविधौ ॥ २८

तथैवोद्वासनविधौ घण्टानादः प्रशस्यते ।
प्रणवोच्चारिणीं घण्टां नादब्रह्मस्वरूपिणीम् ॥ २९

अग्रे चक्रांकुशयुतामेषु कालेषु नादयेत् ।
धूपे दीपे च नीराजे छत्रचामरकादिषु ॥ ३०

प्रच्छन्नपटमुन्मुच्य सेवयेयुर्महेश्वरीम् ।
शङ्खप्रतिष्ठां वक्ष्यामि यथावत् शृणु सुन्दरि ॥ ३१

विधाय वामभागे तु मण्डलं चतुरश्रकम् ।
शुद्धोदकेन गन्धाद्यैरर्चयेन्मूलविद्यया ॥ ३२

ततः(त्र)शङ्खं प्रतिष्ठाप्य शुद्धतोयाभिपूरितम् ।
सगन्धपुष्पं साधारं सषडङ्गार्चनं पुनः ॥ ३३

शङ्खं च मधुपर्कं च स्नानं चाढकमात्रया ।
कल्पयेत्पञ्चगव्यं तु तदर्धमिदमम्बिके ॥ ३४

गण्डूषं च तथा पाद्यं कुर्यात्त्रिप्रस्थमात्रया ।
प्रस्थद्वययुतान्येव पात्राण्यन्यानि पार्वति ॥ ३५

तदर्धं वा तदर्धं वा कल्पयेत विचक्षणः ।
इदं च शृणु वक्ष्यामि विशेषार्घ्यविधिं प्रिये ॥ ३६

**विशेषार्घ्यविधिः**

सर्वशुद्धिकरं श्रेष्ठं सर्वपापविनाशनम् ।
कृत्वा देव्याः पुरोभागे मण्डलं चतुरश्रकम् ॥ ३७

त्रिकोणवृत्तषट्कोणं रचयेत्तत्र मण्डले ।
समस्तव्यस्तबीजै(कोणै)स्तं मध्यं कोणत्रयं तथा ॥ ३८

अभ्यन्तरे लिखेत्त्र्यश्रमये रेखासरोरुहम् ।
अकथादि त्रिरेखात्मा हळक्षाभ्यन्तरं बुधः ॥ ३९

तच्च हंसेन चाराध्य बहिर्वृत्तषडश्रकम् ।
षड्भिर्मूलषडङ्गैस्तु पुरोभागादि पूजयेत् ॥ ४०

मूलविद्यां जपेद्देवि सप्त स्पृष्ट्वार्घ्यकं बुधः ।
हंसश्शुचिः प्रतद्विष्णुस्त्रियम्बकमिति त्र्यृचः ॥ ४१

गायत्रीं ब्रह्मसूक्तं च देवीं वाचमिति त्र्यृचः ।
विष्णोर्नुकमिदं विष्णुर्गन्धद्वारां श्रियेति च ॥ ४२

त्रियम्बकं च यो रुद्रस्ततो गौरीमिमाय च ।
वेदादि हंसश्च ततः पृथिव्यापश्च (पञ्च)शान्तिका ॥ ४३

एभिः षोडशभिर्मन्त्रैर्ब्रह्मविष्णुशिवात्मकैः ।
मन्त्रितेनार्घ्यतोयेन प्रोक्षयेन्मूलविद्यया ॥ ४४

बिम्बानि चात्मनोऽङ्गानि शिरःप्रभृति सर्वशः ।
ब्रह्महत्यादिपापघ्नं सर्वशुद्धिकरं शुभम् (परम्) ॥ ४५

विशेषार्घ्यं विना वापि प्रोक्षयेच्छङ्खवारिणा ।
व्यस्ताभिश्च समस्ताभिः व्याहृतीभिस्ततः परम् ॥ ४६

**पूजाक्रमः**

अथवाऽन्यत्प्रवक्ष्यामि पात्रत्रितयसाधनम् ।
पाद्यमर्घ्यं तथाचामं तत्तद्द्रव्यसमन्वितम् ॥ ४७

गायत्रीमूलमन्त्राभ्यामर्चयित्वाऽमृतीकृतम् ।
आवाह्य चात्महृदयात्पूजयेत्परमेश्वरीम् ॥ ४८

वेदपारायणादीनि पूजाकाले समाचरेत् ।
ऋग्वेदं पूर्वदिग्भागे यजुर्वेदं तु दक्षिणे ॥ ४९

पश्चिमे सामवेदं च अथर्वं चोत्तरे तथा ।
कोणेषु च जपेत्स्तोत्रान्नृत्तगीतादि बाह्यतः ॥ ५०

निधायावाहनं पात्रं निजपाणितलोदरे ।
ध्यायेदेकाग्रचित्तस्सन् पात्रे गन्धाम्बुपूरिते ॥ ५१

देवीं प्रसन्नवदनां पद्मरागसमप्रभाम् ।
पाशाङ्कुशेक्षुकोदण्डपञ्चबाणलसत्कराम् ॥ ५२

कलानाथकलाकान्तकमनीयकिरीटिनीम् ।
त्रिनेत्रां दिव्यभूषाढ्यां ध्यायेत् त्रिपुरसुन्दरीम् ॥ ५३

''महापद्मवनान्तस्थे कारणानन्दविग्रहे ।
सर्वभूतहिते मातरेह्येहि परमेश्वरि'' ॥ ५४

इत्यनेनैव मनुना देवीमावाह्य सर्वगाम् ।
मन्त्रदेवोद्भूतां देवीं सर्वमन्त्रस्वरूपिणीम् ॥ ५५

स्वहस्तपात्रतोयान्तं ध्यात्वा पद्मं सकर्णिकम् ।
तत्रावाह्य पुनर्बिम्बे स्थापयेत्परमेश्वरीम् ॥ ५६

पात्रस्थं पुष्पमादाय त्रिखण्डेनोपरि न्यसेत् ।
संस्थापनं सन्निधानं सन्निरोधमतः परम् ॥ ५७

सकलीकरणं पश्चाद्विदध्यादवकुण्ठनम् ।
अमृतीकरणं पश्चात् कुर्वीत परमीकृतम् ॥ ५८

क्रमादेतानि कुर्वीत मन्त्रवित्स्वागतादिकम् ।
मन्त्रवित् (स्वागतं) कुशलप्रश्नं निगदेदग्रतो गुरुः ॥ ५९

आपः पादे त्रिरा(त्र्युचा)दद्यात्पाद्यं पादे नमोऽन्तया ।
स्वाहान्तया तु गायत्र्या शिरस्यर्घ्यं प्रदापयेत् ॥ ६०

शन्नोदेवीत्यृचास्ये तु स्वधयाचमनीयकम्।
तैलं तु तारयुक्तेन यदतो वाततेत्यृचा ॥ ६१

अङ्गादङ्गादिति तथा हरिद्रामलकादिकम्।
अब्लिंगैः पावमानीभिः आयुःश्री(श्रीवाक्तत्) सूक्तकैः सह॥ ६२

स्नापयेत्पञ्चगव्येन ततः पञ्चामृतेन च ।
इक्षुजं नाळिकेराम्बु क्षीराण्यपि यथाक्रमम् ॥ ६३

पञ्चगव्यं पञ्चामृतमिक्षुजं नारिकेलजम्।
क्षीरं च शुद्धतोयं च षड्विधं चाभिषेचनम् ॥ ६४

विनाधिवासितं तोयं कलशद्रव्यवर्जितम्।
स्नापयेद्यदि संमोहान्निष्फलानि वरानने ॥ ६५

अन्ते शुद्धोदकस्नानं सर्वदा तु प्रशस्यते ।
नित्ये नैमित्तिके चैव काम्ये पूजाविधौ तथा ॥ ६६

कारयेन्नृत्तगीतादि स्नानकाले विशेषतः।
स्नानोपचारसंयुक्तं त्रिद्धि सन्ध्ये(त्रिविधं ए)कमेव वा॥ ६७

एकबेरविधानं चेद्बिम्बे तु स्नापयेत्क्रमात्।
बहुबेरविधानं चेत्कर्मार्चायां दिने दिने ॥ ६८

शुची व इति मन्त्रेण संप्रोक्ष्याच्छादनं शुभम्।
क(व)र्माणि तेत्यृचा कुर्याद्धर्मणोद्धर्तनं बुधः ॥ ६९

भोज्यासनमथारोप्य विसृज्य स्नानमासनम्।
स्वधान्तं मधुमन्त्रेण मधुपर्कं निवेदयेत् ॥ ७०

त्रिवारं वदने दद्याद्गण्डूषं मूलविद्यया ।
वामपार्श्वे बृहत्पात्रं स्थाप्य तस्मिन्विनिक्षिपेत् ॥ ७१

पुनराचमनं दत्वा तत्वैर्वा मूलविद्यया ।
अलङ्कारासने पश्चादारोप्य परमेश्वरीम् ।। ७२

युवं वस्त्राणि मन्त्रेण मूलेनाप्यम्बराणि च ।
पुनराचमनं दद्याद्ब्रह्मसूत्रं च धारयेत् ।। ७३

यज्ञोपवीतमनुना मूलेनाचमनं ददेत् ।
गन्धद्वारामिति ऋचा दिव्यगन्धानुलेपनम् ।। ७४

पुष्पावतीरिति ऋचा माल्यपुष्पाणि दापयेत् ।
श्रिये जातेति मन्त्रेण सर्वालङ्कारमादिशेत् ।। ७५

धूपाग्नौ वायुमभ्यर्च्य कामः स(प्र)मृध्यतामिति ।
वात आवात्विति ऋचा धूरसीति च धूपयेत् ।। ७६

सप्तविंशन्नवत्र्येकं चतुर्धा दीप उच्यते ।
अश्विन्यादियुतं सूर्यमुद्वयं तमसेत्यृचा ।। ७७

रात्रौ सोमो धेनुमिति पुष्पवन्तौ समर्चयेत् ।
नवाङ्के तावुभावेव ग्रहमध्यगतौ तथा (गता)।। ७८

त्र्यङ्केऽग्निसूर्यशशिनः पूज्या वामादि सर्वदा ।
एकाङ्केऽग्निं समभ्यर्च्य अग्निर्मूर्धेति मन्त्रतः ।। ७९

नासान्तं धूपमाख्यातं नेत्रान्तं दीप उच्यते ।
पद्मस्वस्तिकरूपेण हंसाकारेण वाऽनघे ।। ८०

भ्रामयेत्पुरतो देव्याः मध्ये मध्ये जलं स्पृशेत् ।
अथ देवीमनुज्ञाप्य परिवारार्चनं चरेत् ।। ८१

अङ्गैस्तु प्रथमावृत्तिः कामेश्यादिर्द्वितीयका ।
लक्ष्म्यादिश्च तृतीया स्यात्सुन्दर्यादिश्चतुष्टयी ।। ८२

शान्त्यादिः पञ्चमी ज्ञेया षष्ठी विघ्नेश्वरादिका ।
सप्तमी वासवाद्याश्च कुमुदादिस्तथाष्टमी ॥ ८३

वज्राद्यन्तं समभ्यर्च्य नमोऽन्तैः स्वस्वनामभिः ।
पूर्वे वा समकाले वा शिष्येणान्येन कारयेत् ॥ ८४

स्वयं तु दीपदानान्ते पूजयेदङ्गदेवताः ।
अङ्गाभावे यजेद्देवीं केवलां वा महेश्वरीम् ॥ ८५

एकपीठे पृथक्पूजां विना यन्त्रं न कारयेत् ।
अङ्गाङ्गिभावनां त्यक्त्वा देवताशापमाप्नुयात् ॥ ८६

अन्नं चतुर्विधोपेतं रसैः षड्भिः समन्वितम् ।
क्षीराज्यगुलतैलाक्तं व्यञ्जनैर्बहुभिर्युतम् ॥ ८७

प्रच्छन्नपटमासज्य प्रोक्षयेदस्त्रमन्त्रतः ।
धेनुमुद्रां प्रदर्श्याथ अमृतीकृत्य मन्त्रतः ॥ ८८

ऐं क्लीं ओं जुं सः इत्युक्त्वा अमृते अमृतोद्भवे ।
अमृतेशीति नामान्ते ब्रूयादमृतवर्षिणि ॥ ८९

अमृतं स्रावयद्वन्द्वं स्वाहान्तो मनुरीरितः ।
यद्दीयते च देवेभ्यो मनुष्येभ्यश्च दीयते ॥ ९०

यत्स्वेन (स्वयं) भुज्यते वान्नं मन्त्रेणानेन मन्त्रितम् ।
भेषजं वापि यज्जप्तं शुभं वाऽशुभमेव वा ॥ ९१

तत्सर्वममृतेश्वर्याः प्रभावादमृतायते ।
नैवेद्यं च हविर्देव्या दद्यादमृत(नैवेद्य)मुद्रया ॥ ९२

अन्नसूक्तेन मधुना मन्त्रेणान्नपतेत्यृचा ।
ततस्त्वाचमनं दद्याद्वक्ष्यमाणेन वर्त्मना ॥ ९३

हैमे वा राजते ताम्रे कांस्ये वा भाजने शुभे ।
ईषत्पक्वसुपिष्टेन कुर्याद्वेदाङ्गुलोन्नतान् ॥ ९४

दीपान् डमरुकाकारान् त्रिकोणानतिशोभितान् ।
कर्षाज्यग्रहणान्कुर्यान्नव सप्ताथ पञ्च वा ॥ ९५

अथवा पूर्वमुक्तेन द्रव्येण तु घटं शुभम् ।
प्रादेशोच्छ्रायविस्तारं कण्ठं तु चतुरङ्गुलम् ॥ ९६

त्र्यङ्गुलं च मुखं कृत्वा त्रिकोणाङ्कं ततोपरि ।
वर्त्या कर्पूरगर्भिण्या माययाग्निं प्रदीपयेत् ॥ ९७

अभ्यर्च्य वह्निमन्त्रेण दीपमुद्रां प्रदर्शयेत् ।
सव्येन जानुना तिष्ठन्कराभ्यां घटदीपकम् ॥ ९८

शिरःपर्यन्तमुद्धृत्य भ्रामयेन्मूलमुच्चरन् ।
भित्तिषु(भाक्तिषु) स्नेहपूर्णाभिर्वर्तिकाभिरनेकधा ॥ ९९

आरार्तिभिश्च दासीनां हस्तगाभिरनेकधा ।
ततस्तु शीतले तोयं कर्पूरसुरभीकृतम् ॥ १००

वक्ष्यमाणेन विधिना कुर्यान्नीराजनाविधिम् ।
स्थण्डिले नवकोष्ठे च नव पञ्चैकमेव वा ॥ १०१

निधायेन्द्रादिमध्यान्तं अर्चयेदग्निबीजकम्(तः) ।
दर्शयेद्दीपमुद्रां च पृथग्वा सकृदेव वा ॥ १०२

नवचक्रेश्वरीमन्त्रैरर्चयेच्च पृथक्पृथक् ।
त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी ॥ १०३

श्रीर्मालिनी च सिद्धाम्बा महात्रिपुरसुन्दरी ।
यजेत्स्वनाममिर्मन्त्रैः पञ्चाङ्के पञ्चशक्तयः ॥ १०४

गौर्यादीन्द्रादिमध्यान्तं अर्चयेद्वरवर्णिनि ।
एका चेन्मूलमन्त्रेण गन्धपुष्पादिनार्चयेत् ॥ १०५

इन्द्रादिब्रह्मपर्यन्तमुद्धृत्य स्वस्वनामभिः ।
दद्यात्समर्पयामीति चतुर्थ्यन्तहृदा सह ॥ १०६

पद्मस्वस्तिकरूपेण हंसाकारेण वाऽनघे ।
भ्रामयेत्पुरतो देव्या इमं मन्त्रमुदीरयन् ॥ १०७

"समस्तचक्र (प्रक्षिप्तचारु)चक्रेशीयुते देवि नवात्मिके ।
आरार्तिकमिदं देवि गृहाण मम सिद्धये" ॥ १०८

इति मन्त्रं जपित्वा तु बिम्बस्थे(म्बे ते)नैव तेजसा ।
दीपस्थं परमं तेजो योजयेद्भावयोगतः ॥ १०९

छत्रे हरिं समभ्यर्च्य मध्ये तु कमलां यजेत् ।
दण्डे तु नागराजानमादिवृत्तेऽग्निमर्चयेत् ॥ ११०

मध्यवृत्ते दिवानाथं यजेदन्ते निशाकरम् ।
निवेदयेत्ततः श्वेत(श्रोत्रे)च्छत्रं त्रीणि पदेत्यृचा ॥ १११

चामरे वायुमभ्यर्च्य दण्डे नागाधिपं यजेत् ।
दद्यात्तु लक्ष्मीगायत्र्या शोभनं चामरद्वयम् ॥ ११२

व्यजने पूजयेद्वायुं दण्डे कल्पमहीरुहान् ।
वृत्ते चन्द्रमसं यष्ट्वा तदन्तेषु च तारकाः ॥ ११३

अग्रेष्वोषधयः (षु ऋषयः) पूज्या मध्ये तु कमलालया ।
व्यजनं वायुमन्त्रेण दद्याद्दीप्य परिच्छदम् ॥ ११४

दर्पणे शिवमभ्यर्च्य तच्छक्तिं तस्य मध्यमे ।
चित्रं देवेति मन्त्रेण दद्याद्दर्पणमम्बिके ॥ ११५

देशिकस्तु प्रसन्नात्मा धारयेद्भस्म शोभनम् ।
श्रुतिस्मृतिपुराणैश्च तत्सूक्तश्रवणादिभिः ॥ ११६

वीणावेणुमृदङ्गादिविविधातोद्यवादनैः ।
नृत्तगीतादिभिश्चैव स्तोत्रैश्चैव प्रदक्षिणैः ॥ ११७

नमस्कारैश्च साष्टाङ्गैः प्रीणयेत्परमेश्वरीम् ।
''ज्ञानतोऽज्ञानतो वापि यत्किञ्चित्क्रियते मया ॥ ११८

''तव कृत्यमिदं सर्वमिति मत्वा क्षमस्व मे ।''
ततोऽर्चनादिकं कर्म स्वल्पं वा यदि वा बहु ॥ ११९

दद्यात्समर्पणमिति देव्या मन्त्रोदपूर्वकम् ।
(दद्याद्देव्यर्पणमिति मन्त्रेणोदकपूर्वकम्)
ये संपूज्य महादेवीं भक्तिश्रद्धासमन्विताः ॥ १२०

तत्प्रसादभुजो नित्यं तन्निर्माल्यकधारिणः ।
तन्मन्त्रन्यासरसिकास्तद्ध्यानस्तुतिबृंहिताः ॥ १२१

कृतार्थयन्ति ते लोकान् दर्शनादेव तन्मयाः ।
गृहीत्वारार्त्तिदीपांस्तान् दास्यां(?) कृत्वा प्रदक्षिणम् ॥ १२२

क्षिपेयुर्बलिपीठान्तः सर्वातोद्यसमन्वितम् ।
ये निवेद्यान्नमश्नन्ति तत्पादोदकसेवितम् ॥ १२३

रोगिणो वापि सद्भक्तास्ते भवन्ति निरामयाः ।
हृदि ध्यानं मुखे नाम नैवेद्यमुदरे तथा ॥ १२४

अङ्गे तद्गन्धपुष्पाणि जीवन्मुक्तस्स उच्यते ।
यो वाग्रतो महादेव्यास्तद्बुद्ध्या भोजयेद्द्विजान् ॥ १२५

तस्य नश्यन्ति पापानि सिध्यन्ति च मनोरथाः ।
ये भुञ्जन्ति वृता विप्रैस्तत्प्रीत्यै(तैः) तत्परायणैः ॥ १२६

सर्वपापविनिर्मुक्तास्तेऽपि धन्यतमाः स्मृताः ।

**उपचाराः**

आवाहनासनं पाद्यं अर्घ्यमाचमनं तथा ॥ १२७

मुखोदो मुखवासश्च मधुपर्करसायनम् ।
गण्डूषं दन्तकाष्ठं च पुनराचमनं तथा ॥ १२८

तैलमुद्वर्तनं चैव स्नानीयामलकादिकम् ।
स्नानमाचमनं वासो ब्रह्मसूत्रं ततः परम् ॥ १२९

पुनराचमनं गन्धपुष्पमाल्याक्षतानि च ।
हेमरत्नविचित्राणि भूषणानि ततः परम् ॥ १३०

धूपं दीपं च नैवेद्यं पुनराचमनं तथा ।
मुखवस्त्रं च ताम्बूलं ततः सिंहासनं तथा ॥ १३१

रक्षोघ्नं तिलकं पश्चात् ततो नीराजनं तथा ।
छत्रचामरयोश्चैव ताळवृन्तं च दर्पणम् ॥ १३२

वेदादिश्रवणं चैव नृत्तगीतादिदर्शनम् ।
प्रदक्षिणस्तुतिकृतिनमस्कारक्षमापनाः ॥ १३३

इति ते कथितं सम्यक् चत्वारिंशच्चतुस्तथा ।
नीराजनादिरहितं तथा भोगोत्सवेन च ॥ १३४

मध्यमं चार्चनं प्रोक्तं स्नानगन्धाक्षतानि च ।
धूपं दीपं च नैवेद्यं ताम्बूलमतिलौकिकम् ॥ १३५

स्नानमभ्यर्चनं दीपं नैवेद्यमधमं भवेत् ।
दीपहीनाऽधमा पूजा नैवेद्येनाधमाधमा ॥ १३६

नैवेद्यं फलमूलैर्वा पूजाकर्म न संत्यजेत् ।
इति सामान्यतः प्रोक्तं आत्मार्थं च परार्थकम् ॥ १३७

घटिके द्वे भवेत्स्नानं घटिकैकार्चनं भवेत् ।
नीराजनं त्रिपादं स्नान्नैवेद्यं च त्रिपादकम् ।। १३८

त्रिपादमग्निकार्यं स्यात्सार्धनाडिकमुत्सवम् ।
ततः परं त्रिपादं स्यान्नृत्तगीतं वरानने ।। १३९

आत्मार्थयजनं कार्यं होमोत्सवबलिं विना ।
त्रिकालं द्व्येकालं वा पूजयेत्परमेश्वरीम् ।। १४०

एकोपचारनिर्दिष्टैरेकपात्रस्थितैर्जलैः ।
नोपचारान्तरं कुर्यान्न च स्पृष्टेन पाणिना ।। १४१

राजवद्भीतभीतः स्याद्वात्सल्ये चापि पुत्रवत् ।
सर्पवत्सावधानः स्यात् हृष्टो निक्षेपदर्शवत् ।। १४२

इति सौभाग्यचिन्तामणौ पूर्वखण्डे सप्तविंशः पटलः ।।

## अष्टाविंशः पटलः

### अग्निकार्यविधिः

अग्निकार्यमथो वक्ष्ये शृणु सर्वाङ्गसुन्दरि ।
पचनालययाम्ये तु नित्याग्नौ कुण्डमुच्यते ।। १

उत्सवाग्नेस्तु कुण्डानि यागागारे विधीयते ।
प्रासादस्येशभागे तु यागागारो विधीयते ।। २

**कुण्डनिर्माणम्**

कुण्डस्य लक्षणं वक्ष्ये यथावच्छृणु सुन्दरि ।
तन्मानं द्विविधं प्रोक्तं देवमानुषभेदतः ।। ३

उत्सवादिषु कार्येषु क्रियते देववेश्मसु ।
तद्देवकुण्डमुद्दिष्टं चतुर्विंशाङ्गुलायतम् ।। ४

द्वित्रिवेदाङ्गुलोत्सेधं मेखलं तावदन्तरम् ।
अर्धाङ्गुलोष्ठसंयुक्तं नाभिरर्धाङ्गुलोन्नतम् ॥ ५

अर्धाङ्गुलप्रविस्तारं चतुरङ्गलकर्णिकम् ।
योनिरर्धाङ्गुलोत्सेधा पिप्पलच्छदसन्निभा ॥ ६

षडङ्गुलयुता निम्ना दशनालाग्रसन्निभा (संयुता) ।
पद्मे नाभिं न कुर्वीत योन्यां योनिं न कारयेत् ॥ ७

सर्वकुण्डेषु सामान्यं देवतायतनेषु च ।
मानुषं तु प्रवक्ष्यामि यथावदनुपूर्वशः ॥ ८

शान्तिके चतुरश्रं स्याद्वृत्तं सर्वसमृद्धिदम् ।
शुभदं चार्धचन्द्राभं षट्कोणं विजयप्रदम् ॥ ९

त्र्यश्रं विद्वेषकृत्प्रोक्तं अष्टाश्रं खेचरप्रदम् ।
नवाश्रं मोहनं शस्तं पद्माङ्कं सर्वसिद्धिदम् ॥ १०

योन्याकारं तु यत्कुण्डं प्रजानामभिवृद्धिदम् ।
चतुर्विंशाङ्गुलायामं विस्तारेणापि तत्समम् ॥ ११

द्वादशाङ्गुलमुत्सेधमधस्ताद्वादशाङ्गुलम् ।
चतुरङ्गुलमानेन मेखलोच्छ्रायसंयुतम् ॥ १२

योन्याकारमिदं कुण्डं नित्याग्नौ तु विधीयते ।
सहस्राधिकहोमेषु प्रतिष्ठाप्रोक्षणासु(णेषु) च ॥ १३

समखातं प्रशंसन्ति समोच्छ्रायसमन्वितम् ।
अर्धायामं तु पञ्चाग्नौ नवाग्नौ तु नवाङ्गुलम् ॥ १४

कुण्डानुसारतः कुर्याद्योनिना होमकर्मणि (लोर्ध्वकर्म च) ।
(नव्योष्टकर्म च)
पक्वेष्टकोद्भवं कुर्यात् नित्याग्नौ यागवेश्मनि ॥ १५

एकरात्रिविधाने तु मृद्भिरेव समाचरेत् ।

### अग्निजिह्वाः

प्रक्षालिताङ्घ्रिराचम्य गत्वा कुण्डस्य पश्चिमे ॥ १६
विष्टराद्यासनासीनः प्राणायामत्रयं चरेत् ।
वह्नेर्जिह्वाख्यमन्त्रस्य ऋषिर्ब्रह्मा विधीयते ॥ १७
छन्दस्तु देवी गायत्री देवता हव्यवाहनः ।
षड्दीर्घभाजा बीजेन षडङ्गानि समाचरेत् ॥ १८
सात्त्विक्यो दिव्यपूजासु राजस्यः काम्यकर्मसु ।
तामस्यः क्रूरकार्येषु प्रयोक्तव्या यथाक्रमम् ॥ १९
हिरण्या कनका रक्ता कृष्णा चैव च सुप्रभा ।
अतिरक्ता बहुरूपा सप्त जिह्वाः प्रकीर्तिताः ॥ २०
पद्मरागा सुवर्णा च तृतीया भद्रलोहिता ।
श्यामा श्वेता धूमिनी च सप्तमी तु करालिका ॥ २१
राजस्यः कथिता जिह्वाः क्रमात्कल्याणरेतसः ।
विश्वमूर्तिस्फुलिङ्गिन्यौ धूमवर्णा(क्त्रा) मनोजवा ॥ २२
लोहिता च कराळी च काळी तामसजिह्विकाः ।
अनले चापि बिन्द्वन्तैर्यादिसान्तैः क्रमादिमाः ॥ २३
षड्दीर्घभाजा बीजेन समस्तेन च संयुताः ।
सलिङ्गगुदमूर्धास्यनासानेत्रेषु सर्वतः ॥ २४
ज्वालामुचो वराभीतिहस्ताभ्यस्येत्क्रमादिमाः ।
ससुरासुरगन्धर्वयक्षोरगनिशाचराः ॥ २५
पितरो देवताश्चाग्नेः रसना आश्रिता इमे ।
अथाङ्गानि न्यसेदेतैर्मन्त्रैर्जातिसमन्वितैः ॥ २६

अग्नेः मूर्तयः

सहस्रार्चिः स्वस्तिपूर्णा उत्तिष्ठपुरुषस्तथा ।
धूमव्यापी सप्तजिह्वो धनुर्धर इतीरितः ॥ २७

जातवेदाश्च सप्तार्चिः हव्यवाहस्तथैव च ।
तथाश्वोदरसंज्ञश्च स वैश्वानर एव च ॥ २८

व्योमतेजास्तथा विश्वमुखदेवमुखावुभौ ।
स्युरष्टमूर्तयो वह्नेरग्नयेपदपूर्विकाः ॥ २९

मूर्धास्यपादकट्यङ्गकुक्षिपार्श्वांसकेषु च ।
प्रादक्षिण्येन विन्यस्य ध्यायेत्स्वं वह्निरूपिणम् ॥ ३०

चत्वारीति ऋचं देवि (ऋषिश्छन्दो) व्यापकत्वेन विन्यसेत् ।
ध्यात्वैवं पूर्ववच्छङ्खं प्रतिष्ठाप्य विधानतः ॥ ३१

तज्जलेनैव कुण्डं तु प्रोक्षयेच्च तदित्यृचा ।
शलाकासहितैर्दर्भैरावातेति ऋचं जपेत् ॥ ३२

वह्नीशानान्तमन्त्रेण सिद्धार्थान्विकिरोद्धरेत् ।
पञ्चगव्यं गोमयाम्भः शुद्धोदं गन्धवारि च ॥ ३३

अभ्युक्षेत च गायत्र्याऽऽपः पुनन्तु ध्रुवैः क्रमात् ।
पञ्चाशन्मातृकारूपं ध्यात्वा तत्कुण्डबाह्यतः ॥ ३४

तत्तत्स्थानेषु मेषादीन् पूजयेत्स्वस्वनामतः ।
यजेदश्व्यादितारास्तु (नक्षत्रान्) पूर्वादिक्रमशोऽर्चयेत् ॥ ३५

योन्यामिच्छाक्रियाज्ञानशक्तीर्मध्यान्तपूर्वयोः ।
कुण्डमध्यत्रिकोणान्तः कुण्डशक्तिं तु मायया ॥ ३६

बाह्येशाद्येवमभ्यर्च्य मध्यमं च त्रिकोणकम् ।
वृत्तषट्कोणभूम्यश्रं विलिखेत्कुण्डमध्यमे ॥ ३७

एवं संस्कृत्य चाभ्युक्ष्य येन देवेति मन्त्रतः ।
दर्भमुष्टिं निधायाथ पीठे पद्मासनं यजेत् ॥ ३८

दळमूलेषु मध्यादि पूर्वान्तं क्रमशो यजेत् ।
पीता श्वेताऽरुणा धूम्रा कृष्णा चैव स्फुलिङ्गिनी ॥ ३९

रुचिरा ज्वालिनी चेति यजेन्मध्ये ग(गु)णत्रयम् ।
चतुष्टयं चात्मना च कुण्डमूले तु पूजयेत् ॥ ४०

क्रियाशक्त्यात्मना(ने) चेति ओं नमोऽन्तेन पूजयेत् ।
अरणेः सूर्यकान्ताद्वा श्रोत्रियागारतोऽपि वा ॥ ४१

पचनालयतो वापि कुण्डयोनौ निधापयेत् ।
वौषडन्तेन मूलेन मन्त्रिताक्ष्णा विलोकयेत् ॥ ४२

हुंफडन्तेन मूलेन क्रव्यादांशं(ग्निं) परित्यजेत् ।
अभ्युक्ष्यास्त्रेण संबुध्य कवचेनावकुण्ठयेत् ॥ ४३

धेनुमुद्रां च रांरीभ्यां क्रमाज्जठरबैन्दवात् ।
समावाह्याग्निबीजेन मूलाग्निं स्वोपदेशतः ॥ ४४

त्रिः कुण्डस्योपरि भ्राम्य पादौ भूमिं समाश्रितौ ।
जानुभ्यां तं समुद्धृत्य पाणिभ्यां विनयान्वितः ॥ ४५

देवं हुताशनं चैत(शंचैतन्य)न्नमोन्तं मन्त्रमुच्चरन् ।
चित्पिङ्गळ हनहन दहदह वदेत्पचपचेति च ॥ ४६

सर्वज्ञाज्ञापय स्वाहेत्युपतिष्ठेद्धुताशनम् ।
अग्निं प्रज्वलितं देवं (वन्दे) जातवेदं हुताशनम् ॥ ४७

सुवर्णवर्णमनलं समिद्धं विश्वतोमुखम् ।
जिह्वामूर्तीश्च विन्यस्य तद्विधानमथाचरेत् ॥ ४८

अभ्युक्ष्य च परिस्तीर्य पात्राण्यासादयेत्ततः ।
ग्रन्थियुक्तपवित्रेण प्रोक्षण्युत्पवनं चरेत् ॥ ४९

उत्तानीकृत्य संप्रोक्ष्य प्रणीतोत्पवनं चरेत् ।
तत्पात्रमुत्तरे न्यस्य दर्भैः प्रच्छाद्य देशिकः ॥ ५०

ब्रह्मजज्ञानमित्युक्त्वा ब्रह्माणं दक्षिणे यजेत् ।
अर्चयेद्गन्धपुष्पाद्यैर्वरुणोऽसीति मन्त्रतः ॥ ५१

चरुनिर्वापणं कृत्वा संप्रोक्ष्य प्रोक्षणीजलैः ।
सपवित्राज्यपात्रं तु वह्नेरुत्तरतो न्यसेत् ॥ ५२

न्यस्त्वा सज्वालदर्भेण परिवृत्याग्निबीजतः ।
आत्मनः पुरतो नीत्वा त्रिरुत्पूय तु सन्ततम् ॥ ५३

जपन्शुक्रमसीत्येतत् विसृज्याग्नौ विनिक्षिपेत् ।
अकारो दण्ड इत्युक्तः उकारो ग्रन्थिरुच्यते ॥ ५४

मकारस्तु परो ज्ञेयः सूक्तस्पर्शस्थले न्यसेत्।
अन्तस्थाश्चैव(यरलवा) कोणेषु शकारो बिलमध्यतः ॥ ५५

षकारश्च सकारश्च मुखपार्श्वे व्यवस्थितौ ।
अग्निबीजेन सन्ताप्य वायुबीजेन मार्जयेत् ॥ ५६

पुनश्चाग्नौ तु सन्ताप्य मार्जयित्वा तदित्यृचा ।
संप्रोक्ष्य व्याहृतीभिश्च दर्भानग्नौ विनिक्षिपेत् ॥ ५७

अभिकृत्य च संस्थाप्य चतुरः परिधीन्न्यसेत् ।
पलाशोदुम्बराश्वत्थप्लक्षन्यग्रोधखादिराः ॥ ५८

इध्मार्थेऽत्र प्रशंसन्ति परिधीनां चतुष्टयम् ।
अग्नीध्मपरिधिक्षेपं परिषेकमथापि वा ॥ ५९

इन्द्रादीन् तद्बहिर्यष्ट्वा वैश्वानरमथार्चयेत् ।
महाज्यमध्यमस्थाने ततो मध्येऽमुनाऽर्चयेत् ॥ ६०

वैश्वानर जातवेद इहावह पदं वदेत् ।
लोहिताक्षपदं पश्चात् सर्वकर्माणि साधय ॥ ६१

स्वाहान्तेनैव मनुना कुण्डमध्ये समर्चयेत् ।
अदितेत्यादि मनुभिः परिषिच्य प्रदक्षिणम् ॥ ६२

अथेध्ममाज्येनाभ्यज्य देशिको वैदिकोत्तमः ।
एकां समिधमादाय प्रणीताया मुखे न्यसेत् ॥ ६३

इध्मप्रक्षेपणं कृत्वा ध्यायेद्देवं प्रजापतिम् ।
वायव्यादग्निपर्यन्तं आघारं प्रथमं हुनेत् ॥ ६४

नैर्ऋत्यादीशपर्यन्तमाघारं तु द्वितीयकम् ।
हुनेदीशेऽग्नये स्वाहा सोमायेति तथाग्नये (याग्नेयके तथा) ६५

मुखान्तमाज्यभागान्तमचरौ चरुसंयुते (संयुजेत्) ।
युक्तो वह जातवेद इत्याद्याज्याहुतीर्हुनेत् ॥ ६६

कोणषट्कोणमध्ये च वह्नेर्जिह्वास्समर्चयेत् ।
केसरेष्वङ्गषट्कं च वह्निमूर्त्यष्टकं बहिः ॥ ६७

मध्येऽग्नये तथा हुत्वा त्वन्नः स त्वन्न एव च ।
अयाश्च हुत्वा व्याहृत्या व्यस्तया च समस्तया ॥ ६८

ध्यात्वा सकामां कामेशीं ऋतुस्नातामनुस्मरेत् ।
दहनं शिवयोर्योगाज्जातं तत्र विचिन्तयेत् ॥ ६९

तल्पाद्युपयमाद्यं तु (द्युपायनं तत्तु) हुनेदाज्याहुतीः क्रमात् ।
जपेत वाऽग्ने तेजस्विन् चत्वारीति ऋचं ततः ॥ ७०

ध्यायेच्चतुर्भुजं वह्निं रक्त(त्न)स्वस्तिकधारिणम् ।
छागासनं पञ्चमुखं ज्वलत्पिङ्गळलोचनम् ॥ ७१

बन्धूकाभं सप्तजिह्वं विवृतास्यं च भीषणम् ।
ध्यात्वैवं देवमनलं जुहुयात्तन्मुखेषु च ॥ ७२

चतुर्वर्गप्रदं मध्यं पूर्वं धर्मप्रदं प्रिये ।
याम्यं शत्रुक्षयकरं वारुणं श्रीप्रदं प्रिये ॥ ७३

सौम्यं मोहप्रदं ज्ञेयं मध्यवक्त्रे सदा हुनेत् ।
तत्सर्वसिद्धिदं तस्मात्सप्तजिह्वा मुखे मुखे ॥ ७४

हिरण्या भरणीर्जिह्वा महाकाली च देवता ।
कनका ब्रह्मदैवत्या नानारूपप्रदा शुभा ॥ ७५

रक्ता तु सोमदैवत्या नानाप्रीतिकरा शुभा ।
कृष्णा च यमदैवत्या सर्वशत्रुक्षयावहा ॥ ७६

सुप्रभा पितृदैवत्या पुत्रसौभाग्यदायिनी ।
अतिरक्तेति या प्रोक्ता जिह्वा सा सूर्यदेवता ॥ ७७

आरोग्यसुखवृद्ध्यादिशुद्धज्ञानफलप्रदा ।
प्रोक्ता तु सर्वदैवत्या बहुरूपा तु मध्यमा ॥ ७८

सर्वकामफलावाप्तिं भुक्तिं मुक्तिं ददाति च ।
ईशादिकोणषट्केषु हिरण्याद्यस्तथा क्रमात् ॥ ७९

हिरण्यादिषु जिह्वासु स्वस्वनाम्ना ततो हुनेत् ।
संख्यासहस्रकैः (सहस्रार्चादिभिः) पश्चात्
स्वाहान्तैस्स्वस्वनामभिः ॥ ८०

ततः पक्वाहुतिं हुत्वा समिदाज्यचरून् हुनेत् ।
पायसं तु घृताभ्यक्तं चरुं वा केवलं हुनेत् ॥ ८१

समिधो मूलमन्त्रेण चरुं पावीरवीत्यृचा ।
आज्यं तु देवीगायत्र्या सर्वं वा मूलमन्त्रतः ॥ ८२

ततः स्विष्टकृतं हुत्वा मेक्षणं प्रहरेत्ततः ।
स्रुचाद्भिरन्तः परिधीनक्त्वा बाह्यं तथैव च ॥ ८३

अनूयाजं प्रहृत्याथ प्रायश्चित्तं ततो हुनेत् ।
चित्तचित्यादिकाः पूर्वं हुनेदाज्याहुतीः क्रमात् ॥ ८४

पावीरवी पर्वतादा ततो गौरीमिमाय च ।
त्रियम्बकमिदं विष्णुः प्रतद्विष्णुस्तदित्यचा ॥ ८५

ब्रह्मजज्ञानमित्युक्त्वा त्वन्नः स त्वन्न एव च ।
जातवेदसमन्त्रं च अनाज्ञातत्रयं ततः ॥ ८६

व्यस्ताभिश्च समस्ताभिर्व्याहृतीभिस्ततो हुनेत् ।
यदस्य कर्मणेत्युक्त्वा हुनेद्देव्याश्च नामतः ॥ ८७

स्रुवेणाभ्यज्य परिधीन् बहिरग्नौ विनिक्षिपेत् ।
ततः प्रहृत्य परिधीनाघारसमिधावपि ॥ ८८

मूलेन वौषडन्तेन पूर्णाहुतिमथाचरेत् ।
अदितेत्यादिभिर्मन्त्रैः परिषिच्य प्रदक्षिणम् ॥ ८९

प्रणीतामार्जनं कुर्यात् ब्रह्मोद्वासनमेव च ।
जिह्वामूर्तियुतं वह्निं गन्धपुष्पाक्षतादिभिः ॥ ९०

सम्पूज्य च ततः पश्चादिन्द्रादीनर्चयेत्क्रमात् ।
ततः कुण्डस्य परित इन्द्रादिभ्यो बलिं ददेत् ॥ ९१

दिवस्परीति मन्त्रेण प्रवश्शुक्राय इत्यपि ।
अग्ने नयेऽग्ने तेजस्विन्नित्युपस्थानमाचरेत् ॥ ९२

ललाटे धारयेद्भस्म बृहत्सामेति मन्त्रतः ।
वह्निमध्यगतां देवीं समभ्यर्च्य महेश्वरीम् ॥ ९३

समुद्वास्य हृदि ध्यात्वा बलिकर्म समाचरेत् ।
नित्याग्नावेवमुद्दिष्टं होमसंक्षिप्तके तथा ॥ ९४

अग्निकार्यमिदं प्रोक्तं यथावत्सर्वसिद्धिदम् ।
यः कुर्याच्छ्रद्धया युक्तः सर्वान्कामानवाप्नुयात् ॥ ९५

इति सौभाग्यचिन्तामणौ पूर्वखण्डे अष्टाविंशः पटलः ॥

## एकोनत्रिंशः पटलः

**नित्योत्सवविधिः**

अथ वक्ष्यामि देवेशि नित्योत्सवविधिं परम् ।
सर्वदुःखहरं पुंसां सर्वभूतप्रहर्षणम् ॥ १

राजराष्ट्रपुराणां च सर्वशान्तिविधायकम् ।
उत्सवस्त्रिविधो देवि बलारोग्याभिवृद्धिदः ॥ २

अस्त्रान्नबीजसंयुक्ता पृथगुक्तफलप्रदा ।
संयुक्ता सर्वफलदा सबिम्बा पादुकान्विता ॥ ३

उत्तमः पञ्चभिर्युक्तश्चतुर्भिर्मध्यमो भवेत् ।
द्वित्रिभ्यो ह्यधमः प्रोक्तो बिम्बमात्रोऽधमाधमः ॥ ४

सर्वत्र सांकुशः प्रोक्तस्तद्विधानमिहोच्यते ।
अङ्कुशादौ भवेद् ब्रह्मा मध्ये विष्णुः शिवोऽग्रतः ॥ ५

स्कन्धे चन्द्रश्च सूर्यश्च धारामूले तथानलः ।
धारायां मरुतः पूज्या धाराग्रे सर्वशक्तयः ॥ ६

तत्तत्स्थानेषु तान्सर्वान् समभ्यर्च्य स्वनामभिः ।
तन्मन्त्रेण ततो यष्ट्वा वस्त्रमाल्यादिभूषितम् ।। ७

पुरतो धारयेन्नित्यं सर्वत्रैवापराजितम् ।
प्रादेशमण्डलाग्रं च तद्वद्दारुजमुच्यते ।। ८

चतुर्विंशाङ्गुलायामं धारापि चतुरङ्गुला ।
अग्रं तु त्र्यङ्गुलं प्रोक्तं दण्डानाहं त्रिकाङ्गुलम् ।। ९

एवमंकुशमाख्यातं द्विगुणं त्रिगुणं तु वा ।
हेमादिलोहरचितं तन्मन्त्रेण समर्चयेत् ।। १०

सौवर्णं राजतं ताम्रं कांस्यं वा भाजनं शुभम् ।
आपूर्य तण्डुलैश्शुद्धैर्गन्धपुष्पादिभिः शुभैः ।। ११

सद्वस्त्रेण समावेष्ट्य बीजं तत्र प्रविन्यसेत्।
रक्तवर्णं भवेद्बीजं सुश्वेतं सघृतं हविः ।। १२

लिङ्गाकारं च कृत्वा तु शिवमन्त्रेण पूजयेत् ।
भगलिङ्गान्वि(ङ्कि)तं चान्नं मूलमन्त्रेण पूजयेत् ।। १३

शिवे शक्तिं समाधाय तावुभौ तत्र पूजयेत्।
सद्वस्त्रेण समावेष्ट्य द्विजवर्येण धारयेत् ।। १४

सर्वावियवसुन्दर्या सर्वलक्षणयुक्तया ।
सर्वालङ्कारशोभिन्या स्नानादिपरिशुद्धया ।। १५

नार्या तां धारयेन्मूर्ध्नि पादुकां परमेश्वरि ।
ततो यानगतां देवि सर्वालङ्कारशोभिताम् ।। १६

उपचारैः सितच्छत्रचामरव्यजनादिभिः ।
वीणावेणुमृदङ्गादिविविधातोद्यवादनैः ।। १७

नृत्तगीतविशेषैश्च तोषयेत्परमेश्वरीम् ।
वेश्मप्रदक्षिणं मन्दं कारयेद्देशिकोत्तमः ॥ १८

भूम्यन्तरिक्षस्वर्गस्थास्तेन प्रीणन्ति नित्यशः ।
देशिकस्त्वग्रतो देव्या घण्टानादपुरस्सरम् ॥ १९

तत्तत्पीठेषु तन्मन्त्रैर्बलिं दद्याद्यथाविधि ।
इन्द्राद्यन्तु तथेशान्तं सर्वेष्वावरणेषु च ॥ २०

अग्रे स्याज्जम्भिनी देव्या कुरुकुल्ला मनोन्मनी ।
एकपीठयुतं चाद्यमन्ये पीठद्वयान्वितम् ॥ २१

प्रधाने बलिदेव्यः स्युरप्रधाने दिगीश्वराः ।
अग्र(एक)पीठं विनान्यानि भवेयुर्दारुजानि च ॥ २२

एका वा दारुफलका बल्यर्थे तु प्रशस्यते ।
जया च विजया चैव प्रथमद्वारपालिके ॥ २३

शङ्खपद्मनिधी चोभौ द्वितीयद्वारपालकौ (लिके) ।
सेन्द्रादिश्च निरिन्द्रादिर्द्विविधोऽस्य बलिक्रमः ॥ २४

प्रथमावरणे देवि जम्भिनी पीठदेवता ।
तप्तकाञ्चनसंकाशां पाशाङ्कुशधरां शिवाम् ॥ २५

वरदाभयहस्ताब्जां जम्भिनीं भावयेत्प्रिये ।
आग्नेयादिचतुर्दिक्षु योगिन्यः कथिताः प्रिये ॥ २६

जया च विजया चैव सुभद्रा (सुप्रभा) सर्वमङ्गला ।
गदातर्जनिमुद्राढ्याः भिन्नाञ्जनचयोपमाः ॥ २७

सावधाना जयाद्यास्तु योगिन्यो हेम भूषणाः ।
वायुसोमेशकाष्ठासु भद्रकाली च भामिनी ॥ २८

दुर्गा चण्डेश्वरी चैव वेत्रहस्ताऽम्बुदप्रभा ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ २९

आकाशमा:तरी पूर्वा कुरुकुल्यादिकापि वा ।
विकीर्णकुन्तलां नग्नां रक्तामानन्दनिर्भराम् ॥ ३०

जपाकुसुमसङ्काशां सर्वाभरणभूषिताम् ।
पाशाङ्कुशौ(श)सुधापात्रं(त्र)तर्जनीमुद्रया युताम् ॥ ३१

स्वसमानायुधाकारावर्णदेव्यास्तु बाह्यगाम् ।
ऋतुस्नातां स्मरेद्योन्यां सदानन्दारुणेक्षणाम् ॥ ३२

भावयेत्कुरुकुल्या(ल्ला)ख्यामशेषविषनाशिनीम् ।
कुरुकुल्या च वटुकः पितरो (गुरवो) गणपस्तथा ॥३३

महाशास्ता चण्डिका च विघ्नभू(पू)तो महीपतिः ।
द्वितीयावरणं प्रोक्तं इन्द्राद्यैस्तु तृतीयकम् ॥ ३४

आकाशमातर्याद्यं तु परितः पीठमर्चयेत् ।
न पुरः पूजयेदन्यां देवतां बलिपीठयोः ॥ ३५

सोमेशानदिशोर्मध्ये पुरस्स्थं बलिमाहरेत् ।
उत्सवेषु महेन्द्रादीन् महावीथी(विधि)षु पूजयेत् ॥ ३६

पुरतो गन्धपुष्पाद्यैः पूजयेत्तु मनोन्मनीम् ।
उद्यदादित्यसङ्काशां विद्युत्पुञ्जनिभाम्बराम् ॥ ३७

पञ्चवक्त्रधरां देवीं त्रिपञ्चनयनैर्युताम् ।
पाशाङ्कुशधनुर्बाणखड्गखेटकधारिणीम् ॥ ३८

कणच्छूलकपालाढ्यां वरदाभयशोभिनीम् ।
सर्वाभरणसंयुक्तां सर्वशक्तिस्वरूपिणीम् ॥ ३९

ध्यात्वा मनोन्मनीं देवीं प्रधानबलिपीठगाम् ।
मातरीयोगिनीयुक्तां यजेद्वा केवलं तु वा ॥ ४०

यत्र सा मातरीयुक्तः स सेन्द्रादिर्बलिर्भवेत् ।
इन्द्राद्यैः कुमुदाद्यैश्च संयुक्तः शोभनं मतम् ॥ ४१

केवला सा निरिन्द्रादिः बलिस्स्यादुभयात्मिका ।
उद्यदादित्यसङ्काशाः सर्वाभरणभूषिताः ॥ ४२

वरदाभयहस्ताश्च खड्गखेटकपाणयः ।
योगिन्यः सततोद्युक्ता ध्येयास्तद्बलिदेवताः ॥ ४३

पीठमध्यादि साङ्गे तु केवलं मध्यमे यजेत् ।
एतासां वह्निजायान्तैश्चतुर्थ्यन्तस्वनामभिः ॥ ४४

अभ्यर्च्य गन्धपुष्पाद्यैर्बलिं दद्याद्विचक्षणः ।
श्रीपीठं त्रिः परिक्रम्य सर्वातोद्यसमन्वितम् ॥ ४५

दासीभिः कारयेत्तत्र पुष्पाञ्जलिमहर्निशम् ।
नृत्ताद्यालोकनं कृत्वा नीराजनपुरस्सरम् ॥ ४६

वेश्मप्रदक्षिणं कृत्वा तत्तद्दिक्षु दिवानिशम् ।
निःशब्दवाद्यसंयुक्तं प्रविशेदालयं ततः ॥ ४७

संपूज्य विधिना देवीं नृतगीतादिभिस्सह ।
प्रणम्य शिरसा भक्त्या स्वस्थानं पुनरानयेत् ॥ ४८

इति सौभाग्यचिन्तामणौ पूर्वखण्डे एकोनत्रिंशः पटलः ॥

# त्रिंशः पटलः

**सायंरक्षाविधिः**

सायंरक्षां प्रवक्ष्यामि यथावत्सर्वसिद्धिदाम्।
नयनोच्छिष्टशान्त्यर्थं नराणां दुष्टकर्मणाम् (चेतसाम्) ।। १

देवतायतनं ग(जनं कृ)त्वा कृतसायाह्निको गुरुः ।
सौवर्णं राजतं ताम्रं दारुजं वाऽथ मृण्मयम् ।। २

प्रादेशनालं वृत्तं च प्रादेशायामविस्तरम् ।
पात्राणां पञ्चकं कृत्वा श्लक्ष्णनाळसमन्वितम् ।। ३

तेषामुपरि कुर्वीत द्व्यङ्गुलोन्नतिसंयुतम् ।
शालिपिष्टमयं पञ्च सुश्लक्ष्णं दीपभाजनम् ।। ४

देव्यग्रे स्थापयित्वाऽथ प्राणानायम्य मूलतः ।
दीपं प्रज्वाल्य पात्रेषु वह्निबीजेन साधकः ।। ५

आवाहनादिधूपान्तं पूजां कृत्वा यथाविधि ।
लवणं सर्षपं चैव कार्पासस्य तु बीजकम् ।। ६

पृथक्पात्रे विनिक्षिप्य वह्निबीजास्त्रमन्त्रतः ।
सर्वमेकत्र संयोज्य प्रत्येकं तु मुखादितः ।। ७

त्रिस्त्रिर्भ्राम्य कराग्रेण अक्षीभ्यामिति मन्त्रतः ।
वह्नौ क्षिप्त्वा जलं स्पृष्ट्वा मध्ये मध्ये तु देशिकः ।। ८

दीपानस्त्रेण संप्रोक्ष्य समभ्यर्च्याग्निमन्त्रतः ।
अस्त्रेण कृत्वा तद्रक्षां इन्द्रादिक्रमशोद्धरेत् ।। ९

अग्न आयाहि मन्त्रेण अग्निं दूतमतः परम् ।
अग्ने नयाग्ने तेजस्विन् उद्दीप्यस्वेति मन्त्रतः ।। १०

जातवेदसमन्त्रैश्च त्रिस्त्रिर्भ्राम्य जलं स्पृशेत् ।
अर्घान्नं पूर्णसलिलं सकरी(रू)षं सदूर्वकम् ॥ ११

संस्थाप्य पुरतः पात्रं गन्धपुष्पादिभिर्यजेत् ।
स्योना पृथिविमन्त्रेण शन्नो देवीत्यृचाम्बिके ॥ १२

त्रिः परिभ्राम्य शिरसि यदतोवाततेत्यृचा ।
अन्यहस्ते प्रदातव्यं(दद्याद्वा)गीतवाद्यपुरस्सरम् ॥ १३

पादुकाधारिणी पश्चात् गृहीत्वा तत्कराग्रतः ।
गृहीत्वारार्तिकाभिस्तु दासीभिस्सहसा तदा ॥ १४

वेश्मप्रदक्षिणं कृत्वा बलिपीठान्ततः क्षिपेत् ।
अभ्यर्च्य भस्ममन्त्रेण अग्निरित्यादिभिर्गुरुः ॥ १५

कराभ्यां तत्समादाय मन्त्रितं भस्म पात्रगम् ।
उत्सृज्यास्त्रेण वह्नौ तत्किञ्चिद्ध्यात्वा महेश्वरीम् ॥ १६

बृहत्सामेति मन्त्रेण धारयेद्भस्म शोभनम् ।
मूलमन्त्रेण सहितं गुरुं ध्यात्वा प्रसन्नधीः ॥ १७

श्रुतिस्मृतिपुराणादि श्रावयेद्भक्तिसंयुतः ।
तदेको धारयेत्पश्चात् तत्सेविभ्यश्च दापयेत् ॥ १८

ये धारयन्ति तद्भस्म तत्काले तत्कराग्रतः ।
नीरोगिणो निरातङ्काः सर्वां सिद्धिं समाप्नुयुः ॥ १९

आतुराणां च सर्वेषां मनुष्याणां ददाति यः ।
नीरोगिणो भवन्त्येव सत्यं सत्यं न संशयः ॥ २०

इति सौभाग्यचिन्तामणौ पूर्वखण्डे त्रिंशः पटलः ॥

## ॥ एकत्रिंशः पटलः ॥

**भोगोत्सवविधिः**

अथ वक्ष्यामि देवेशि भोगोत्सवविधिं परम् ।
सर्वसौख्यकरं पुंसां राजराष्ट्राभिवृद्धिदम् ॥ १

कुर्यात्प्रासादगा(का)द्दक्षे प्रथमावरणाद्बहिः ।
उत्तरे वा महादेवि शयनार्थालयं भवेत् ॥ २

अन्तर्गृहसमायुक्तं बहिर्मण्टपशोभितम् ।
दक्षिणे पश्चिमे वापि तद्भित्तौ वा पटेऽपि वा ॥ ३

विलिखेद्वर्णकैश्चित्रैश्चतुर्विंशांगुलोन्नतम् ।
पर्यङ्कासनमासीनं बालार्कसदृशद्युतिम् ॥ ४

पाशाङ्कुशेक्षुकोदण्डपञ्चबाणोपशोभितम् ।
रक्तमाल्याम्बरधरं सर्वाभरणभूषितम् ॥ ५

अथवा द्विभुजं कुर्यात् सर्वशृङ्गाररूपिणम् ।
सुगन्धिपूर्णपात्रं च दिव्यसौगन्धिकस्रजम् ॥ ६

संदधानं महादेवं विधिना सम्यगर्चयेत् ।
तथैव देवी कर्तव्या चतुर्हस्ता च पूर्ववत् ॥ ७

अथवा द्विभुजां कुर्यान्मालापात्रयुतां तु वा ।
प्रागग्रं दक्षिणाग्रं वा पर्यङ्कं तु शिवाग्रतः ॥ ८

लम्बयेद्धेमसूत्राद्यैर्यथाशोभोपशोभितम् ।
सुगन्धैः धूपयेन्नित्यं निरस्य कृमिकीटकान् ॥ ९

वितानध्वजमालाभिरलङ्कुर्याच्च नित्यशः ।
रात्रौ बल्युत्सवान्ते तु भोगोत्सवविधिर्मतः ॥ १०

भोगोत्सवे तु कुर्वीत नृत्तगीतादिदर्शनम् ।
कस्तूरी घनसारं च जवादी चन्दनं तथा ॥ ११

रोचना जटिला मुस्ता कुङ्कुमं मृगनाभि च ।
कदम्बं च हिमाम्भोभिस्संमिश्र्यालेपयेच्छिवाम् ॥ १२

जातीचम्पकपुन्नागपद्मसौगन्धिकादिभिः ।
मालाभिश्च विचित्राभिरलङ्कुर्यान्महेश्वरीम् ॥ १३

आरोप्य शिबिकादीनि नृत्तगीतादिभिस्सह ।
वेश्मप्रदक्षिणं कृत्वा वीणावेण्वादिसंयुतम् ॥ १४

प्रापयेन्मन्दमन्दं च पर्यङ्कासनमीश्वरि ।
पायसं क्षीरपिण्डं च शर्कराफलसंयुतम् ॥ १५

कदली पनसाम्रं च सोपदंशं सचूर्णकम् ।
मरीचं सैन्धवं शुण्ठी जाजी जीरकचूर्णकम् ॥ १६

सर्वेषु चोपदंशेषु गन्धचूर्णमिदं स्मृतम् ।
सुगन्धिपूगसंयुक्तं जातीफलशशीयुतम् ॥ १७

नागवल्लीदलयुतं ताम्बूलं बहु दापयेत् ।
भक्ष्यं बहुविधं दद्यात् तैलाज्यगुळपाचितम् ॥ १८

गुळाम्भो नारिकेलाम्भः कदलीफलवारि च ।
रसायनानि हृद्यानि बहून्यन्यानि दापयेत् ॥ १९

एवमाराधयेद्देवीं सशिवां वापि केवलाम् ।
घटिकाद्द्वादशादर्वाक् तल्पमारोप्य देशिकः ॥ २०

धूपदीपौ ततो दत्वा कृत्वा रक्षां च भस्मना ।
प्रणम्य च क्षमस्वेति प्रविशेत्स्वगृहं ततः ॥ २१

इति सौभाग्यचिन्तामणौ पूर्वखण्डे एकत्रिंश पटलः ॥

## द्वात्रिंशः पटलः

### अङ्कुरार्पणविधिः

शृणु देवि महाभागे अङ्कुराणामथार्पणम् ।
अनंकुरार्पणं कर्म शोभनाय न जायते ॥ १

मुनिभूतगुणाहेषु पूर्वेद्युस्सद्य एव वा ।
प्रभूताङ्कुरकाः श्रेष्ठाः दृष्टमात्रं तु मध्यमम् ॥ २

सद्यस्कमधमं प्रोक्तं विना मासोत्सवं चरेत् ।
षष्ठी चतुर्थी नवमी दर्शश्चैव चतुर्दशी ॥ ३

अजालिसिंहचापेषु न कुर्यादङ्कुरार्पणम् ।
यमाश्लेषाग्निरौद्रेषु ज्येष्ठापूर्वासु नेष्यते ॥ ४

सद्यस्के सर्वदा कुर्यादन्यथा दोषभाग्भवेत् ।
पात्रेषु तण्डुलान्पूर्य पुष्पेणै(ष्येणे)वाङ्कुरार्पणम्॥ ५

एकाहे वापि कुर्वीत राजराष्ट्राभिवृद्धये ।
पूर्वं पञ्चदशं मुख्यं त्रयोदशमतः परम् ॥ ६

ततः परं नवं पञ्च त्रयं वा ग्राहयेद्बुधः ।
षोडशाङ्गुलमुच्छ्रायं कण्ठमष्टाङ्गुलं भवेत् ॥ ७

मुखे विंशाङ्गुलयुतं पालिकाः कल्पयेद्बुधः ।
हैमं वा राजतं ताम्रं मृण्मयं वा सलक्षणम् ॥ ८

स्निग्धाः कलङ्करहिताः निश्छिद्रा निश्चलाः स्थिराः ।
अथोत्सवात्पूर्वदिने प्रातःकाले समाहितः ॥ ९

नित्यपूजां पुरः कृत्वा देशिकस्तु दृढव्रतः ।
चण्डिकां च समाराध्य आरोप्य शिबिकादिषु ॥ १०

अङ्कुशं वा समारोप्य(राध्य) सर्वातोद्यसमन्वितम् ।
गच्छेत्प्राचीमुदीचीं वा ग्रामाद्बाह्ये यथाविधि ॥ ११

प्रागुदक्प्रवणं देशं समासाद्य शुचि स्थलम् ।
सामान्यार्घ्यजलेनैव व्याहृत्या प्रोक्षयेन्महीम् ॥ १२

निवेश्योदङ्मुखं तत्र प्राङ्मुखस्तु समास्थितः ।
प्राणायामत्रयं कृत्वा स्वस्तिपुण्याहमेव च ॥ १३

संप्रोक्ष्यास्त्रेण कुद्दालीं खात्वा(सम)भ्यर्च्य स्वमन्त्रतः (समन्ततः)।
स्योना पृथिवि मन्त्रेण ध्यात्वा तत्कर्णिकोदरे ॥ १४

दर्भैर्भूमिं परिस्तीर्य तन्मध्येऽष्टदळाम्बुजम् ।
पद्मस्येशानभागे तु सर्वक्षेत्राधिपं शिवम् ॥ १५

वास्तोष्पतेति मन्त्रेण सम्यक्संपूजयेद्गुरुः ।
पङ्कजस्याष्टपत्रेषु तत्तदाशाधिपांस्तथा ॥ १६

इन्द्रादीशान्तमभ्यर्च्य स्वस्वदिक्षु विधिं हरिम् ।
बहिरभ्यर्च्य मेषादीन् अश्विन्याद्यास्तथैव च ॥ १७

भूमिर्भूम्नेति मन्त्रेण ध्या(ख)त्वा तत्कर्णिकोदरे ।
दर्भैर्भूमिं परिस्तीर्य मध्ये भूमिं समर्चयेत् ॥ १८

स्थाल्यां निधाय देव्यास्तु पुरतः स्थापयेद्गुरुः ।
फलं बहु निवेद्याथ सापूपं शर्करायुतम् ॥ १९

शान्तिसूक्तजपं कुर्याद्बहुभिर्ब्राह्मणैस्सह ।
दास्या सर्वाङ्गशोभिन्या धारयित्वा तदग्रतः ॥ २०

ग्रामप्रदक्षिणं कृत्वा ततो धाम समाविशेत् ।
अथ प्रक्षाल्य चरणावाचान्तः शुद्धचेतनः ॥ २१

कृतसायन्तनीपूजः कुर्यादिवाङ्कुरार्पणम् ।
पालिकानां समाख्यातं मुख्यं पञ्चदशात्र तु ॥ २२

त्रयोदश नवं पञ्च त्रयं वा ग्राहयेच्छिवे ।
पालिकाकारमुक्तं स्यादत्र बीजाङ्कुरार्पणम् ॥ २३

सार्द्धैर्द्वितयद्रोणसंख्याकैर्विमलैः शुभैः ।
व्रीहिभिः स्थण्डिलं कृत्वा षड्त्रिंशत्पदसंयुतम् ॥ २४

पदेषु तेषु संस्थाप्य वक्ष्यमाणेन वर्त्मना ।
अश्वत्थे वेति मन्त्रेण साग्राश्वत्थप्रसूनकम् ॥ २५

गुणमात्रैस्समापूर्य कण्ठतस्तु मृदूलपैः (पलैः) ।
मृद्भिस्तन्मुखमापूर्य मृत्तिकेति स्वमन्त्रतः ॥ २६

प्राणानायम्य संकल्प्य पुण्याहं वाचयेत्ततः ।
उत्तरे सोमकुम्भं च स्थापयेद्विधिपूर्वकम् ॥ २७

अङ्कस्थितपराशक्तिं मध्यमे तु सदाशिवम् ।
नमो हिरण्येति ऋचा यो वेदादौ ततः परम् ॥ २८

ईशानेति ऋचा पश्चात्समभ्यर्च्य सदाशिवम् ।
पूर्वे गौरीसखं रुद्रं सर्वो वै रुद्र इत्यृचा ॥ २९

दक्षे पशूनामधिपं तदङ्कस्थां मनोन्मनीम् ।
येषामीशेति मन्त्रेण गन्धपुष्पादिभिर्यजेत् ॥ ३०

अम्बिकासखमीशानमीशान इति मन्त्रतः ।
अर्चयेद्गन्धपुष्पाद्यैरुपचारैर्महेश्वरीम् ॥ ३१

पञ्चाक्षरविधानेन भवानीसहितं शिवम् ।
त्रियम्बकेन वा देवि पूजां कुर्यात्समाहितः ॥ ३२

ईशानाद्यथवा कुर्यात्सद्योजातान्तमर्चयेत् ।
इन्द्रादीशान्तदिक्पालान् स्वस्वदिक्षु प्रपूजयेत् ॥ ३३

यत इन्द्रेत्यृचेन्द्रं तु इन्द्राणीयुतमर्चयेत् ।
अग्निमीलेति मन्त्रेण यजेदग्निं समर्चयेत् ॥ ३४

योस्य कोष्ठेति मन्त्रेण यजेच्छक्तियुतं यमम् ।
मोष्ठेन (षूण)इति मन्त्रेण राक्षसेशं सशक्तिकम् ॥ ३५

यजेत्सशक्तिं वरुणं सूक्तं वारुणमुच्चरन् ।
यदतो वाततेत्यृग्भ्यां वायुं शक्तियुतं यजेत् ॥ ३६

राजाधिराजमन्त्रेण राजराजमथार्चयेत् ।
आप्यायस्वेति मन्त्रेण सोमकुम्भं समर्चयेत् ॥ ३७

ईशानमीश्वरीयुक्तं ईशान इति पूजयेत् ।
इन्द्रेशानदिशोर्मध्ये नमो अस्त्विति मन्त्रतः ॥ ३८

शेषं सशक्तिकं देवि गन्धपुष्पादिनार्चयेत् ।
रक्षोवारुणयोर्मध्ये विधिं वाणीयुतं यजेत् ॥ ३९

ब्रह्मजज्ञानमन्त्रेण समभ्यर्च्य पितामहम् ।
मेषादिराशिमभ्यर्च्य वशिन्याद्यष्टकं तथा ॥ ४०

एवं पञ्चदश प्रोक्तं षट्त्रिंशच्च पदं क्रमात् ।
अतः परं प्रवक्ष्यामि नवपात्रविधिं शृणु ॥ ४१

भवादीन् शक्तिसहितानष्टदिक्षु प्रपूजयेत् ।
पराशक्तियुतं मध्ये सदाशिवमथार्चयेत् ॥ ४२

इन्द्रादिरहितं प्रोक्तं पालिकानवकार्चनम् ।
त्रिपक्षे पूजयेद्देवीं मध्यपात्रे सदाशिवम् ॥ ४३

पूजयेच्छक्तिसहितं वामे वाणीयुतं विधिम् ।
दक्षे लक्ष्मीसखं विष्णुं पूजयेद्विधिपूर्वकम्।। ४४

पञ्चब्रह्मभिरभ्यर्च्य ब्रह्मजज्ञानमित्यृचा ।
इदं विष्णुस्ततस्त्वेतान्पूजयेत यथाविधि ।। ४५

तिलं च सर्षपं मुद्गं माषं शिंबी कुलुत्थकम् ।
आढकं शालिबीजञ्च बीजाष्टकमुदाहृतम् ।। ४६

शुद्धपात्रे निधायैतद्गोक्षीरेण निषेचयेत् ।
जपेदोषधिसूक्तं च लब्धानुज्ञो द्विजातिभिः ।। ४७

वापयेदों महादेव्यै नमसा शक्तियुक्तया ।
ततो देवीमुपस्थाय सम्प्रार्थ्य स्वं मनोरथम् ।। ४८

पूजयेत्सोमकुम्भे च सोममृक्षगणैर्युतम्।
आप्यायस्वेति मन्त्रेण यजेद्गन्धाक्षतादिभिः ।। ४९

अग्निं संस्कृत्य विधिवत्समिदाज्यचरूनपि ।
पृथगष्टोत्तरशतं जुहुयात्सोममन्त्रतः ।। ५०

ततः स्विष्टकृतं हुत्वा प्रायश्चित्तं ततो हुनेत् ।
चित्तं च चित्तिश्चेत्युक्त्वा त्वन्नः स त्वन्न एव च ।। ५१

अयाश्च हुत्वा व्याहृत्या व्यस्तया च समस्तया ।
यदस्य कर्मण इति हुत्वा पूर्णाहुतिं हुनेत् ।। ५२

महानिवेदनं कृत्वा परितस्तु बलिं ददेत् ।
वेश्मप्रदक्षिणं कृत्वा बहुभिर्ब्राह्मणैस्सह ।। ५३

सर्वातोद्यसमायुक्तं स्वस्तिसूक्तमुदीरयन् ।
पालिकास्तु समादाय कुम्भस्य परितो न्यसेत् ।। ५४

नित्यं संपूजयेत्सोमं यावत्पात्रं(त्रान्) न चोद्धरेत् ।
सप्ताहे वा नवाहे वा गन्धपुष्पादिनार्चयेत् ॥ ५५

धूपदीपादिकं दत्वा संपूज्योद्वास्य देवताः ।
आदाय पालिकास्सर्वा बहुभिर्ब्राह्मणैस्सह ।
महानद्यां तटाके वा सरोमध्येऽथवा क्षिपेत् ॥ ५६

इति सौभाग्यचिन्तामणौ पूर्वखण्डे द्वात्रिंशः पटलः ॥

## त्रयस्त्रिंशः पटलः ।

### रक्षाबन्धनविधिः

अङ्कुरारोपणं प्रोक्तं कौतुकं च निगद्यते ।
पूजां समाप्य विधिवत् देवीमास्थानमण्टपे ॥ १

निधाय समलङ्कृत्य पुण्याहं वाचयेद्गुरुः ।
पुरतः स्थण्डिलं कृत्वा साष्टद्रोणैस्तु शालिभिः ॥ २

अलाभे तु तदर्धेन तदर्धार्धेन वा पुनः ।
तत्राष्टपत्रं कमलं विलिख्य सुमनोहरम् ॥ ३

अनन्तं नागराजं च कर्णिकायां समर्चयेत् ।
वासुकिं तक्षकं चैव कार्कोटं पद्ममेव च ॥ ४

महापद्मं शङ्खपालं गुळिकं सुबलं तथा ।
दलेष्वेतान्समभ्यर्च्य नमो अस्त्विति मन्त्रतः ॥ ५

नमोऽन्तैरथवा देवि चतुर्थ्यन्तैः स्वनाममिः ।
सौवर्णं राजतं ताम्रं शिवतण्डुलपूरितम् ॥ ६

तन्मध्ये तु समावेश्य साष्टपत्राम्बुजं लिखेत् ।
कर्णिकायां महामेरुं दलेषु कुलपर्वतान् ॥ ७

हिमवान्निषधो विन्ध्यो माल्यवान्पारियात्रकः ।
गन्धमादो हेमकूटः श्रीशैलश्चाष्टपर्वताः ॥ ८

जातियुक्तस्वाभिधानैश्चतुर्थ्यन्तैस्समर्चयेत् ।
सौवर्णं मध्यनिष्कं तु राजतं क्षौममेव च ॥ ९

त्रिगुणं त्रिगुणीकृत्य नाडिन्धमकराग्रतः ।
रत्नमुक्तामणिप्रोतं सूत्रं (त्रिकं) कुर्याद्विचक्षणः ॥ १०

चन्द्रचन्दनकस्तूरीकुङ्कुमैरनुरञ्जयेत् ।
शळाकासहितं पत्रत्रितयं ब्रह्मवृक्षजम् ॥ ११

बिल्वजं वाश्वत्थजं वा पात्रत्रयमथापि वा।
मध्यमे तु महासूत्रं दक्षिणं भस्म शोभनम् ॥ १२

वामे चन्द्रादिसंयुक्तं सुगन्धं रक्तचन्दनम् ।
हिरण्यगर्भमन्त्रेण विधिं वाणीयुतं यजेत् ॥ १३

यो रुद्र इति मन्त्रेण शङ्करं गौरिसंयुतम् ।
पुंसूक्तेन यजेद्विष्णुं अथवाष्टार्णविद्यया ॥ १४

सूत्रे भस्मनि गन्धे च यजेदेता(देवा)न्सशक्तिकान् ।
पुरतः स्थण्डिलं कृत्वा शालिभिः शिवसंख्यकैः ॥ १५

वस्त्रकूर्चसमायुक्तं कुम्भं स्थाप्य विधानतः ।
मध्ये वरुणमभ्यर्च्य इमम्मेति च मन्त्रतः ॥ १६

अब्लिङ्गैः पावमानीभी रक्षोघ्नैर्जातवेदसैः ।
मृत्युघ्नैरप्रतिरथैः श्रीसूक्तैर्देविसूक्तकैः ॥ १७

सद्योजातादिभिर्मन्त्रैश्शान्तिभिश्च तदित्यृचा ।
अभिमन्त्र्यैव संप्रोक्ष्य ब्राह्मणैर्वेदपारगैः ॥ १८

सूत्रं च भस्म गन्धं च देवीमात्मानमेव च ।
ओन्नमो ब्रह्मविष्णुभ्यामिति गन्धेन लेपयेत् ॥ १९

ओन्नमो ब्रह्मरुद्राभ्यामिति भस्मानुरञ्जयेत् ।
अभ्यर्च्य गन्धपुष्पाद्यैर्मुद्रास्सन्दर्शयेत्क्रमात् ॥ २०

दण्डं च पुस्तकं चैव चक्रमब्जं त्रिशूलकम् ।
योनिं च दर्शयित्वाथ धूपदीपौ ददेद्गुरुः ॥ २१

कदलीनारिकेलादिं गुलखण्डं निवेदयेत्(द्य च) ।
पुनराचमनं दत्वा धूपदीपौ ददेत्पुनः ॥ २२

आबध्य दृढवस्त्रेण शिरस्याधाय देशिकः ।
अन्येन धारयेद्वापि स्वस्तिसूक्तमुदीरयन् ॥ २३

वेश्मप्रदक्षिणं कुर्यात्सर्वातोद्यनिवादनैः(समन्वितम्) ।
पुरतः स्थापयित्वाऽथ प्रणम्य च महेश्वरीम् ॥ २४

हस्तेनादाय सूत्रं तु मन्त्रेणानेन बन्धयेत् ।
''ओन्नमो वासुदेवाय कल्याणगुणशालिने ॥ २५

नमो लक्ष्मीनिवासाय रक्ष रक्ष जगत्पते ।''
इति मन्त्रं समुच्चार्य विश्वेत्तातेत्यृचा सह ॥ २६

देशिकस्तु प्रसन्नात्मा शक्तिबीजेन संयुजेत् ।
श्रीबीजेनाङ्कयेद्गन्धं सूत्रे तु सुमनोहरम् ॥ २७

तन्मध्ये धारयेद्भस्म बृहत्सामेति मन्त्रतः ।
ललाटे चन्दनं धार्यं भस्मापि तदनन्तरम् ॥ २८

ताम्बूलाद्युपचारान्तं दत्वा देवीं प्रणम्य च ।
भक्तेभ्यः प्रथमं दद्यात् तत्सुगन्धं च भस्म च ॥ २९

रक्षाताम्बूलदानं च कुर्याद्देशिकसत्तमः ।
सदस्येभ्यस्ततो दद्यादन्येभ्यस्तदनन्तरम् ॥ ३०

गुरवे दक्षिणां दद्याद्यथावित्तानुसारतः ।
इति ते सम्यगाख्यातं अङ्कुरं कौतुकं तथा ॥ ३१

कारयित्वा नृपःसर्वाः सफलास्तस्य च क्रियाः ।
अनायासेन सिध्यन्ति वाञ्छितानि महीतले ॥ ३२

इति सौभाग्यचिन्तामणौ पूर्वखण्डे त्रयस्त्रिंशः पटलः ॥

## चतुस्त्रिंशः पटलः ।

**प्रतिमासविशेषोत्सवविधिः**

मृत्सङ्ग्रहाङ्कुरारोपध्वजारोहणमेव च (पूर्वकम्) ।
ततो भेरीताडनं स्याद्दिक्पालामन्त्रणं तथा ॥ १

उत्सवार्थांकुरारोपान् कौतुकं मण्डलं तथा ।
यो(या)गेश्वरीणां पूजां च उत्सवेश्वरिपूजनम् ॥ २

होमो बलिप्रदानं च ग्रामादीनां प्रदक्षिणम् ।
स्नपनं चोत्सवेश्वर्याः पूजानृत्तावलोकनम् ॥ ३

उद्यानानां विहारश्च तीर्थाङ्कुरविधिस्तथा ।
विशेषयानाद्यारोहः प्रत्यहोत्सवकल्पनम् ॥ ४

वसन्तकल्पना चैव पूर्णोत्सवविधिस्तथा ।
तीर्थाङ्कुरं तीर्थविधिः पूर्णाहुतिरतः परम् ॥ ५

यागकुम्भाभिषेकश्च विशेषयजनं तथा ।
ध्वजावरोहणं पश्चात् दिक्पालानां विसर्जनम् ॥ ६

पुष्पयागेन संयुक्तान्युत्सवाङ्गान्यमूनि तु ।
अथ वक्ष्यामि देवेशि विशेषदिवसोत्सवम् ॥ ७

यद्विधानान्नरो लोके सद्यो वैश्रवणायते ।
उत्सवे स्थापने चैव तथा संप्रोक्षणा(णे)विधौ ॥ ८

अङ्कुरार्पणकं कुर्यादन्यत्सर्वं सकौतुकम् ।
पर्वण्यपि च संक्रान्त्यां राज्ञां जन्मदिनेषु च ॥ ९

अयने विषुवे चैव फल्गुन्यां भृगुवासरे ।
चन्द्रसूर्योपरागे च सद्यः कृत्वा तु कौतुकम् ॥ १०

विशेषस्नपनं यत्र तत्र चूर्णोत्सवं चरेत् ।
पुरतः साधको देव्या गोमयेनानुलेपयेत् ॥ ११

स्थण्डिलं कल्पयित्वा तु पुण्याहं वाचयेत्सुधीः ।
तत्राष्टपत्रं कमलं वृत्तं भूवलयान्वितम् ॥ १२

कर्णिकायां यजेद्भूमिं भूमिर्भूम्नेति मन्त्रतः ।
तद्दलेषु यजेद्देवि लोकपालान् स्वमन्त्रतः ॥ १३

उलूखलं च तन्मध्ये स्थापयेद्ब्रह्ममन्त्रतः ।
नववस्त्रेण संवेष्ट्य पूजयेच्छक्तिमन्त्रतः ॥ १४

तत्र कामेश्वरीं यष्ट्वा तन्मध्ये तु विचक्षणः ।
निधाय मुसलं तत्र लम्बकूर्चसमन्वितम् ॥ १५

तत्र कामेश्वरं यष्ट्वा गन्धपुष्पाक्षतादिभिः ।
नार्या सर्वाङ्गशोभिन्या स्नानादिपरिशुद्धया ॥ १६

चूर्णयेद्रजनीं पश्चाच्छुभान्यामलकानि च ।
तण्डुलानि च शुद्धानि पूजाद्रव्याणि सर्वशः ॥ १७

पश्चादुत्सृज्य कूर्चं च तेनान्यान् (ततोऽन्यो) नैव मर्दयेत् ।
अष्टोत्तरशतं वापि चतुष्षष्टिरथापि वा ॥ १८

षट्त्रिंशत्सप्तदश वा कलशस्थापनं चरेत् ।
एलालवङ्गतकोलं जातीफलमुशीरकम् ॥ १९

शशी सुगन्धपुष्पाणि पञ्चत्वक्पञ्चपल्लवान् ।
निक्षिप्याभ्यर्च्य गन्धाद्यैर्वरुणोऽसीति मन्त्रतः ॥ २०

पिधाय नववस्त्रेण ब्रह्मकूर्चसमन्वितम् ।
पुरतः स्थण्डिलं कृत्वा साष्टपत्राम्बुजं लिखेत् ॥ २१

त्रिकोणवृत्तषट्कोणं रचयेत्तत्र मध्यमे ।
तन्मध्ये स्थापयेत्पात्रं हैमं वा राजतं तु वा ॥ २२

ताम्रं वा दारुजं वापि वंशजं वेत्रजं तु वा ।
यस्मिन्मासे तु यत्प्रोक्तं तेन द्रव्येण पूरयेत् ॥ २३

अस्त्रेण कृत्वा तद्रक्षां छादयेच्छुभवस्त्रतः ।
चैत्रे दमनकैः कुर्यात् समूलैर्वापि गुच्छकैः ॥ २४

तस्मिन् मासि च पूर्णायां वसन्तोत्सवमाचरेत् ।
कुर्यात्तत्कालसंभूतैः प्रसूनैश्चन्द्रचन्दनैः ॥ २५

यूथिकाजाति(सौगन्धिकैश्च)कल्हारैः पूजां कुर्यान्महार्हणैः ।
वैशाखे मासि पूर्णायां पूजयेत् हेमपुष्करैः ॥ २६

अथवा चन्द्रकस्तूरीचन्दनैः शिशिरोदकैः ।
ज्येष्ठे मासि च पूर्णायां कदळीपनसाम्रजैः ॥ २७

फलैस्तु पूजयेद्देवीं विधिवत्सर्वसिद्धये ।
आषाढे मासि पूर्णायां चन्दनैः कुङ्कुमान्वितैः ॥ २८

एलालवङ्गजातीभिरुपेतैः पूजयेच्छिवाम् ।
श्रावणे मासि पूर्णायां पवित्रैः पूजयेच्छिवाम् ॥ २९

नभोमासि च पूर्णायां प्रसूनैः केतकोद्भवैः ।
आश्वयुज्यां चरेत्पूजां नवरात्र्युक्तवर्त्मना ॥ ३०

तस्मिन्मासि च पूर्णायामोदनेन समर्चयेत् ।
कार्तिके मासि पूर्णायां कुङ्कुमेन समर्चयेत् ॥ ३१

मार्गशीर्षे च पूर्णायां नालिकेराम्बु चन्द्रवत् ।
निवेद्याभ्यर्चयेन्माषपिष्टापूपैर्यथाविधि ॥ ३२

उषस्यभ्यर्चनं कुर्यात्तस्मिन्मासि दिने दिने ।
मुद्गान्नं चैव माषान्नं कृसरान्नं गुळान्नकम्॥ ३३

आज्यान्नं नाळिकेरान्नं सितान्नं पायसं तथा ।
अन्यदन्यद्विशेषं यत् तत्सर्वं तु निवेदयेत् ॥ ३४

पुष्ये मासि च पूर्णायां शर्कराभिर्गुळेन च ।
पूजयेदिष्टसिद्धिः स्याद्गव्यं दुग्धं निवेदयेत् ॥ ३५

तस्मिन्मासि च पूर्णायां आग्रायणमथाचरेत् ।
आग्रायणदिनात्पूर्वं तृतीये पञ्चमेऽपि वा ॥ ३६

पञ्चाङ्गशुद्धदिवसे गुरुशुक्रबलान्विते ।
लग्नमेकं विनिश्चित्य कृत्वा स्नपनकर्म च ॥ ३७

निवेद्य कौतुकं बध्वा समलङ्कृत्य चण्डिकाम् ।
सर्वातोद्यसमायुक्तं गच्छेत्पूर्वमतः परम्(थोत्तरम्) ॥ ३८

फलितां भूमिमासाद्य स्थण्डिलं तत्र कारयेत् ।
मध्ये भूमिं मृदा कृत्वा पार्श्वयोश्चन्द्रभास्करौ ॥ ३९

दिक्पालानभितो यष्ट्वा गन्धपुष्पादिभिश्शुभैः ।
धूपदीपैश्च नैवेद्यैर्भूसूक्तेन महीं यजेत् ॥ ४०

पुष्पवन्तौ समभ्यर्च्य कश्चिदाहूय कारयेत् ।
ओषधीशधियाऽभ्यर्च्य गन्धपुष्पाक्षतादिभिः ॥ ४१

इषे त्वेति स मन्त्रेण लवनं तेन कारयेत् ।
स्योना पृथिवि मन्त्रेण उपस्थानं तु कारयेत् ॥ ४२

तदैव धारयेद्वद्ध्वां मञ्जरीं सोमरूपिणीम् ।
आलयं तु समासाद्य सर्वातोद्यसमन्वितम् ॥ ४३

पुरतः स्थापयेद्देव्याः प्राङ्मुखं वाप्युदङ्मुखम् ।
राज्ञे च देशिकादिभ्यो जनेभ्यस्तदनन्तरम् ॥ ४४

विशेषस्नपनं होमं पूजाबल्युत्सवांस्तथा ।
कृत्वा सायं शुभे लग्ने नैवेद्यं परिकल्पयेत् ॥ ४५

नैवेद्यं तण्डुलं चैव जनसङ्घाय दापयेत् ।
माघे मासि च पूर्णायां तिलैः शुभ्रैस्तथेतरैः ॥ ४६

पूजयेद्दुग्धनैवेद्य(द्यैः)सितापूपादिभिस्सह ।
फाल्गुने मासि पूर्णायां चम्पकैस्स्वर्णपुष्पकैः ॥ ४७

चूतसौगन्धिककुसुमैः पूजयेदीप्सिताप्तये ।
तस्मिन्मास्येव पूर्णायां कन्यापूजनमाचरेत् ॥ ४८

तद्विधानं प्रवक्ष्यामि येन श्रीः सर्वतोमुखी ।
यदशेषेण दुःखघ्नं रहस्यमतिगोपितम् ॥ ४९

राजराष्ट्राभिवृद्ध्यर्थं कर्तव्यं भुक्तिमुक्तिदम् ।
अङ्कुरं कौतुकं चैव कुर्यात्पूर्वोक्तवर्त्मना ॥ ५०

समदृष्टिं प्रसन्नास्यां सुरूपां शुभलक्षणाम् ।
अरोगामव्रणां मुग्धां कुलीनां पञ्चवर्षिणीम् ॥ ५१

सुस्मितां सुदतीं सुभ्रूं(शुभ्रां) सुकेशीं चारुलोचनाम् ।
सर्वलक्षणसंपन्नां काञ्चिदादाय कन्यकाम् ॥ ५२

अभ्यज्य तिलतैलेन संस्नाप्य च यथाविधि ।
अलङ्कृत्य विधानेन सर्वाभरणभूषणैः ॥ ५३

कृतसायन्तनीपूजो देशिकस्तु समाहितः ।
वेश्म(ग्राम)प्रदक्षिणं कृत्वा शिबिकायां गजेऽपि वा ॥ ५४

देव्यालयं प्रवेश्यैतां सर्वातोद्यसमन्वितम् ।
बहुभिर्ब्राह्मणैस्सार्धं स्वस्तिसूक्तमुदीरयन् ॥ ५५

देशिकस्तु प्रसन्नात्मा पाद्यार्घ्याहरणान्वितः ।
महार्हमासनं दत्वा ध्यात्वा देवीं जगन्मयीम् ॥ ५६

ततः(अथ) प्रक्षाळ्य चरणावाचान्तः शुद्धचेतनः ।
पुण्याहं वाचयित्वाथ स्वसूत्रोक्तविधानतः ॥ ५७

ततस्सर्वान्बहिः कृत्वा शिष्येण सह देशिकः ।
संप्रोक्ष्य च महीं सर्वां पुण्याहसलिलैर्नवैः ॥ ५८

तद्विधानासनासीनः प्राणानायम्य मूलतः ।
पुरतो गोमयालिप्ते श्लक्ष्णे भूमितले शुभे ॥ ५९

स्थण्डिलं कारयेत् शुद्धचै(द्धैः)द्रोणद्वितयतण्डुलैः ।
विशालं विलिखेच्चक्रं नवयोन्यात्मकं तु वा ॥ ६०

ध्यात्वेमां देवताकारां तस्योपरि निवेश्य च ।
करशुद्ध्यादिकं कृत्वा वशिन्याद्यष्टकं तथा ॥ ६१

योगिनीबीजतो देवि रक्षामात्मनि कारयेत् ।
अभ्यर्च्य गन्धपुष्पाद्यैस्तां कन्यां देवताधिया ॥ ६२

षड्दर्शनसमायुक्तं श्रीचक्रं पूजयेत्सुधीः ।
पूर्वोक्तेन विधानेन कुर्यादग्निमुखं ततः ॥ ६३

नारिकेलाम्रकदळीपनसेक्षुरसादिभिः ।
चन्द्रचन्दनकस्तूरीकुङ्कुमैश्च हिमाम्बुभिः ॥ ६४

संमिश्र्यालेपये(प्य तद्)द्रात्रौ प्रीणयेत्परमेश्वरीम् ।
तेषां पूजाविधिं वक्ष्ये सर्वसिद्धिकरं नृणाम् ॥ ६५

पूर्वोक्तविधिनैतानि संस्थाप्य कलशे शुभे ।
नववस्त्रेण संच्छाद्य होमकर्म समाचरेत् ॥ ६६

पूर्वोक्तेन विधानेन कुर्यादग्निमुखं ततः ।
अग्निं संस्कृत्य विधिवदपूपं पायसं तिलम् ।
आज्येन सहितं हुत्वा पृथगष्टोत्तरं शतम् ॥ ६७
अष्टाविंशतिसंख्या(ख्यं) वा कुर्यात्स्विष्टकृतं ततः ।

प्रायश्चित्ताहुतीर्हुत्वा ततः पूर्णाहुतिं हुनेत् ॥ ६८
कलशस्नपनं कुर्यादैन्द्राद्यं मध्यमान्तिकम् (न्वितम्) ।
पञ्चामृतैश्च सेक्षूदैः(श्चेक्षुरसैः) केरोदैः पयसा तथा ॥६९

शङ्खोदैः शुद्धतोयैश्च स्नापयेत्परमेश्वरीम् ।
ततो वस्त्रादिदीपान्तमुपचारान्समर्पयेत् ॥ ७०

ततो मन्त्रहविर्दद्यात्पुनराचमनं तथा ।
तत्तन्मासोदितैर्द्रव्यैरर्चयेन्मूलविद्यया ॥ ७१

ततो दिव्यहविर्दद्याद्बहुभिर्व्यञ्जनैर्युतम् ।
ततो नीराजनादीनि दद्यात्पूर्वोक्तवर्त्मना ॥ ७२

प्रणवद्वादशावृत्या सामान्यार्घ्यं प्रदा(समा)पयेत् ।
बलिदानं ततः कुर्यादिन्द्रादिभ्यो यथाविधि (हविः)॥७३

''इन्द्रस्सुराणामधिपो वज्रपाणिश्शचीसखः ।
ऐरावतस्थो भगवान् देवो गृह्णात्विमां बलिम् ॥ ७४

वह्निस्त्विषामधिपतिः स्रुक्स्रग्वी छागवाहनः ।
सस्वाहा(हो)देववदनो देवो गृह्णात्विमां बलिम् ॥ ७५

यमः प्रेताधिपो दण्डी देवीसंहारिणीसखः ।
महिषस्थोऽखिलसमो देवो गृह्णात्विमां बलिम् ॥ ७६

रक्षोगणाधिपः खड्गी निर्ऋतिर्भूतवाहनः ।
सतामसीको भगवान् देवो गृह्णात्विमां बलिम् ॥ ७७

वरुणो यादसामीशो देवीप्राचेतसीयुतः (सखः) ।
भगवान्मकरारूढो देवो गृह्णात्विमां बलिम् ॥ ७८

प्राणानामधिपो वायुः शुचि(शक्ति-शीति) मान्मृगवाहनः।
सदागत्या समायुक्तो देवो गृह्णात्विमां बलिम् ॥ ७९

दण्डी यक्षगणाधीशः कुबेरो नरवाहनः ।
सर्वमङ्गलया युक्तो देवो गृह्णात्विमां बलिम् ॥ ८०

ईशो भूताधिपः शूली (शर्वो) विद्येशो वृषवाहनः ।
रुद्राणीसहितो भीमो देवो गृह्णात्विमां बलिम् ॥ ८१

लोकानामधिपो ब्रह्मा हंसस्थः साक्षसूत्रकः ।
सरस्वतीसमायुक्तो देवो गृह्णात्विमां बलिम् ॥ ८२

विष्णुस्सर्वाधिपः खड्गी गरुडस्थो रमासखः ।
रक्षकस्सर्वभूतानां देवो गृह्णात्विमां बलिम् ॥ ८३

(चित्रे स्वचित्रे चित्रे वा चित्राङ्गे चित्रवाहिनि ।
चित्रहस्ते महाचित्रे चित्रे गृह्णात्विमं बलिम् ॥

गन्धर्वो गगनान्तस्थो वीणापाणिः शुभायुधः ।
काञ्चनाङ्गो गदायुक्तो गणो गृह्णात्विमां बलिम् ॥

भूतः सर्वशरीरस्थो रक्तवर्णः कपालभृत् ।
अस्थिमालाविभूषाढ्यो भूतो गृह्णात्विमां बलिम् ॥

सर्पो वै वदनोऽनन्तः अधोवासो विषायुधः ।
पिङ्गलाक्षो महानागः सर्पो गृह्णात्विमां बलिम् ॥

गणेशो मूषिकारूढो विघ्नपाणिश्चतुर्भुजः ।
वक्रतुण्डो गणाध्यक्षो देवो गृह्णात्विमां बलिम् ॥)

इन्द्राद्यमुत्तमं प्रोक्तं ब्रह्माद्यं चैव मध्यमम् ।
मुखान्तमधमं प्रोक्तं यथावास्तु प्रदापयेत् ॥ ८४

चत्वरे चैत्यवृक्षे वा वास्तुनाथसमीपतः ।
मुद्गौदनं पायसं वा गुळौदनमथापि व ॥ ८५

प्रदद्यात्सर्वभूतेभ्यस्सजलं मन्त्रसंयुतम् ।
''भूता ये विविधाकारा नाकभूम्यन्तरिक्षगाः ॥ ८६

पातालतलसंस्थाश्च शिवयोगेन भाविताः ।
इन्द्रादिदिक्षुसंस्थाश्च ध्रुवाद्यास्सर्वसन्धिगाः ॥ ८७

तृप्यन्तु प्रीतमनसो भूता गृह्णन्त्विमां बलिम् ।''
यत्र यत्र बलिं दद्यात्तत्रस्थेभ्य इतीरयेत् ॥ ८८

गन्धपुष्पादिनाभ्यर्च्य बिम्बस्य स्वस्य वा पुनः ।
घण्टानादयुतं दद्यात्प्रतिदिक्षु समन्त्रकम् ॥ ८९

ततो देवीमलङ्कृत्य यानमारोप्य शोभनम् ।
वीणावेणुमृदङ्गादिछत्रचामरकादिभिः ॥ ९०

बहुभिः नृत्तगीताद्यैः कुर्याद्ग्रामप्रदक्षिणम् ।
आढ्यैश्च चन्दनरसैः पुष्पमालाकुलैरपि ॥ ९१

पुष्पवृष्टिं तदूर्ध्वे तु गन्धपङ्कं जने क्षिपेत् ।
नभश्चराणां प्रीत्यर्थं व्योम्नि पुष्पाञ्जलिं क्षिपेत् ॥ ९२

भूगतानां च सर्वेषां तुष्ट्यर्थं हेमवस्त्रकम् ।
पतिव्रताश्च कन्याश्च ब्राह्मणान्वेदपारगान् ॥ ९३

यथार्हं वस्त्रहेमाद्यैः तोषयेत्परमेश्वरीम् ।
ततो द्वारगतां देवीं नीराजनपुरस्सरम् ॥ ९४

आस्थानमण्टपं नीत्वा पूजयेत्परमेश्वरीम् ।
जनेभ्यो गन्धताम्बूलाद्यक्षतानि च दापयेत् ॥ ९५

एवं यः कुरुते देवि विशेषदिवसोत्सवम् ।
ऐहिकानखिलान्भोगान्भुक्त्वा देवीपदं व्रजेत् ॥ ९६

इति सौभाग्यचिन्तामणौ पूर्वखण्डे चतुस्त्रिंशः पटलः ॥

## पञ्चत्रिंशः पटलः

### डोलोत्सवविधिः

डोलोत्सवविधिं वक्ष्ये विशेषात्सर्वसिद्धिदम् ।
उद्यानं कारयेद्रम्यं वनं वापि सरस्तटे ॥ १

बहुपुष्पद्रुमाकीर्णं बहुपुष्पफला(लता)वृतम् ।
तन्मध्ये मण्टपं कुर्यात् चतुर्द्वारसमायुतम् ॥ २

तन्मध्ये कारयेत् डोलां काञ्चनीं वापि राजतीम् ।
प्रतिद्वारसमायुक्तं कदळीपूगतोरणैः ॥ ३

वितानध्वजमालाद्यैर्दर्भमालाभिरुज्ज्वलम् ।
एवं तु मण्टपं कृत्वा डोळोत्सवमथाचरेत् ॥ ४

वसन्ते वाथवा ग्रीष्मे अथवा मार्गशीर्षके ।
पर्वान्तं भृगुवारान्तं फल्गुन्यन्तमथापि वा ॥ ५

यजमानस्य जन्मर्क्षे दश वा द्वादशस्य वा ।
यद्वा फल्गुनिनक्षत्रे तस्मिन्तीर्थं समाचरेत् ॥ ६

एतेष्वेकं विनिश्चित्य तस्मिन्नेव समाचरेत् ।
सायङ्काले तु पूर्वेद्युरङ्कुरं कौतुकं तथा ॥ ७

दिक्पालामन्त्रणं कार्यं तथा (वीथी) डोलादिशोधनम् ।
परेद्युर्नित्यपूजान्ते यागशालार्चनं चरेत् ॥ ८

कलशस्थापनं कुर्याद्वक्ष्यमाणेन वर्त्मना ।
तत्र स्थण्डिलमाकल्प्य चतुर्द्रोणयुतैर्यवैः ॥ ९

तण्डुलेन तदर्धेन तदर्धेन तिलेन च ।
मध्यकुम्भे महादेवीं कामेशीमग्निगोचरे ॥ १०

वज्रेशीं दक्षिणे भागे(पार्श्वे) भगमालां तु नैर्ऋते ।
पश्चिमे तु महालक्ष्मीं वायव्ये धरणीं तथा ॥ ११

सोमे सरस्वतीं देवीं सावित्रीमीशगोचरे ।
पूर्वे पुण्योदकां गङ्गां आवाह्याभ्यर्चयेत्ततः ॥ १२

ततोऽग्निं समुपाधाय नव पञ्चैकमेव वा ।
पालाशैः पायसैराज्यैः मूलेनाष्टोत्तरं शतम् ॥ १३

अङ्गाग्निष्वङ्गशक्तीनां जुहुयात्स्वस्वमन्त्रतः ।
व्याहृतीभिस्त्रिधा हुत्वा पूर्णाहुतिमथाचरेत् ॥ १४

डोलां तु कारयेद्देव्याः काञ्चनेन सितेन वा ।
हस्तायामप्र(मात्रान्त)विस्तारां सार्धयामेन शोभिताम् १५

हेमादिदामसंबद्धां वस्त्रमाल्याद्यलङ्कृताम् ।
अग्रं विमानवत्कुर्यात्त्रिशृङ्गं वैकशृङ्गकम् ॥ १६

तन्मध्ये विन्यसेद्देवीं सर्वाभरणभूषिताम् ।
डोला तु मानसं रूपं शक्तिर्विज्ञानरूपिणी ॥ १७

सत्यमित्यनुवाकेन डोलामभ्यर्चयेद्गुरुः ।
विज्ञानमिति मन्त्रेण तन्मध्ये शक्तिमर्चयेत् ॥ १८

डोलाचक्रं तदग्रे तु कुर्यादतिमनोहरम् ।
तिर्यगूर्ध्वभ्रमं चक्रं तिर्यग्भ्रममथापि वा ॥ १९

हंसस्वस्तिकरूपं वा रथाकारमथापि वा।
अलङ्कृत्याथ नारीभिर्विहारं कारयेत्पुरः (द्गुरुः) ॥ २०

बहुभिर्भक्ष्यभोज्याद्यैर्नैवेद्यं च निवेदयेत् ।
मुद्गयूषादिरस्यानि नाळिकेरोदकानि च ॥ २१

रसायनानि हृद्यानि तथैवेक्षुरसं तथा ।
एलालवङ्गकस्तूरीः पुष्पाणि सुरभीणि च ॥ २२

ताम्बूलाद्युपचारांश्च दत्वा नीराजनादिकम् ।
गन्धाक्षतांश्च ताम्बूलं सदस्येभ्यश्च दापयेत् ॥ २३

एवं प्रतिदिनं कुर्यान्नव सप्ताथ पञ्च वा।
स्नपनं कारयेत्पश्चात् गुरुं सन्तोषयेत्ततः ॥ २४

डोलोत्सवमिति प्रोक्तं सर्वसौभाग्यसिद्धिदम् ।
सर्वव्याधिहरं चैव पुत्रपौत्राभिवृद्धिदम् ॥ २५

विशेषेणोत्सवेनैव सन्तुष्टा जायतेऽम्बिका ।
य इदं शृणुयान्नित्यं सर्वान्कामानवाप्नुयात् ॥ २६

इति सौभाग्यचिन्तामणौ पूर्वखण्डे पञ्चत्रिंशः पटलः ।

## षट्त्रिंशः पटलः ।

**जलक्रीडाविधिः**

अथ वक्ष्यामि देवेशि जलक्रीडाविधिं परम् ।
यत्कृत्वा वाऽथ दृष्ट्वा व सर्वापद्भ्यो विमुच्यते ॥ १

वैशाखे मासि वा ज्येष्ठे चैत्रे वा मासि फाल्गुने ।
पूर्णा च पञ्चमी चैव त्रयोदश्यष्टमी तथा ॥ २

भृगुवारयुता या स्यादम्बुक्रीडां समाचरेत् ।
पूर्वेद्युर्नित्यपूजान्ते कृतसायाह्निको गुरुः ॥ ३

पुण्याहं वाचयित्वा तु कुर्यादङ्कुरकौतुकम् (कौ) ।
नित्यपूजां पुरः कृत्वा पश्चान्नैमित्तिकं चरेत् ॥ ४

तत्र स्थण्डिलमाकल्प्य द्रोणद्वि(त्रि)तयशालिभिः ।
तण्डुलैश्च तिलैश्चैव तदर्धार्धक्रमान्वितैः ॥ ५

सवस्त्रयुग्मरत्नाढ्यान् कुशकूर्चसमन्वितान् ।
नव कुम्भांश्च संस्थाप्य यथावल्लक्षणान्वितान् ॥ ६

तत्र देवीं समाराध्य वशिन्याद्यष्टकावृताम् ।
कुण्डानि परितः कुर्यान्नव पञ्चैकमेव वा ॥ ७

पायसैराज्यसंयुक्तैश्शर्कराफलसंयुतैः ।
हुनेदष्टोत्तरशतं समाधाय हुताशनम् ॥ ८

परितस्तु वशिन्यादेरष्टाविंशतिसंख्यया।
बलिदानं ततः कुर्याद्यथावद्देशिकोत्तमः ॥ ९

मध्यन्दिने तु संप्राप्ते तटाकं वापि पुष्करम् ।
बहुस्निग्धजलोपेतं पद्मोत्पलसुगन्धिक(त)म् ॥ १०

तदन्ते मण्टपं कृत्वा सर्वालङ्कारशोभितम् ।
तदन्ते नावमासज्य वेदिं कुर्याच्च मध्यमे ॥ ११

स्थण्डिलद्वितयं कृत्वा व्रीहिभिस्तण्डुलैस्तिलैः ।
द्रोणत्रि(द्वि)तयसंख्याकैस्तदर्धार्धयुतैस्त्रिभिः ॥ १२

वस्त्रकूर्चादिसंयुक्तं कुम्भस्य द्वितयं न्यसेत् ।
पश्चिमे कुम्भके देवि वरुणं संप्रपूजयेत् ॥ १३

अवते हेड इत्यृग्भ्यां अर्चयेत्तु जलाधिपम् ।
इन्द्रादीन् दिक्पतीन्न्यस्य तत्तन्मन्त्रमुदीरयेत् ॥ १४

ब्रह्मजज्ञानमित्युक्त्वा ब्रह्माणं वरुणं तथा ।
तत्पुरस्तान्न्यसेत्कुम्भं दिशासु कलशांस्तथा ॥ १५

तत्रार्चयेच्च पृथिवीमदित्या रूपमास्थिताम् ।
मातरं सर्वदेवानामदितिर्न उरु(र्नाम क्र)ष्यतु ॥ १६

गङ्गाद्याः पुण्यसरितः परितस्संप्रपूजयेत् ।
वेतसो वा कदम्बो वा ये चान्ये जलजाः शुभाः ॥१७

प्रशस्तं तदभावे तु सुस्निग्धं चाम्रपल्लवम् ।
दर्भो वीरतृणं शस्तं शाल्यः काशास्तथेतराः ॥ १८

पोते मकरमभ्यर्च्य नमोऽन्तेन स्वनामतः ।
हुत्वा मारुतमन्त्रेण समिदाज्यचरून् शुभान् (चरन्) ॥ १९

तथैवादितिमन्त्रेण हुत्वा स्विष्टकृतं तथा ।
निवेद्य वरुणायरन्नं दत्वा चादितये तथा ॥ २०

बलिं दत्वा तु परितो यादोभ्यश्च जले क्षिपेत् ।
ततो देवीं नावमिति गन्धपुष्पाक्षतैर्यजेत् ॥ २१

नावमध्ये रथं कृत्वा वस्त्रमालाद्यलङ्कृतम् ।
आरोपयेत्ततो देवीं सर्वालङ्कारभूषिताम् ॥ २२

कमलोत्पलकल्हारैः सुगन्धैस्सुमनोहरैः ।
शोभिते जलमध्ये तु विहरेत्प्रमदाजनैः ॥ २३

यामं वाप्यर्धयामं वा सर्वातोद्यसमन्वितम् ।
विहृत्योत्तीर्य तत्तीरे स्थापयेत्परमेश्वरीम् ॥ २४

ये पश्यन्ति जलान्तस्थां उत्तरन्तीं पराम्बिकाम् ।
ते तरन्ति महात्मानो दुस्तरान्भवसागरान् ॥ २५

ततो हविर्निवेद्याथ दत्वा नीराजनादिकम् ।
प्रविश्य चालयं पश्चात्पूजाहोमबलिं चरेत् ॥ २६

चन्द्रचन्दनकस्तूरीकुङ्कुमैश्च हिमाम्बुभिः ।
आलिप्य मुक्तादामाद्यैर्दामभिश्च मनोहरैः ॥ २७

शोभोपशोभासंयुक्तां अलङ्कृत्य महेश्वरीम् ।
बहुपुष्पद्रुमाकीर्णं बहुगुल्मलतोज्ज्वलम् ॥ २८

तन्मध्ये मण्टपं कृत्वा वितानध्वजशोभितम् ।
याने वा शिबिकायां वा समारोप्य महेश्वरीम् ॥ २९

सर्वातोद्यसमायुक्तां बहुच्छत्रसमा(ध्वजा)कुलाम् ।
उद्यानमण्टपं नीत्वा पूजयेत्परमेश्वरीम् ॥ ३०

वीणावेणुमृदङ्गाद्यैः नृत्तगीतादिदर्शनैः ।
बहुभिर्भक्ष्यभोज्याद्यैः प्रीणयेत्परमेश्वरीम् ॥ ३१

चन्द्रचन्दनकस्तूरीकुङ्कुमैः शिशिरोदकैः ।
पूरिताद्रुक्मपात्रात्तु मञ्जरीभिश्च मार्जयेत् ॥ ३२

गन्धाक्षते च ताम्बूलं अग्रे देव्यास्समर्पयेत् ।
दद्याद्यथोचितं तानि गन्धपुष्पाक्षतानि च ॥ ३३

मूर्तिपानां तु सर्वेषां यथापूर्वं यथोचितम् ।
एवं प्रतिदिनं कुर्यान्नव सप्ताथ पञ्च वा ॥ ३४

देशकालानुसारेण कुर्यादेकदिनं तु वा ।
अन्ते तु स्नपनं कुर्यात्पुष्करे वालयेऽपि वा ॥ ३५

दीपानारोप्य बहुशः प्रविशेदालयं ततः ।
एवं तु (यः) कारयेद्राजा सद्य एव सुखी भवेत् ॥ ३६

न दुर्भिक्षं भवेत्तस्य व्याधयो न ज्वरादयः ।
पुत्रपौत्रादयश्चैव संपदश्च पदे पदे ॥ ३७

इति सौभाग्यचिन्तामणौ पूर्वखण्डे षट्त्रिंशः पटलः ॥

## सप्तत्रिंशः पटलः ।

**पवित्रोत्सवविधिः**

पार्वत्युवाच—

देवदेव महादेव परिपूर्ण प्रथामय ।
पवित्रारोपणं कर्म सूचितं न प्रकाशितम् ॥ १

विस्तराच्छ्रोतुमिच्छामि विधानं तस्य वैभवम् ।

ईश्वर उवाच—

शृणु देवि महाभागे यन्मां त्वं परिपृच्छसि ॥ २

पुष्पैर्योग्यैरथान्यैर्वा म्लानैर्वा कीटदूषितैः ।
वस्त्रैराभरणैर्दुष्टैरर्चनाद्यत्तु पातकम् ॥ ३

स्वयं वा धारणाद्देवि पातकं यत्तु संभवम् ।
प्रायश्चित्तमिदं प्रोक्तं सर्वपातकनाशनम् ॥ ४

त्वद्भक्ता वा हरेर्भक्ता मद्भक्ता वान्यपूजकाः ।
तेषामपि समाख्यातं प्रायश्चित्तमिदं परम् ॥ ५

श्रावणे मासि पूर्णायां पवित्रैः पूजयेच्छिवाम् ।
तस्मिन् मास्येव पूर्णायां चन्दनैः कुङ्कुमान्वितैः ॥ ६

एलालवङ्गजातीभिरुपेतैः पूजयेच्छिवाम् ।
कारणं च वदाम्यद्य शृणु सर्वाङ्गसुन्दरि ॥ ७

चण्डो नामोरगः कश्चित् वासुकेर्वंशसम्भवः ।
गरुडाद्भयमापन्नस्तपस्तेपे तु मां प्रति ॥ ८

तस्य भार्या वरारोहा भर्तुः स्नेहान्मनस्विनी ।
पतिशुश्रूषणपरा पूजयामास मामपि ॥ ९

सन्तुष्टेन मया देवि भूषणत्वेन कल्पितः ।
सापि त्वद्भूषणत्वेन कल्पिता च मया पुरा ॥ १०

मदङ्गस्पर्शनादेव तद्द्वन्द्वं सर्वसिद्धिमत् ।
अस्माकं तु यथायोगः तथा योगस्तयोरपि ॥ ११

वरोऽन्यश्च मया दत्तः सन्तुष्टेन तयोः पुरा ।
यश्च मां सेवते त्वां वा तेन पूज्यौ युवामपि ॥ १२

उत्तमश्च नभोमासो नभस्यश्चैव मध्यमः ।
इषो मासोऽधमो ज्ञेयस्तस्मादेतन्न लङ्घयेत् ॥ १३

न करोति च यो मोहादिष्टापूर्तं न विद्यते ।
तस्मात्सर्वप्रयत्नेन पवित्रारोपणं चरेत् ॥ १४

पवित्रारोपणात्पूर्वं तृतीये पूर्वकेऽह्नि वा ।
पूर्वोक्तेन विधानेन कारयेदङ्कुरार्पणम् ॥ १५

पूजान्ते कौतुकं बध्वा कुर्यात्तस्याधिवासनम् ।
सौवर्णै राजतैर्वापि सूत्रैर्वा पट्टसम्भवैः ॥ १६

कार्पाससम्भवैः रक्तैर्नवैः श्वेतैरथापि वा।
कलावस्वङ्गुलयुतैः कुर्यादानाभिकै(तै)श्च वा ॥ १७

साष्टाविंशोत्तरशतैः तन्तुभिस्सुमनोहरैः ।
पवित्रं कारयेद्देव्याः सरग्रन्थित्रयान्वितम् ॥ १८

निधाय ग्रन्थिमध्येषु महारत्नानि देशिकः ।
तान्विभज्य त्रिधा तन्तून् त्रीणि सूत्राणि कारयेत् ॥ १९

अष्टोत्तरशताक्षाणि बन्धनैः कारयेद्बुधः ।
चतुष्षष्टिमितैस्सूत्रैः सरग्रन्थित्रयान्वितैः ॥ २०

षण्णवत्या तु संबद्धैर्द्विधाभूताक्षकल्पितैः ।
कुर्यान्मुख्याङ्गशक्तीनां पवित्राणि द्विजोत्तमः ॥ २१

द्वात्रिंशत्तन्तुभिः कुर्यादेकग्रन्थ्येकसूत्रकम् ।
अन्यासां योगिनीनां च मनुष्याणां तथैव च ॥ २२

पवित्रलक्षणं प्रोक्तं नागाकारं ततः शृणु ।
पञ्चत्र्येकमुखं नागं शिरोरत्नसमन्वितम् ॥ २३

साष्टाविंशच्छतं पूर्वं अपरं तु तदर्धकम् ।
तदर्धेनापरं कुर्यान्नागाकारपवित्रकम् ॥ २४

मूलमुख्याङ्गशक्तीनां(ङ्कुशादीनां) त्रिधा तदिह कीर्तितम् ।
कुर्यात्तन्तुसमायोगं यथा न इति मन्त्रतः ॥ २५

विश्वेत्तातेति मन्त्रेण ग्रन्थिबन्धं तु कारयेत् ।
ततस्स्थण्डिलमाकल्प्य चतुर्द्रोणशिवैर्यवैः ॥ २६

तदर्धतण्डुलतिलैरष्टपत्राम्बुजं लिखेत् ।
नाळिकेराम्रपत्रेषु(त्रादि) वस्त्रकूर्चसमन्वितम् ॥ २७

पूर्ववत्कलशं स्थाप्य पवित्राणि निधाय च ।
पुण्याहं वाचयित्वा तु तानि संप्रोक्ष्य देशिकः ॥ २८

पावीरवीति मन्त्रेण पवित्राणि च पूजयेत् ।
नमो अस्त्विति मन्त्रेण नागाकारपवित्रकम् ॥ २९

नववस्त्रेण संछाद्य कुशकूर्चसमन्वितम् ।
वशिन्यादियुतां देवीं नवकुम्भेषु पूजयेत् ॥ ३०

तथैव नवकुण्डेषु जुहुयात्सघृतैस्तिलैः ।
एककुण्डं तु वा कुर्यान्मूलेनाष्टसहस्रकम् ॥ ३१

तत्तन्मन्त्रैस्ततः कुर्यात्संपूज्य च यथाविधि ।
सौवर्णे राजते ताम्रे द्रोणतण्डुलपूरिते ॥ ३२

लिखित्वाऽष्टदलं पद्मं कर्णिकाकेसरोज्ज्वलम् ।
तत्कर्णिकायां संपूज्य वह्निसूर्येन्दुमण्डलम् ॥ ३३

मध्ये ब्रह्माणमभ्यर्च्य ब्रह्मजज्ञानमित्यृचा ।
परितो दिक्पतीन्यष्ट्वा तत्तन्मन्त्रेण देशिकः ॥ ३४

प्रतिष्ठासीतिमन्त्रेण पवित्राणि निधाय च ।
पावीरवीति मन्त्रेण पवित्राणि च पूजयेत् ॥ ३५

अभ्यर्च्य देवीगायत्र्या मूलमन्त्रेण वार्चयेत् ।
धूपदीपं ततो दत्वा निवेद्य च फलादिकम् ॥ ३६

पवित्रमिति मन्त्रेण धारयेदम्बिकां गुरुः ।
अन्यासामङ्गशक्तीनां तत्तन्मन्त्रैस्समर्चयेत् ॥ ३७

पूजाहोमोत्सवान् कुर्यान्नव सप्ताथ पञ्च वा ।
कुम्भाभिषेचनं कुर्यादुत्सवान्ते महेश्वरि ॥ ३८

महानिवेदनं कृत्वा क्षमस्वेति क्षमापयेत् ।
प्रायश्चित्तमिदं प्रोक्तं सर्वपापप्रणाशनम् ।
प्रतिसंवत्सरं कुर्यात्पूजावैकल्यशान्तये ॥ ३९

इति सौभाग्यचिन्तामणौ पूर्वखण्डे सप्तत्रिंशः पटलः ॥

## अष्टत्रिंशः पटलः

**महानवमीमाहात्म्यम्**

पार्वत्युवाच—

देवदेव महादेव सर्वज्ञ करुणानिधे ।
यो मासस्सर्वमासेषु मुख्यस्सर्वार्थसिद्धिदः ॥ १

ईश्वर उवाच—

शृणु देवि महाभागे यन्मां त्वां परिपृच्छसि ।
आश्वयुज्यामयत्नेन यत्फलं लभते दिनात् ॥ २

सर्वमासकृतेनापि तत्फलं नैव लभ्यते ।
तस्मिन्मासेऽपि देवेशि पूर्वपक्षोऽधिको मतः ॥ ३

शुक्लप्रतिपदाद्यास्तु नव रात्र्योऽतिशोभनाः ।
तत्रापि नवमी श्लाघ्या सर्वसिद्धिप्रदायिनी ॥ ४

इदं च शृणु देवेशि यतश्श्लाघ्या महातिथिः ।
पुराऽभूदन्धको नाम दानवेन्द्रो महाबलः ॥ ५

ब्रह्मदत्तवरो देवि परार्धबलहारकः ।
अधिक्षिप्याखिलान्देवान् सर्वान्लोकानबाधयत् ॥ ६

ततो देवाः सगन्धर्वाः सेन्द्राः सहमरुद्गणाः ।
ब्रह्माणं शरणं जग्मुः शरण्यं शरणार्थिनः ॥ ७

ततो देवान्समुद्वीक्ष्य ब्रह्मा लोकपितामहः ।
देवानां कार्यसिद्ध्यर्थे चिन्तयामास पद्मजः ॥ ८

चिन्तयानस्य देवस्य ध्यानयोगेन धीमतः ।
कोटिसूर्यप्रतीकाशं चन्द्रकोटिसुशीतलम् ॥ ९

चिरेण परमं ज्योतिः प्रादुश्चक्रेऽथ किञ्चन ।
ततश्चिरेण तज्ज्योतिः शक्तिरूपमजायत ॥ १०

ततश्च सा त्रिधा भिन्ना बहुरूपा च साऽभवत् ।
तां दृष्ट्वाऽऽनन्दभरितः प्रत्युत्थाय कृताञ्जलिः ॥ ११

कृत्वा प्रदक्षिणं चैव प्रणम्य विनयान्वितः ।
अभिष्टुत्वाऽऽह भगवान् तास्सर्वाः कमलासनः ॥ १२

कासि भद्रे भगवति काश्चैताश्शक्तयस्तव ।
इति पृष्टा भगवता प्रोवाच च महाद्युतिः ॥ १३

अहं तु मूलप्रकृतिरन्या नियतिरूपिणी ।
अन्या महाभूततिथिश्शक्तयो या ममांशजाः ॥ १४

अहं तु सर्वभूतानां शक्तिरूपेण संस्थिता ।
तव वाण्याश्च विष्णोश्च लक्ष्म्याः पशुपतेस्तथा ॥ १५

पार्वत्या हृदयाकाशमध्यगा निवसाम्यहम् ।
व्रजन्तु शरणं यूयं मामन्तश्च बहिःस्थिताम् ॥ १६

इमां भूततिथिं प्राप्य नियत्या समवेतया ।
देवकार्यमिदं ब्रह्मन्(सर्वं) साधयिष्यामि मा शुचः ॥ १७

इमे देवास्सगन्धर्वास्सिद्धाश्च परमर्षयः ।
इमां भूततिथिं प्राप्य नियत्याऽऽराधयन्तु माम् ॥ १८

इति दत्वा वरं तस्मै देवी सान्तरधीयत ।
ततः प्रीतो जगद्धाता विस्मयं परमं गतः ॥ १९

विशेषदिवसान्सर्वान्समाहूय स्वतेजसा।
तुलया तोलयामास सर्वमेकत्र चापरम् ॥ २०

एनां महाभूततिथिं सर्वस्माद्दिवसादपि ।
ददर्श कमलावासो विस्मयं परमं ययौ ॥ २१

पितामहः स्वयं देव्या गिरा नियममास्थितः ।
व्रतं चक्रे महादेव्याः महानवमिसंज्ञितम् ॥ २२

उवाच च सुरान्सर्वान् ब्रह्मा लोकपितामहः ।
आचरध्वं महादेव्या महाभूततिथिव्रतम् ॥ २३

तेन तुष्टा महादेवी सर्वाभीष्टं प्रदास्यति ।
पितामहस्य वचसा सर्वे देवास्सवासवाः ॥ २४

व्रतं चक्रुर्महादेव्या महानवमिसंज्ञितम् ।
ततस्तुष्टा महादेवी देवानां हितकाम्यया ॥ २५

तेजोऽपहारमकरोत् दैत्येन्द्रस्य दुरात्मनः ।
ततस्तु देवी सन्तुष्टा प्राह देवान्सवासवान् ॥ २६

वृणीध्वं यदभीष्टं वो दास्यामि परितोषिताः ।
पप्रच्छुस्ते वरं देवा वयं दैत्येन्द्रनिर्जिताः ॥ २७

न शर्मभागिनो देवि जितोऽस्माभिर्भवत्वतः ।
तथेति तत्प्रतिश्रुत्य वरमन्यच्च सा ददौ ॥ २८

शुक्लप्रतिपदारभ्य नवम्यन्तमिदं व्रतम् ।
यः कुर्यात्तस्य सिद्ध्यन्तु श्रीविद्यापुत्रसंपदः ॥ २९

इति दत्वा वरं तेषां तत्रैवान्तरधीयत ।
अथोवाच सुरान्सर्वान् ब्रह्मा लोकपितामहः ॥ ३०

मया च मम देव्या च कृतमेतद्व्रतं महत् ।
तस्मिन्दिने विशेषेण याः काश्चिच्छक्तयो भवि ॥ ३१

तास्सर्वाः समधिष्ठाप्य पूजां गृह्णाति साञ्जसा ।
तस्मात्संपूजयेदेता याः काश्चिद्वा वराङ्गनाः ॥ ३२

नावमान्या विशेषेण दिने तस्मिन् शुभार्थिभिः ।
ताभ्यस्तस्मिन्दिने दत्तं सद्वासोभूषणादिकम् ॥ ३३

भवेदनन्तफलदं पराशक्तिप्रियङ्करम् ।
महाभूततिथौ ये तु नार्चयन्ति पराम्बिकाम् ॥ ३४

ते तु मूढा दरिद्राश्च भवेयुर्जन्मजन्मनि ।
पूजयध्वं ततो देवाः सा वः श्रेयो विधास्यति ॥ ३५

इत्युक्त्वा सकलान्देवान् ब्रह्मा देव्या सहैव तु ।
स्वानन्यभावसंसिद्ध्यै प्रार्थयन्स्वमनोरथम् ॥ ३६

पश्यतां सर्वदेवानां तत्रैवान्तरधीयत ।
एतत्ते सर्वमाख्यातमाख्यानं सर्वसिद्धिदम् ॥ ३७

धातुश्च त्रिदशानां च संवादं तिथिसम्भवम् ।
यः पठेत् शृणुयाद् वापि विशेषेण महातिथिम् ।
प्राप्नुयात्सकलान्कामानिह लोके परत्र च ॥ ३८

इति सौभाग्यचिन्तामणौ पूर्वखण्डे अष्टत्रिंशः पटलः ॥

## एकोनचत्वारिंशः पटलः ।

### नवरात्र्युत्सवविधिः

अथ वक्ष्यामि देवेशि महाभूततिथौ व्रतम् ।
उत्सवं कारयेत्तत्र ध्वजारोहणपूर्वकम् ॥ १

अथवाऽङ्कुरपूर्वं वा यागमण्डलसंयुतम् ।
कुम्भमण्डलवर्जं वा बलिहोमोत्सवान्वितम् ॥ २

ध्वजारोहणकाले तु वपनं तु समाचरेत् ।
सर्वाङ्गशक्तिसंयुक्तां शुक्लप्रतिपदादितः ॥ ३

पूजयेद्विधिवद्देवीं पूर्ववच्छ्रद्धयान्वितः ।
स्नपनं कल्पयेन्नित्यं विशेषेण महादिने ॥ ४

स्थण्डिलं कल्पयित्वा तु चतुर्द्रोणैः शिवान्वितैः ।
शालिभिस्तण्डुलतिलैस्तदर्धार्धक्रमान्वितैः ॥ ५

वस्त्ररत्नादिसंयुक्तान्नव कुम्भांस्तु विन्यसेत् ।
वशिन्यादिसमायुक्तां दिनेष्वष्टसु पूजयेत् ॥ ६

अपूपैस्सक्तुपिण्डैश्च लाजपिण्डैः गुळान्वितैः ।
पनसैर्नालिकेरैश्च तिलपिण्डैः गुळान्वितैः ॥ ७

समधुशर्करायुक्तैः मुद्गपिण्डैर्मनोहरैः ।
दध्यन्नैः पायसैश्चैवं ससर्पिष्कैश्च सक्तुभिः ॥ ८

एकैकं क्रमशो वृद्ध्या दिनं प्रतिदिनं प्रति ।
पृथगष्टोत्तरशतं जुहुयात्समिधा(र्पिषा) सह ॥ ९

दिनशो वै क्रमैकं वा जुहुयाद्वा क्रमेण तु ।
उत्सवं कारयेत्सायं बलिकर्मपुरस्सरम् ॥ १०

तस्मिन् दिने विशेषेण पूजाहोमोत्सवांश्चरेत् ।
विशेषेण नवम्यां तु श्रीचक्रस्नपनं चरेत् ॥ ११

तद्विधानं च वक्ष्यामि येन श्रीः सर्वतोमुखी ।
उषस्युत्थाय मनसा ध्यात्वा देवीं परात्पराम् ॥ १२

प्रक्षाळ्य पादावाचम्य कुर्यात्सङ्कल्पमुत्तमम् ।
तद्विधानं च वक्ष्यामि येन श्रीः सर्वतोमुखी ॥ १३

स्तोत्रैस्तदीयैस्तत्सूक्तैर्ध्यानैस्तद्भावबन्धनैः ।
तदेकाग्रमना भूत्वा स्वात्मानं तन्मयं स्मरेत् ॥ १४

अथादित्योदयात्पूर्वं कृतपूर्वाह्निकक्रियः ।
देव्यालयं समासाद्य चतुर्यामेषु भक्तितः ॥ १५

पूजयेत्तु परां देवीं समस्तैर्योगिनीगणैः ।
रात्रौ तु नित्यपूजान्ते बलिदानपुरस्सरम् ॥ १६

महामकरमारोप्य देवीं सर्वाङ्गभूषणाम् ।
वीथीचङ्क्रमणं कृत्वा सर्वातोद्यसमन्वितम् ॥ १७

पुरस्तान्मण्टपे स्थाप्य पूजयेन्मूलविद्यया ।
महानिवेदनं कृत्वा हुत्वा दत्वा बलिं तथा ॥ १८

नवचक्रेश्वरीमन्त्रैर्नववारं यथाविधि ।
पूजाहोमबलिं कुर्यात् श्रद्धाभक्तिसमन्वितः ॥ १९

ततस्तद्दिग्बलिं दत्वा सिंहासनसमास्थिताम् ।
वीथीचङ्क्रमणं देव्याः कारयेद्विधिपूर्वकम् ॥ २०

आलयं तु समासाद्य स्थापयित्वा यथा पुरा ।
मूलदेवीं समभ्यर्च्य नवचक्रेश्वरीं यजेत् ॥ २१

पूजाहोमबलिं चैव नववारं यथा पुरा ।
ततस्तु दिग्बलिं दत्वा वृषमारोप्य शाम्भवीम् ॥ २२

वीथीचंक्रमणं कृत्वा प्रत्यूषे सुसमाहितः ।
स्वस्थानमानयित्वा तु स्नपनं परिकल्पयेत् ॥ २३

महानिवेदनं कृत्वा बहुभिर्व्यञ्जनैर्युतम् ।
सन्तोष्य नृत्तगीताद्यैः स्तोत्रैः सूक्तैश्च वैदिकैः ॥ २४

अष्टयामार्चनं प्रोक्तं चतुर्यामार्चनं शृणु ।
सायङ्कालार्चनं कृत्वा व्रतसंकल्पमेव च ॥ २५

महादेव्यर्चनं कृत्वा बलिहोमसमन्वितम् ।
नवचक्रेश्वरीमन्त्रैः पूजाहोमोत्सवांश्चरेत् ॥ २६

रात्रौ जागरणं कृत्वा नृत्तगीतोत्सवादिभिः ।
प्रत्यूषे हि तथा पूजां कुर्याद्भक्तिसमन्वितः ॥ २७

एकोत्सवमिदं प्रोक्तं तथान्यत् शृणु सुन्दरि ।
सायं कृत्वोत्सवं देव्या बलिकर्मपुरस्सरम् ॥ २८

पूजयेद्यामयामेषु बलिहोमसमन्वितम् ।
अष्टयामार्चनं वापि चतुर्यामार्चनं तु वा ॥ २९

**नवमीतिथिनिर्णयः**

दिवा वाऽप्यथवा रात्रौ नवम्यां पूजयेत् शुचिः ।
यथाबलं यथाकालं व्रतं कुर्यादतन्द्रितः ॥ ३०

दिवाधिका तिथिर्ग्राह्या नवमी तु परार्थके ।
निशाधिकाऽत्मयजने प्रशस्ता सर्वकामदा ॥ ३१

समे पूर्वा तिथिर्ग्राह्या मध्याह्नव्यापिनी यदि ।
उभयोरपि मध्याह्नव्यापिन्योर(न्याम)धिका मता ॥ ३२

नवमी दशमी चैव मध्याह्नव्यापिनी यदि ।
तयोस्तु नवमी श्लाघ्या मध्याह्ने पूर्ण(र्व)गामिनी ॥ ३३

दशमी चैव मध्याह्नव्यापिनी वाऽस्तु वा नवा ।
दशम्यां मध्यगे सूर्ये सायं वा तीर्थमाचरेत् ॥ ३४

वृद्धावेकादशाहे तु तीर्थं शंसन्ति केचन ।
नवाहे तीर्थमिच्छन्ति विनान्ये नवमीदिनात् ॥ ३५

इदं व्यामोहतः किन्तु विशेषोऽस्ति परार्थके ।
न वृद्धा क्षयिणी वापि तीर्थं स्याद्दशमेऽहनि ॥ ३६

तीर्थप्रधानमेषा स्यात्परार्थे नवमी तिथिः ।
न्यूनं वाप्यधिकं वापि पुनस्तीर्थं च कल्पयेत् ॥ ३७

तस्माद्दशदिनान्येव नवम्युत्सवमाचरेत् ।
पुनर्वक्ष्ये विशेषोऽस्ति सावधानमनाः शृणु ॥ ३८

आरम्भकाले प्रतिपदात्मार्थे वा परार्थके ।
मध्याह्नव्यापिनी ग्राह्या (प्राप्ते) न निशास्पृक्कदाचन ॥ ३९

तिथीनां सङ्कटे जाते निशास्पृगथवा भवेत् ।
मध्याह्नेऽप्युभयोर्न स्यादमायुक्ता प्रशस्यते ॥ ४०

दशम्यामथ संपूज्य विशेषविधिना गुरुः ।
प्रतिद्रव्यं च जुहुयादष्टाविंशतिसंख्यया ॥ ४१

ततः पूर्णाहुतिं हुत्वा बलिकर्म विधाय च ।
तुरगे वा गजे वापि यानेष्वन्यतमेषु वा ॥ ४२

आरोप्य पूर्वतो गच्छेदुत्तरे वा यथारुचि ।
योजनं वा तदर्धं वा उद्यानं रम्यमास्थितः ॥ ४३

दद्याद्भूतबलिं तत्र व्याघ्रं वा वनमाहिषम् ।
वराहं वाऽन्यसत्वं वा प्रदद्याद्भूततृप्तये ॥ ४४

निर्वर्त्य च नदीं गत्वा ह्रदं वान्यन्महासरः ।
निवेश्य सरसस्तीरे कुर्याच्चूर्णोत्सवं ततः ॥ ४५

स्नपनं कल्पयित्वा तु कृत्वाऽप्यङ्कुशपूजनम् ।
स्नापयित्वा ततो देवीं स्नायादस्त्रसमन्वितः ॥ ४६

फलत्रययुतं हृद्यं दध्यन्नौघं निवेदयेत् ।
धूपदीपादिकं दत्वा ताम्बूलं बहु दापयेत् ॥ ४७

अलङ्कृत्य महादेवीं हयमारोप्य शोभनम् ।
शिबिकायां ततः पश्चात्सर्वातोद्यसमन्वितम् ॥ ४८

अथालयं समासाद्य शान्तिहोमं समाचरेत् ।
कन्याश्च पूजयेन्नित्यं स्त्रियो भर्तृसमन्विताः ॥ ४९

नवचक्रेश्वरीरूपं नवं वा मिथुनं यजेत् ।
एकैकवृद्ध्या दिनशो नवम्यन्तं (म्यां वा) समाचरेत् ॥ ५०

ताभ्यश्च दक्षिणां दद्यात् वस्त्रभूषादिभिस्सह ।
गुरवे दक्षिणां दद्याद्यथाशास्त्रप्रचोदिताम् ॥ ५१

ऋत्विजां मूर्तिपानां च यथापूर्वं यथोचितम् ।
भवेदनन्तफलदं पराशक्तिप्रियङ्करम् ॥ ५२

भूपतिस्तु प्रसन्नात्मा भक्तियुक्तेन चेतसा ।
एवं यः कुरुते भक्त्या सर्वान्कामानवाप्नुयात् ॥ ५३

इति सौभाग्यचिन्तामणौ पूर्वखण्डे एकोनचत्वारिंशः पटलः ॥

## चत्वारिंशः पटलः ।

### विद्याश्रवणोत्सवविधिः

इषे मासि दशम्यां वा तृतीयायां तु फाल्गुने ।
चैत्रे मासि च तस्यां वा विद्याश्रवणमाचरेत् ॥ १

पूर्वेद्युर्वाथ सद्यो वा विधायाङ्कुरकौतुकम् ।
परेद्युर्नित्यपूजान्ते यागशालामथाविशेत् ॥ २

अष्टद्रोणसमायुक्तैः शालिभिस्तण्डुलैस्तिलैः ।
तत्र स्थण्डिलमाकल्प्य वेदिमध्ये मनोहरम् ॥ ३

मध्ये द्वादशकुम्भानां (न्वै) विन्यसेल्लक्षणान्वितम् ।
अभितः कलशान्न्यस्येत्क्रमेण त्रिंश(णैकैक)संख्यया ॥ ४

मध्ये देवीं समावाह्य पूर्ववच्चाङ्गदेवताः ।
अभितो मुनिमुख्यांश्च वक्ष्यमाणांश्च पूजयेत् ॥ ५

अग्निं संस्कृत्य विधिवद्धुनेदष्टोत्तरं शतम् ।
हुनेच्चैवाङ्गशक्तीनां अष्टाविंशतिसंख्यया ॥ ६

द्वादश द्वादश हुनेन्मुनीनां स्वस्वनामतः ।
महानिवेदनं कृत्वा बलिकर्म विधाय च ॥ ७

ग्रामप्रदक्षिणं कृत्वा नृत्तगीतादिभिस्सह ।
व्याख्यानमण्टपं नीत्वा तत्र सिंहासनोपरि ॥ ८

निवेश्याभ्यर्चयेद्देवीं अङ्गशक्तिसमन्विताम् ।
ऋषयः
अत्रिर्भृगुश्च कुत्सश्च वसिष्ठो गौतमोऽङ्गिराः ॥ ९

भरद्वाजः काश्यपश्च कुम्भजश्च पराशरः ।
शुको व्यासश्च कपिलः कौशिको रोमशोष्णपौ ॥ १०

वत्सो मरीचिर्वाल्मीकिः पुलस्त्यः पुलहः क्रतुः ।
मार्कण्डेयाणिमाण्डव्यौ दुर्वासाविखनास्तथा ॥ ११

नारदो याज्ञवल्क्यश्च सनन्दो वामदेवकः ।
स्वनामधेयमन्त्रेण तानावाह्य द्विजातिषु ॥ १२

अभ्यर्च्य गन्धपुष्पाद्यैः विद्याश्रवणमाचरेत् ।
ऋचो यजूंषि सामानि अथर्वाङ्गिरसस्तथा ॥ १३

ब्राह्मणानीतिहासानि कल्पा गाथा पुराणकम् ।
तत्सूक्तानि च पुण्यानि श्रावयेत द्विजोत्तमैः ।। १४

विद्यारम्भश्च ये कुर्युः तत्पुरो द्विजसत्तमाः ।
ते वै समस्तविद्यानां अधिपा ज्ञानशालिनः ।। १५

विद्यादानं च कुर्वन्ति कारयन्त्यपि ये नराः ।
तेऽपि देव्याः (विद्या) प्रसादेन सर्वसौभाग्यशालिनः ।। १६

ये वा विद्येश्वरीं नित्यं यजन्ति प्रणमन्ति वा ।
भक्तिश्रद्धासमायुक्तास्सर्वविद्याधिपास्तु ते ।। १७

मुनिबुद्ध्याऽर्चयेन्नित्यं ब्राह्मणान्वेदपारगान् ।
भोजयेद्भक्ष्यभोज्याद्यैः ताम्बूलाद्यैश्च तोषयेत् ।। १८

प्रातरध्ययनं कुर्यात्पुराणाद्यपराह्णके ।
नृत्तगीतादि सायं च प्रदोषे स्तोत्रमुच्यते ।। १९

एवं द्वादशरात्रं तु पर्वणि स्नपनं चरेत् ।
गुरवे दक्षिणां दद्यात् मूर्तिपेभ्यो यथोचितम् ।। २०

विद्याश्रवणमेवं तु कारयेद्यस्तु भूपतिः ।
सर्वविद्याधिपो भूत्वा सर्वराष्ट्राधिपो भवेत् ।। २१

इति सौभाग्यचिन्तामणौ पूर्वखण्डे चत्वारिंशः पटलः ।।

## एकचत्वारिंशः पटलः

**कृत्तिकादीपविधिः**

अथ वक्ष्यामि देवेशि कृत्तिकादीपनिर्णयम् ।
कृत्तिकायुक्तपूर्णायां (पौर्णम्यां) कृत्तिकायामथापि वा ।। १

प्रदीपारोपणं कुर्याद्द्वावस्तङ्गते सति ।
तस्मिन्मासि च पूर्णायामधिवासपुरस्सरम् ॥ २

कुङ्कुमेन समभ्यर्च्य भूषणैरखिलैरपि ।
रात्रौ प्रदीपकर्माणि कुर्याद्देशिकसत्तमः ॥ ३

चक्रस्नपनमार्गेण देव्यास्स्नपनमाचरेत् ।
अथवा तु चतुष्षष्ट्या द्वात्रिंशैः षोडशेन वा ॥ ४

द्रोणद्वयोत्तरैर्भारैश्शालिभिस्तण्डुलैस्तिलैः ।
कृत्वाग्निकार्यं विधिवद्दत्वा चैवं महाहविः ॥ ५

सायं वीथीः परिक्रम्य बलिकर्मपुरस्सरम् ।
पुरस्तान्मण्टपे स्थाप्य पुण्याहं वाचयेत्ततः ॥ ६

वेणुदण्डमृजुं सौम्यं क्रमुकं ताळमेव च ।
पनसं नाळिकेरं च चम्पकं वार्जुनं तथा ॥ ७

सुरदारुमयं वापि विधिवत्कारयेत्प्रिये ।
द्वादशाग्रयुतं दण्डं नवाग्रं वाथ पञ्च वा ॥ ८

द्वादशाग्रे नवाग्रे वा उभे पङ्क्ती प्रकल्पयेत् ।
पञ्चाग्रे कलिकाकारं त्र्यग्रं तु मध्यमं भवेत् ॥ ९

एकाग्रमथवा कुर्यादिति दण्डविनिर्णयः ।
भूतले निश्चलं बध्वा शिखराग्रोन्नतं शुभम् ॥ १०

सौधान्तं वा जनानां तु यथा स्याद्दृष्टिगोचरम् ।
तद्विधानमथो वक्ष्ये समाहितमनाः शृणु ॥ ११

सायंकाले तु पूर्वेद्युः नित्यपूजावसानके ।
देव्यग्रे नित्यकुण्डे वा समाधाय हुताशनम् ॥ १२

लाजैः घृतसितोपेतैः हुनेदष्टोत्तरं शतम् ।
ततः स्विष्टकृतं हुत्वा पूर्णाहुतिमथाचरेत् ॥ १३

ततः शरावमादाय निश्छिद्रं निश्चलं स्थिरम् ।
नव पञ्च त्रयं वापि गृह्णीयाद्देशिकोत्तमः ॥ १४

आदौ तु वर्तिकाः कृत्वा पूर्णकर्पूरगर्भिणीः ।
वर्तिं घृतं मिमिक्षेति घृतेनाभ्यज्य सर्वतः ॥ १५

समुद्रादिति मन्त्रेण पात्रमध्ये निधापयेत् ।
वर्त्या कर्पूरगर्भिण्या गोघृताभ्यक्तया ततः ॥ १६

उद्दीप्यस्वेति मन्त्रेण योजयेत्तेन वर्तिकाम् ।
वयं नामेति मन्त्रेण घृतधारां प्रदापयेत् ॥ १७

घृतद्रोणेन संपूर्णं मध्यपात्रं मनोहरम् ।
अन्यान्याढकपूर्णानि पात्राणि परिकल्पयेत् ॥ १८

अथवा तु तदर्धेन तदर्धार्धेन वा पुनः ।
घृतयुक्ते शरावे च निदध्यादन्नमन्त्रतः ॥ १९

उद्दीप्यस्वेति मन्त्रेण तस्मादन्यान्प्रदीपयेत् ।
कुर्याच्चत्वारि शृङ्गेति वह्नेरभ्यर्चनं बुधः ॥ २०

तस्य मध्येति मन्त्रेण ध्यायेत परदेवताम् ।
अर्चयेदग्निमन्त्रेण हविरत्त(क्त)परेत्यृचा ॥ २१

धूपदीपादिकं दत्वा गन्धपुष्पादिनाऽर्चयेत् ।
वेश्मप्रदक्षिणं कृत्वा सर्वातोद्यसमन्वितम् ॥ २२

देव्यग्रे स्थण्डिलं कृत्वा शालिभिस्तण्डुलैस्तिलैः ।
तन्मध्ये स्थापयेत्पात्रं ध्रुवन्त इति मन्त्रतः ॥ २३

तस्मादेवान्यदीपांश्च कल्पयेत्तच्च चोद्धरेत् ।
तानादायोत्सवार्चादिसन्निधौ स्थापयेत्क्रमात् ॥ २४

परेद्युर्नित्यपूजान्ते कृतसायाह्निको गुरुः ।
क्रमध्वमिति मन्त्रेण ऊर्ध्वमुद्धृत्य भूतलात् ॥ २५

आलयादथ निर्गत्य सर्वातोद्यसमन्वितम् ।
देवीं विमानमारोप्य सर्वाभरणभूषिताम् ॥ २६

तत्पुरो मूर्तिपैस्सार्धं देशिकस्तु पुरोधसा ।
आस्थानमण्टपे स्थाप्य पुण्याहं वाचयेत्ततः ॥ २७

धूपदीपादिकं दत्वा निवेद्यापूपमेव च ।
निर्गत्य मण्टपात्तस्मान्नृत्ताद्यालोकनं क्षणम् ॥ २८

कृत्वाऽथ दीपानादाय दासैरालयसंश्रितैः ।
प्रतिष्ठासीति मन्त्रेण स्थापयेद्दण्डकोपरि ॥ २९

यत्ते अग्नेत्युपस्थानं कुर्याच्च वरवर्णिनि ।
शान्तिसूक्तजपं कुर्यात् राजराष्ट्राभिवृद्धये ॥ ३०

ग्रामप्रदक्षिणं कुर्यात् सर्वातोद्यसमन्वितम् ।
स्वस्थानं पूर्ववन्नीत्वा पूजयेत्परमेश्वरीम् ॥ ३१

सक्तुपिण्डांस्तथा लाजानपूपान् घृतपाचितान् ।
माषमुद्गविकारांश्च तथा क्षीरसमुद्भवान् ॥ ३२

पायसं मधुरोपेतं दधिपिण्डान्सशर्करान् ।
बहूपदंशसंयुक्तं प्रभूतं च हविर्ददेत् ॥ ३३

ताम्बूलाद्युपचारांश्च दत्वा नीराजनादिकम् ।
वासांसि च महार्हाणि भूषणानि महान्ति च ॥ ३४

अलङ्कारांणि सर्वाणि यानि स्युस्तानि दापयेत् ।
सप्ताहमुत्सवं चैतत्त्रिदिनं वा दिनं तु वा ॥ ३५

भूपतिः कारयेदेवं भक्तिनम्रस्त्वकल्मषः ।
राष्ट्राभिवृद्धिं दीर्घायुस्सर्वान्कामानवाप्नुयात् ॥ ३६

इति सौभाग्यचिन्तामणौ पूर्वखण्डे एकचत्वारिंशः पटलः ॥

## द्विचत्वारिंशः पटलः

### महोत्सवविधिः

अथ वक्ष्यामि देवेशि महोत्सवविधिं परम् ।
यद्विधानान्महेन्द्राद्याः प्राप्नुवन्ति महोदयम् ॥ १

मार्गशीर्षेऽथवा पुष्ये माघे वा फाल्गुनेऽपि वा
चैत्रादिफाल्गुनान्तेषु मासेष्वेव(षु) यथारुचि ॥ २

भिद्यते नवधा सोऽपि देशकालार्थतन्त्रतः ।
जायते सापि बहुधा(शः) तत्तत्कालानुसारतः ॥ ३

एकत्रिपञ्चसप्ताहैर्नवपञ्चदशाहतः ।
एकद्वित्रिचतुःपञ्चषट्सप्ताहैर्नवा(नवसप्तदशा)हतः ॥ ४

एकद्वित्रिचतुःपञ्चषट्सप्तदशभिस्तु वा ।
यथैको रविराभाति बहुधाऽखिलभूमिषु ॥ ५

तथा लोकोपकाराय बहुरूपा पराम्बिका ।
उपकाराय लोकानां एकविंशतिधा स्थिता ॥ ६

मूलषट्कं चण्डिकाया नित्यापञ्चदशक्रमात् ।
सकलो निष्कलश्चेति उत्सवो द्विविधो मतः ॥ ७

बहुबेरैकबेराभ्यां तावुभौ परिकीर्तितौ ।
सचूर्णोत्सवमेकाहं सांकुरं त्रिदिनं भवेत् ॥ ८

पञ्चसप्ताहतो यागाः अत ऊर्ध्वं ध्वजान्वितम् ।
आरभ्य त्रिदिनाद्देवि सर्वं तीर्थान्तमीरितम् ॥ ९

यत्र तीर्थं समुद्दिष्टं तत्र मौनं बलिर्भवेत् ।
अर्वाक्सप्तदिनाद्देवि सचूर्णाङ्कुरकौतुकम् ॥ १०

अन्यञ्चेरिध्वजारोहतालमौनबलीयुतम् ।
आदौ तु चण्डिकायागमुभयत्रापि लक्ष्यते ॥ ११

नित्यानां रूपमन्त्राणि तत्र तत्र तु वक्ष्यते ।
उत्सवस्त्रिषु कार्येषु जया(बला)रोग्याभिवृद्धिषु(द्धये)॥ १२

अस्त्रान्नबीजसंयुक्ता मूर्तिदा स्यात्सपादुका ।
पञ्चाङ्गमुत्सवं श्रेष्ठं चतुरङ्गं तु मध्यमम् ॥ १३

द्वित्र्यङ्गमधमं प्रोक्तं एकाङ्गमधमाधमम् ।
पञ्चाङ्गमुत्सवं श्रेष्ठं नित्यानित्येषु सर्वशः ॥ १४

शिवशक्तिसमायोगमङ्कुशाभ्यर्चनं तथा ।
तद्धारणं बलिविधिरुक्तं नित्योत्सवे पुरा ॥ १५

नित्ये नैमित्तिके चैव सामान्योऽयं बलिक्रमः ।
पूर्वेद्युर्वा ध्वजारोहाच्चण्डिकायागमाचरेत् ॥ १६

शङ्खचक्रवरा(गदा)भीतीर्दधाना सोमभूषणा ।
सर्वाभरणसंयुक्ता चण्डिका परिकीर्तिता ॥ १७

विशेषपूजां कृत्वा तु दुर्गाष्टाक्षरमन्त्रतः ।
भूषणाद्यैरलङ्कृत्य कृत्वा कौतुकबन्धनम् ॥ १८

मृत्संग्रहं ततः कुर्यात्पूर्वेद्युः प्रातरेव हि ।
अथ प्रक्षाल्य चरणावाचान्तः शुद्धमानसः(चेतनः) ॥१९

कृतसायन्तनीपूजो रात्रौ कुर्याद्ध्वजाङ्कुरम् ।
बध्वा तु कौतुकं पश्चादधिवासं समाचरेत् ॥ २०

अन्येद्युः प्रातरुत्थाय स्नात्वा देशिकसत्तमः ।
नित्यपूजां पुरः कृत्वा हुत्वा दत्वा बलिं ततः ॥ २१

अलङ्कृत्य महादेवीमानीयास्थानमण्टपम् ।
देशिकस्तन्त्रविद्धीमान् भेरीताडनमाचरेत् ॥ २२

भेरीताडनम्

पटमप्यस्त्रराजं च देव्यग्रे विनिवेय च ।
तत्र स्थण्डिलमाकल्प्य द्रोणसंख्यैश्च शालिभिः ॥ २३

तन्मध्ये स्थापयेद्भेरीं ताळवीणादिकं क्रमात् ।
भेरीमन्त्रेण संप्रोक्ष्य ताडनीमपि देशिकः ॥ २४

पुण्याहं वाचयित्वा तु गन्धपुष्पादिनाऽर्चयेत् ।
मध्ये ब्रह्मोत्तरे विष्णुर्दक्षे शम्भुः प्रतिष्ठितः ॥ २५

प्राप्त(न्त)योः कमलागौर्यौ रज्जौ नागाधिपस्ततः ।
नादब्रह्ममयी देवि वाग्देवी मध्यसंस्थिता ॥ २६

तदन्तरेषु गन्धर्वाः पञ्च भूतानि चोत्तरे ।
ताडन्यामस्त्रराजं च यजेद्विधिवदम्बिके ॥ २७

दशदिक्षु मुखं कृत्वा देवतासंमुखोऽपि वा ।
ब्रह्मविष्णुमहेशाद्यैः तत्तच्छक्तिसमन्वितैः ॥ २८

दिक्पालावाहनं कुर्यात्सवाहनपरिच्छदम् ।
मध्ये तु ब्रह्मजज्ञानं ब्रह्माणं भारतीयुतम् ॥ २९

दक्षे गौरीसखं रुद्रं यो रुद्र इति मन्त्रतः ।
वामे लक्ष्मीसखं विष्णुं इदं विष्णुर्विचेत्यृचा ॥ ३०

इन्द्राणीयुतमिन्द्रं तु यत इन्द्रेति पूर्वतः ।
अग्निं दूतमथाग्नेये योस्य कौष्ठ्येति दक्षिणे ॥ ३१

यत्ते देवीति नैर्ऋत्यां इमं मेति च वारुणे ।
कामः संमृद्ध्यतां वायौ राजाधीत्युत्तरे यजेत् ॥ ३२

ईशान्ये चेशमन्त्रेण नमस्ते रुद्र(नमोऽस्त्विति) वा भवेत्।
समावाह्य स्वस्वनाम्ना तत्तत्स्तुतिभिरन्वितम्॥ ३३

तत्तद्गीतसमायुक्तं तत्तन्नृत्तसमन्वितम् ।
तत्तत्तालसमायुक्तमाह्वयेद्देवतागणान् ॥ ३४

देशिकस्तु त्रिवारं च भेरीं सन्ताड्य तन्त्रवित् ।
उद्धृत्य वाद्यकारस्तु तां भेरीं ताडयेत्क्रमात् ॥ ३५

देव्या सह पटं नीत्वा कृत्वा ग्रामप्रदक्षिणम् ।
प्रविश्य चालयं पश्चात् ध्वजदण्डसमीपतः॥ ३६

तत्र देव्या सह स्थित्वा ध्वजारोहणमाचरेत् ।
शिल्पिहस्तात्समादाय पूर्वरात्र्यधिवासितम् ॥ ३७

पुण्याहसलिलैः पूतं कृतकौतुकबन्धनम् ।
देव्यग्रे पटमादाय स्वस्तिसूक्तमुदीरयन् ॥ ३८

कुम्भाम्भसा ततः कुर्यात्प्रोक्षणं ध्वजमन्त्रतः ।
अभ्यर्च्य गन्धपुष्पाद्यैर्धूपदीपौ प्रदापयेत् (ददेत्ततः) ॥ ३९

क्षुद्रघण्टासमायुक्तं क्षुद्रवाहनसंयुतम् ।
विश्वेत्तातेति मन्त्रेण पटं रज्ज्वा तु बन्धयेत् ॥ ४०

सर्वातोद्यसमायुक्तं क्रमध्वमिति मन्त्रतः ।
सुमुहूर्ते सुलग्ने च दण्डाग्रे योजयेत्ततः ॥ ४१

ततो मध्यादि कुम्भैस्तु दण्डमूलेऽभिषेचयेत् ।
नैवेद्यं परिकल्प्याथ दिक्पालेभ्यो बलिं ददेत् ॥ ४२

नालिकेरसहस्रं तु नैवेद्यं कारयेन्नृपः ।
तदर्धार्धेन वा देवि सर्वाभीष्टफलाप्तये ॥ ४३

या तन्निवेदितं भुक्त्वा वन्ध्या पुत्रवती भवेत् ।
ग्रहभूतपिशाचेभ्यो मुच्यते तस्य सेवनात् ॥ ४४

आस्थानमण्टपे देवीं निधाय गुरुसत्तमः ।
मूलदेव्यादि देवीनाम(स्तु अ)भिषिञ्चेद्यथाविधि ॥ ४५

देशिको यागशालायां उत्सवाङ्कुरमाचरेत् ।
विशेषपूजां निर्वर्त्य कृत्वा कौतुकबन्धनम् ॥ ४६

अनुज्ञया ततो देव्या अस्त्रराजस्य चात्मनः ।
स्नापितस्यापि बेरस्य धारयेद्देशिकोत्तमः ॥ ४७

ततो देवीमलङ्कृत्य वृषमारोप्य शोभनम् ।
ग्रामप्रदक्षिणं कुर्यात्सर्वातोद्यसमन्वितम् ॥ ४८

यागशालार्चनं कुर्याद्देशिकस्तु समाहितः ।
गणेशं वटुकं दुर्गां क्षेत्रेशं द्वारभूमिषु ॥ ४९

अन्तर्ब्रह्मादि शेषान्तान् लोकपालान्समर्चयेत् ।
भास्करं केशवं चैव पूर्वपश्चिमयोस्तथा ॥ ५०

कामं वसन्तं ब्रह्माणं हरं च सह शक्तिभिः ।
संपूजयेन्महादिक्षु परितोवेदि भामिनि ॥ ५१

निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिर्विदिक्षु च ।
तोरणानि चतुर्दिक्षु गन्धपुष्पादिनार्चयेत् ॥ ५२

पूर्वादिशान्तिभूताख्यबलारोग्याण्यनुक्रमात् ।
तत्तद्दिक्षु च दिक्पालान्सायुधान्सपरिच्छदान् ॥ ५३

अर्चयेद्विघ्नशान्त्यर्थं तदस्त्राणि यथाक्रमम् ।
अथ मध्यपताकायामघोरास्त्रं प्रपूजयेत् ॥ ५४

कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ।
शङ्कुकर्णस्सर्वनेत्रस्सुमुखस्सुप्रतिष्ठितः ॥ ५५

इति केतुषु सम्पूज्य स्वस्वमन्त्रेण देशिकः ।
स्वनामभिश्च वा देवि कुम्भस्थापनमाचरेत् ॥ ५६

नवयोन्यात्मके चक्रे वेदिमध्ये यवोपरि ।
आस्तीर्यात्र महादेवि भारसंख्यैश्च शालिभिः ॥ ५७

तण्डुलेन तदर्धेन तदर्धेन तिलेन च ।
कुम्भद्वादशकं न्यस्येद्यथावल्लक्षणान्वितम् ॥ ५८

मध्यकुम्भे तु चिच्छक्तिं कामेश्यादि त्रिकोणके ।
परितस्तु वशिन्यादीरर्चयेद्देशिकोत्तमः ॥ ५९

तदग्रे मण्डलं कृत्वा तन्मध्ये तु समर्चयेत् ।
ततोऽग्निं समुपाधाय पूर्वोक्तेनैव वर्त्मना ॥ ६०

ब्रह्मवृक्षजपुष्पैर्वा तत्समिद्भिः घृताप्लुतैः ।
पायसेन तथाज्येन पृथगष्टोत्तरं शतम् ॥ ६१

हुनेच्चैवाङ्गशक्तीनामष्टाविंशतिसंख्यया ।
पानसं कादळं केरं कापित्थोर्वारुके तथा ॥ ६२

जाम्बवाम्रे च मृद्वीकं नवमं मधुरीफलम् ।
तथैव बदरी धात्री खण्डं वा भूरिसारजम् ।। ६३

प्रधानादिषु कुण्डेषु होमं कुर्यादनुक्रमात् ।
कृसरास्सक्तवो लाजा मुद्गास्तुवरिकास्तथा ।। ६४

माषा मसूरश्श्यामाका गोधूमाश्शालितण्डुलाः ।
मधूककुसुमान्येतानार्द्रान् पक्वांस्तु वा हुनेत् ।। ६५

तण्डुला(ल्या)स्तैलमाषीयमुद्गगोधूमसम्भवाः ।
मधूककुसुमस्तोमाः क्षीराज्यदधिपिण्डिताः ।। ६६

रम्भापनसकेराणां फलसारास्तु सुन्दरि (रसोद्धटाः) ।
भक्ष्याः क्रमेण होतव्याश्शर्कराज्यमधूत्कटाः ।। ६७

एवं द्वादशकुण्डेषु द्वादशैतास्तथा हुनेत् ।
नवाग्नावादिमध्येषु तिस्रोऽन्यास्तु विदिक्षु च ।। ६८

आद्यं विनाभितो देवि वशिन्याद्यष्टकं हुनेत् ।
मूलेन वा प्रतिद्रव्यं एकाग्नौ जुहुयादपि ।। ६९

समिदाज्यचरून्वापि मूलमन्त्रेण वा हुनेत् ।
ततः स्विष्टकृतं हुत्वा पूर्णाहुत्यन्तमाचरेत् ।। ७०

ततो गुरुरुपस्थाय विघ्नादिभ्यो बलिं ददेत् ।
अपूपं पृथुकं लाजमुद्गमाषाढकादिकान् ।। ७१

नाळिकेरफलाद्यैस्तु दद्याद्विघ्नेशतृप्तये ।
श्वेतपुष्पोपहारैश्च श्वेतगन्धाक्षतादिभिः ।। ७२

फलैश्शर्करयोपेतं पायसान्नं शिवप्रियम् ।
दध्ना शर्करयोपेतं नाळिकेरोदकं तथा ।। ७३

सापूपरक्तपुष्पाढ्यं शक्तीनां स्याद्गुडोदनम् ।
रजनीचूर्णसंयुक्तं सलाजदधिसक्तुकम् ॥ ७४

रक्तपुष्पोपहाराढ्यं रक्तान्नं भूततृप्तिदम् ।
सुगन्धचन्दनं पुष्पं सापूपं पायसोदनम् ॥ ७५

वस्त्रताम्बूलसंयुक्तं गन्धर्वाणां हि तृप्तये ।
नाळिकेरपयस्सक्तुशालिपिष्टविमिश्रितम् ॥ ७६

चरुणा सह दातव्यमुरगाणां हि तृप्तये ।
कुशोदकसमायुक्तं श्वेतस्रगनुलेपनम् ॥ ७७

व्यञ्जनैर्बहुभिर्युक्तं घृतान्नं ब्रह्मणः प्रियम् ।
नानावर्णप्रसूनाढ्यं बहुभिर्व्यञ्जनैर्युतम् ॥ ७८

नानाविधरसोपेतं दध्यन्नं विष्णवे ददेत् ।
रुद्रस्य पूर्ववद्दद्याच्छक्तीनामपि पूर्ववत् ॥ ७९

बल्यर्थं स्थण्डिलं कृत्वा दिक्षु सर्वासु देशिकः ।
एका वा दारुफलका बल्यर्थं तु प्रशस्यते ॥ ८०

इन्द्रादीन् कुमुदादींश्च तत्तद्बल्यधिपांस्तथा ।
अर्चयित्वा बलिं दद्यात् हस्तगं मुष्टिगं तु वा ॥ ८१

पश्चिमाद्यं तु पूर्वं स्याद्वायव्याद्यं हुताशने ।
याम्ये स्यादुदगाद्यं तु शिवाद्यमपि नैर्ऋते ॥ ८२

आलयाग्रेऽथवा देवि विघ्नादिभ्यो बलिं दिशेत् ।
सायं प्रातर्बलिं दद्याद्बहिरन्तश्च नित्यशः ॥ ८३

तत्तत्कालोचितं यानमारोप्य परमेश्वरीम् ।
प्रातर्वीथीविहारं च सायमुद्यानकेषु च ॥ ८४

**वाहनविशेषाः**

वीथीविहारमथवा कुर्यात् कालद्वयेऽपि च ।
जीववाहेषु सर्वेषु वृषहस्त्यश्वकादिषु ॥ ८५

तथा ग्राम्येषु वाहेषु देव्यास्संचारणं वरम् ।
तान्येव भावजीवानि मत्समानि(मध्यमानि) वरानने ॥ ८६

निर्जीववाहनं देवि विमानस्यन्दनादिकम् ।
जीवेन वीथीसञ्चारं भावेनोद्यानचारणम् ॥ ८७

गच्छेन्निर्जीवितैर्दूरं मृगयात्रादिषु प्रिये ।
प्रथमे वृषवाहः स्यात्प्रातस्सायं मृगस्तथा ॥ ८८

द्वितीये मकरः प्रोक्तः प्रातस्सायं शशिप्रभा ।
तृतीये केसरी प्रातः सायं वारणपुङ्गवः ॥ ८९

रविप्रभा चतुर्थेऽह्नि प्रातस्सायं मरालिका ।
पञ्चमे शिबिका प्रातः सायं शेषस्तु वाहकः ॥ ९०

षष्ठे गन्धोत्सवं कुर्यात् सायाह्ने सालभञ्जिका ।
सप्तमे रथवाहः स्यात्सायंकालानुसारतः ॥ ९१

अष्टमे भद्रपीठं स्यात् प्रातस्सायं हयोत्तमः ।
नवमे चतुरन्तं स्याद्यानं रात्रौ विमानकम् ॥ ९२

दशमे शरभः प्रातः सायं पुष्परथस्स्मृतः ।
एवमेतत्प्रकारेण वाहनैर्धारयेच्छुभैः ॥ ९३

यथाश्चर्यकरं लोके यथाशोभोपशोभितम् ।
यथा सुरक्षितं बिम्बं तथैवोत्सवचारणम् ॥ ९४

तत्तद्वाहानुगुण्येन रूपमस्याः प्रकल्पयेत् ।
चन्द्रचन्दनकस्तूरीकुङ्कुमाद्यैर्विलेपयेत् ॥ ९५

मूर्तिपैः खेटके देव्या देशिकैरम्बिकामयैः ।
चामरव्यजनाद्यैस्तु शुश्रूषां कारयेन्नृपः ॥ ९६

सततं चैव नारीभिः शुश्रूषामपि कारयेत् ।
चामरव्यजनच्छत्रवीणावेण्वादिसंयुतम् ॥ ९७

ब्राह्मणैश्च महाभागैः कर्तव्या भक्तिसंयुतैः ।
देव्याः पुण्यचरित्रादि तत्कीर्तिस्तुतिगीतयः ॥ ९८

येऽनुगच्छन्ति तां देवीं मनुष्या भक्तिसंयुताः ।
निर्धूताखिलपाप्मानः सर्वान्कामानवाप्नुयुः ॥ ९९
(तद्विदिक्षु स्थिता ये च मनुष्याः सर्ववर्णजाः ।)

ध्वजारोहं समारभ्य ह्युत्सवं कुर्युरन्वहम् ।
महाशक्त्युत्सवे देवि न कुर्यादुत्सवान्तरम् ॥ १००

सर्वदेवाधिका देवी सर्वदेवमयी च सा ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ १०१

तेषां पत्न्यश्च सर्वास्ताः महादेव्युत्सवोत्सुकाः ।
स्वरूपमविनाभूतं प्राप्य तुष्टा महोत्सवे ॥ १०२

तस्मात्सर्वोच्छ्रिता देवी सर्वतुङ्गासनं गता ।
तदधस्सर्वदेवानां आसनं परिचक्षते ॥ १०३

स्वस्ववाहनमेतस्यै कल्पयित्वाऽतिभक्तितः ।
अनुगच्छन्त्यदृश्यास्ते पादचारेण सेवितुम् ॥ १०४

अनभिज्ञाय तद्रूपं भेदभावं प्रकुर्वते ।
न तेषां नरकक्लेशान्निस्तारो देवि जायते ॥ १०५

ये नराः पापकर्माणो भक्तिश्रद्धाविवर्जिताः ।
न सेवन्ते महादेवीं नारका जन्मजन्मसु ॥ १०६

तस्माच्छक्त्युत्सवे देवि न कार्यान्तरमाश्रिताः ।
सेवां कुर्वन्ति ये देवीं कृतार्था जन्मजन्मसु ॥ १०७

ततो द्वारगतां देवीं नीराजनपुरस्सरम् ।
प्रवेश्य स्थापयित्वैवं पूजां कुर्याद्दिने दिने ॥ १०८

प्रथमे देशिकानां च मूर्तिपानां द्वितीयके ।
तृतीये पूजनं वेदवादिनां शास्त्रवादिनाम् ॥ १०९

चतुर्थे गणितज्ञानां परिचारगणस्य च ।
पञ्चमे भरतज्ञानां गायकानां च सत्कृतिः ॥ ११०

षष्ठे तु वन्दिनां दासदासीनामपि सप्तमे ।
तद्ग्रामनगरस्थानां अष्टमे परिपूजनम् ॥ १११

नवमे कर्मकाराणां मल्लानामपि दर्शनम् ।
दशमे धनधान्यानां भूषणानां च चिन्तनम् ॥ ११२

वैद्यानां मन्त्रवादीनां नर्तकानां च शिल्पिनाम् ।
मण्डलीनां पाच(पता)कानां दीपकानां च पूजनम् ॥ ११३

दरिद्रा रोगिणो दुष्टाः पङ्ग्वन्धबधिरादयः ।
पूजनीया यथार्हन्तु यथाविभवविस्तरम् ॥ ११४

भोजयेत्प्रमदास्सर्वाः विशेषात्पतिसंयुताः ।
ताभ्यश्च दक्षिणां दद्याद्गन्धपुष्पादिसंयुतम् ॥ ११५

नारीद्वादशकं वापि नव पञ्चैकमेव वा ।
मुद्गान्नमाढकान्नं च माषान्नं कृसरान्नकम् ॥ ११६

कुलुत्थान्नं च शाकान्नं गुडान्नं पायसं तथा ।
दध्यन्नमाम्लयुक्तान्नं शुद्धान्नमपि च क्रमात् ॥ ११७

उत्सवे द्विगुणं वापि त्रिगुणं वा चतुर्गुणम् ।
अङ्गशक्तियुतं कुर्यादुत्सवं नैव केवलम् ॥ ११८

द्वे त्रयं च प्रकुर्वीत द्विगुणे त्रिगुणे ध्वजम् ।
चतुर्द्वारयुतं चेत्तु क्रमादेषु प्रकल्पयेत् ॥ ११९

नित्यमभ्यर्चनं कुर्यात् ध्वजेषु तु पृथक्पृथक् ।
ग(न्धं)तैलं च चूर्णं च फलं शुद्धजलं तथा ॥ १२०

द्विचतुःषट्सु चाष्टाहे विहरेन्नवमेऽह्नि च ।
सद्योऽधिवासनं तेषां देवि दद्यात्तथैव तु ॥ १२१

**तीर्थोत्सवः**

उत्सवं कारयेदेवमङ्कुरध्वजपूर्वकम् ।
तीर्थं कुर्यात्तु मासर्क्षे पर्वण्यपि विचक्षणः ॥ १२२

द्वितीयांशे तृतीये वा तीर्थकर्म समाचरेत् ।
नक्षत्रस्य चतुर्थांशे नाचरेत्तीर्थमुत्तमम् ॥ १२३

तीर्थर्क्षद्वितये प्राप्ते तृतीये तीर्थमाचरेत् ।
संक्रमे राहुविद्धे च पूर्वस्मिन्नेव कारयेत् ॥ १२४

यत्र सायं भवेदृक्षं तस्मिन् तीर्थं समाचरेत् ।
समे निशायुते कुर्यादथवा मध्यगे रवौ ॥ १२५

सायं कुर्वीत देवानां बलिपूजाविसर्जनम् ।
सायङ्कालार्चनात्पूर्वं कुर्यात्कुम्भाभिषेचनम् ॥ १२६

**राष्ट्रक्षोभादौ करणीयम्**

उत्सवेषु च सर्वेषु नित्येष्वन्येषु कर्मसु ।
उत्सवस्य च मध्ये तु राष्ट्रक्षोभो भवेद्यदि ॥ १२७

चतुस्स्थानगतां देवीं मन्त्रेणावाह्य कौतुके ।
गत्वाऽनपायं राष्ट्रं तु शान्तिहोमं समाचरेत् ॥ १२८

शेषोत्सवं दिनात्कुर्यात् (कुर्याद्विशेषोत्सवेषु) ध्वजतालविहीनकम् ।
संकटे दीक्षितस्यापि ज्ञातिसू(सु)तमृतादिभिः ॥ १२९

तीर्थान्तमाचरेत्कर्म ततस्सूतकमृच्छति ।
ज्वरादिव्याधिपीडासु कुर्यादन्यस्तदाज्ञया ॥ १३०

तद्बद्धकौतुकं वापि गृहीत्वाऽन्यस्य बन्धयेत् ।
तेनैव शेषकर्माणि कारयेच्छान्तिपूर्वकम् ॥ १३१

दीक्षाभिषेकपूतात्मा देशिकस्तु मृतो यदि ।
कुम्भमेकं प्रतिष्ठाप्य गन्धपुष्पादिनाऽर्चयेत् ॥ १३२

तज्जलैः स्नापयित्वादौ देवीसूक्तेन मूलतः ।
गृह्योक्तेन विधानेन पश्चात्संकार इष्यते ॥ १३३

अथ तीर्थदिनात्पूर्वं निशि कृत्वाङ्कुरार्पणम् ।
पूर्वकौतुकमुत्सृज्य कृत्वा कौतुकबन्धनम् ॥ १३४

प्राभातिकोत्सवं कुर्यात् तीर्थेऽह्नि दशमे ततः ।
विधाय द्वारपालादियजनं बलिकर्म च ॥ १३५

पश्चाङ्गशक्तिसंयुक्तां सर्वातोद्यसमन्विताम् ।
सर्वैर्भक्तैस्समायुक्तां नयेत्तीर्थं मनोहरम् ॥ १३६

मण्टपं वा प्रपां वापि कल्पयित्वा विचक्षणः ।
स्थापयित्वा महादेवीं पुण्याहं वाचयेत्ततः ॥ १३७

पूर्वोक्तेन विधानेन कृत्वा चूर्णोत्सवं ततः ।
स्थण्डिलं पुरतः कृत्वा नव कुम्भांस्तु विन्यसेत् ॥ १३८

मध्ये तु तीर्थराजानं वरुणं सरितां पतिम् ।
गङ्गां च यमुनां चैव गोदावरिसरस्वतीम् ॥ १३९

नर्मदां सिन्धुकावेरीं तथैव भवनाशिनीम् ।
आवाह्य गन्धपुष्पाद्यैरर्चयेत्तीर्थदेवताः ॥ १४०

नववस्त्रेण संवेष्ट्य कुशकूर्चादिसंयुतम् ।
अन्यच्च स्थण्डिलं कृत्वा चतुष्पत्राब्जसंयुतम् ॥ १४१

तन्मध्ये स्थापयेत्तैलं सुगन्धि सुमनोहरम् ।
रजनीशालिपिष्टं च धात्रीगन्धादिकं तथा ॥ १४२

निवृत्त्यादिकलाभिश्च पूर्वादिक्रमशो यजेत् ।
पिधाय नववस्त्रेण लम्बकूर्चसमन्वितम् ॥ १४३

अग्निं संस्कृत्य विधिवत्कुण्डे वा स्थण्डिलेऽपि वा ।
चतुर्थ्यन्तस्वस्वनाम्ना स्वाहान्तेन पृथक्पृथक् ॥ १४४

आज्येनाष्टशतं कुर्यात्(हुत्वा) अष्टाविंशतिमेव वा ।
ततः स्विष्टकृतं कुर्यात्प्रायश्चित्ताहुतीर्हुनेत् ॥ १४५

महानिवेदनं कृत्वा कुम्भेषु च पृथक्पृथक् ।
ततस्तैलमुपादाय देव्यै दत्वा तु मूलतः ॥ १४६

रजनीशालिपिष्टं च धात्रीगन्धोदकं तथा ।
क्रमेण दत्वा देव्यै तु भक्तेभ्यस्तानि दापयेत् ॥ १४७

अभ्यज्यालेपनं कुर्युस्ते सर्वे तदनुज्ञया ।
ततो मध्यादिकुम्भोदैरभिषेकं समाचरेत् ॥ १४८

अभिषिक्तोदकेनैव भावितेन सरोवरे ।
यागबेरास्त्रसंयुक्तः केवलास्त्रयुतोऽपि वा ॥ १४९

नाभिदघ्ने जले चैव क्षिप्त्वा तन्मुद्रि(दि)ता भुवि ।
पूजयित्वा तु विधिवद्बिम्बे चास्त्रे च वैदिकः ॥ १५०

ततो वरुणमभ्यर्च्य वारुणेनैव सूक्ततः ।
बिम्बास्त्रसंयुतो देवि स्नायादस्त्रेण वा युतः ॥ १५१

स्नानं कुर्वन्ति मनुजास्तत्काले ये तु भक्तितः ।
ते निर्धूताखिलाघौघाः सर्वान्कामानवाप्नुयुः ॥ १५२

त्रिपक्षेऽप्युत्सवं स्नानं पञ्चाङ्गे कौतुकं तथा ।
सर्वत्र साङ्कुशं प्रोक्तं पर्वात्तिश्च निगद्यते ॥ १५३

प्रवेश्य चालयं देवीं कारयेन्नित्यपूजनम् ।
सायं वीथीः परिक्रम्य प्रवेश्य पुनरालयम् ॥ १५४

मण्टपं पूर्ववद्गत्वा होमकर्म विधाय च ।
मूलबिम्बे तु कुम्भानामभिषेकं समाचरेत् ॥ १५५

ततो देवीमलङ्कृत्य निवेद्य परमं हविः ।
उद्वास्य देवतास्सर्वा यागमण्टपसंस्थिताः ॥ १५६

आस्थानमण्टपं नीत्वा ध्वजं पूर्ववदर्चयेत् ।
पूर्ववच्चैव दिक्पालान् संपूज्य स्वस्वमन्त्रतः ॥ १५७

अथ मौनव्रतं धृत्वा सन्धिदेवान्विसर्ज्य च ।
स्तुत्वोद्वास्य च देवेशि प्रेषयेद्देवतागणान् ॥ १५८

अवरोप्य ध्वजं दण्डाद्विसृजेल्लौकिकान्जनान् ।
स्वस्थानं पूर्ववन्नीत्वा विसृज्य करकौतुकम् ॥ १५९

ध्वजावरोहरात्रौ वा निशायां वा परेऽहनि ।
नित्यपूजाक्रमेणैव पुष्पयागं समाचरेत् ॥ १६०

पूजयेद्दशवारं तु देवीमिष्टार्थसिद्धये ।
पुष्पैर्नानाविधैर्गन्धैः नैवेद्यैश्च पृथक्पृथक्(ग्विधैः) ।। १६१

धूपैर्दीपैश्च ताम्बूलैश्छत्रचामरकादिभिः ।
वीणावेणुमृदङ्गादिविविधातोद्यवादनैः ।। १६२

नृत्तगीतादिभिश्चैव तोषयेत्परमेश्वरीम् ।
मुद्गयूषादिधान्यैश्च नानाविधरसायनैः ।। १६३

गुरुं सन्तोषयेद्भूयस्सद्वासोभूषणादिभिः ।
दक्षिणां गुरवे दद्याद्धिरण्यं दशनिष्ककम् ।। १६४

ऋत्विजामर्धमात्रं तु मूर्तिपानां तु पादतः ।
तदर्धं परिचाराणां यथोचितमुपाचरेत् ।। १६५

भूपतिस्तु प्रसन्नात्मा भक्तियुक्तेन चेतसा ।
देशिकं च नमस्कृत्य देवीरूपं प्रपूज्य च ।। १६६

यानमारोप्य च गुरुं (पयित्वैनं) सर्वातोद्यसमन्वितम् ।
प्रवेशयित्वा तद्गेहं प्रविशेत्स्वगृहं ततः ।। १६७

एवं कृत्वा तु राजेन्द्रस्सर्वान्कामानवाप्नुयात् ।
महोत्सवविधिः प्रोक्तः सर्वशक्तिप्रियङ्करः ।। १६८

सर्वदेवप्रियकरं त्रिमूर्तीनां विशेषतः।
सर्वदुःखहरं पुंसां सर्वसौभाग्यदायकम् ।। १६९

महापापक्षयकरं महासौभाग्यदायकम् ।
यः कुर्यात्कारयेद्वापि दृष्ट्वा वा दर्शयेत वा ।
श्रावयेच्छृणुयाद्वापि सर्वान्कामानवाप्नुयात् ।। १७०

इति सौभाग्यचिन्तामणौ पूर्वखण्डे द्विचत्वारिंशः पटलः ।।

## त्रिचत्वारिंशः पटलः

**प्रायश्चित्तविधिः**

अथ वक्ष्यामि देवेशि प्रायश्चित्तविधिं परम् ।
तद्रात्रौ वा परेद्युर्वा देशिकस्तु समाचरेत् ॥ १

पूर्ववत्स्थण्डिलं कृत्वा वेदिमध्ये यवैश्शुभैः ।
कुम्भद्वादशकं न्यस्य चतुरोऽप्येकमेव वा ॥ २

तत्र देवीं समावाह्य सर्वैरावरणैर्युताम् ।
मण्डलं पूर्ववत्कृत्वा उभयत्रापि पूजयेत् ॥ ३

विना वा मण्डलं ग्राह्यं सद्यश्चेद्देवताग्रतः ।
अग्निं संस्कृत्य विधिवत्तत्राभ्यर्च्य च देवताम् ॥ ४

तिलैर्गुडाज्यसंमिश्रैरष्टोत्तरसहस्रकम् ।
हुनेन्निष्कलया मन्त्री मूलमन्त्रेण वा गुरुः ॥ ५

ततः स्विष्टकृतं हुत्वा प्रायश्चित्ताहुतीर्हुनेत् ।
यद्देवा यद्दिव्याश्च जयाभ्याधा(ता)नराष्ट्रभृत् ॥ ६

अनाज्ञातत्रयं चैव हिरण्यादि दशर्क्च च ।
इदं विष्णुस्त्र्यम्बकं च ततो गौरीमिमाय च ॥ ७

यत इन्द्र स्वस्तिदा च इन्द्राणी मासुमे(ने)त्यृचा ।
पावीरवी पर्वतादा महाव्याहृतयस्तथा ॥ ८

यदस्य व्याहृतीभिश्च व्यस्तया च समस्तया ।
प्रणीतामोक्षणं कुर्यात् ब्रह्मोद्वासनमेव च ॥ ९

बलिं च परितो दत्वा पूर्णाहुतिमथाचरेत् ।
ततो गुरुरुपस्थाय ललाटे भस्म धारयेत् ॥ १०

ततः कुम्भान्समादाय देवीसूक्तं परं जपन् ।
अन्यैश्च वैदिकैर्मन्त्रैः कुर्यात्कुम्भाभिषेचनम् ।। ११

अलङ्कृत्य महादेवीं सद्वासोभूषणादिभिः ।
धूपदीपं ततो दत्वा परमान्नं निवेदयेत् ।। १२

ताम्बूलादीन् ततो दत्वा कुर्यान्नीराजनादिकम् ।
नमस्कृत्य महादेवीं क्षमस्वेति क्षमापयेत् ।। १३

ब्रह्मणे दक्षिणां दद्यात् सदस्येभ्यो यथारुचि ।
न्यूनाधिकेषु कृत्येषु प्रायश्चित्तमिदं परम् ।। १४

अन्येषूत्पातजालेषु प्रायश्चित्तमिदं स्मृतम् ।
एवं यः कुरुते भक्त्या सदा पर्वणि पर्वणि ।।
दीर्घायुः पुत्रपौत्राढ्यो धनधान्यैश्च पूर्यते ।। १५

इति सौभाग्यचिन्तामणौ पूर्वखण्डे त्रिचत्वारिंशः पटलः ।।

## चतुश्चत्वारिंशः पटलः

### शान्तिहोमविधिः

शान्तिहोमं प्रवक्ष्यामि सर्वशान्तिकरं परम् ।
सर्वसौभाग्यजनकं(नं) सर्वारिष्टविनाशनम् ।। १

प्रतिष्ठाप्रोक्षणादीनां मन्त्रतन्त्रविलोपनात् ।
यदरिष्टं भवेत्तस्य दोषशान्तिं समाचरेत् ।। २

होमे स्विष्टकृदन्तेषु प्रायश्चित्तादि विस्मृतम्(दवाक्स्मृतः)।
पुनरग्निं समाधाय समाप्ते होमकर्मणि ।। ३

पयस्सर्पिर्दधिक्षीर(क्षौद्र)शर्कराकदलीफलैः ।
देवीगायत्रिमन्त्रेण सह व्याहृतिभिर्हुनेत् ॥ ४

उद्धरेत्त्रिपुरादेवि दंष्ट्राभेदि पदं ततः ।
जगदम्बा चतुर्थ्यन्तं तद्धीमही(धीमहीति)पदं ततः ॥ ५

समुच्चार्योच्चरेत् पश्चात् तन्नो देवी प्रचोदयात् ।
एषा गायत्रिरुद्दिष्टा सर्वमन्त्रोत्तमोत्तमा ॥ ६
(त्रिपुरादेव्यै च विद्महे जगदम्बायै च धीमहि ।
तन्नो देवी प्रचोदयात् ॥)

षड्भिर्मन्त्रपदैर्देवि षडङ्गानि तु कारयेत् ।
शेषं पूर्ववदुद्दिष्टं होमार्थे विनियुज्यते ॥ ७

कृणुष्वपाजमन्त्रेण अथवाग्ने नयेत्यृचा ।
उपस्थानं तु कुर्वीत बलिकर्म समन्ततः ॥ ८

इति सौभाग्यचिन्तामणौ पूर्वखण्डे चतुश्चत्वारिंशः पटलः ॥

## पञ्चचत्वारिंशः पटलः

### वैदिकशान्तिविधिः

अन्यां च वैदिकीं शान्तिं वक्ष्यामि वरवर्णिनि ।
यां कृत्वा निखिलापद्भ्यो मुच्यन्ते सर्वजन्तवः ॥ १

मन्त्रतन्त्रक्रियालोपशान्त्यै तु शुभकर्मणाम् ।
ज्वरग्रहादिदोषाणां शान्त्यै वा शान्तिरुच्यते ॥ २

अथ प्रक्षाल्य चरणावाचान्तश्शुद्धचेतनः ।
पुरतः स्थण्डिलं कृत्वा चतुर्द्रोणेन शालिना ॥ ३

तन्मध्ये स्थापयेत्कुम्भं सूत्रवस्त्रादिवेष्टितम् ।
आपूर्य शुद्धतोयेन आपो वेति च मन्त्रतः ॥ ४

हेमरत्नानि निक्षिप्य हिरण्येति ऋचा गुरुः ।
आप्यायस्वेति मन्त्रेण पञ्चत्वक्पञ्चपल्लवान् ॥ ५

उद्धृतासीतिमन्त्रेण वल्मीकादिमृदः क्षिपेत् ।
पावीरवीति मन्त्रेण मूलमन्त्रयुतेन च ॥ ६

व्यस्तैस्समस्तैश्च तथा पुरुषे पदसंयुतम् ।
सचतुर्थीनमोन्तैस्तु पूजयेत्परमेश्वरीम् ॥ ७

कदळीचूतपनस(लिकुच)कपित्थफलदाडिमैः ।
परिस्तरणदर्भेषु ऊर्ध्वाधश्चा(ग्रैर)ष्टदिक्ष्वपि ॥ ८

वशिन्यादि समभ्यर्च्य गन्धपुष्पाक्षतादिभिः ।
सव्याहृतिश्च गायत्री देवी गायत्रिका तथा ॥ ९

पावीरवी च गौरी च अदितिश्शर्म यच्छतु ।
शन्नो मित्रेति देवेशि पञ्चशान्तिस्तदुत्तरम् ॥ १०

(शन्नोमित्र ऋचो देव्याः पञ्चपञ्चाशदुत्तरम् ।)
लक्ष्मीर्भूमिश्च मेधा च उमा श्रद्धा सरस्वती ।
सिंहे व्याघ्र ऋचश्चैव यातु तेजोवतीति च ॥ ११

जातवेदसमन्त्रैश्च द्वे वा गौरीऋचौ जपेत् ।
ततोऽप्रतिरथं देवि तथा रक्षोघ्नकत्रयम् ॥ १२

अब्लिङ्गं पावमानीश्च शान्तिं जप्त्वा समापयेत् ।
पुरतोऽग्निं समाधाय कुण्डे वा स्थण्डिलेऽपि वा ॥ १३

तिलैः पञ्चामृताभ्यक्तैः गायत्र्या देविपूर्वया ।
घृताक्तदूर्वया वाथ होममष्टसहस्रकम् ॥ १४

पायसेन सहस्रं तु तथाज्येन सहस्रकम् ।
सोदुम्बरसमिच्चैव होमं पञ्चाङ्गमुच्यते ॥ १५

यथालाभं तथा द्रव्यैर्होमं कुर्याद्यथाविधि ।
ततः स्विष्टकृतं हुत्वा सकूश्मण्डं जयादि च ॥ १६

नैवेद्यहरणं हुत्वा बलिं दत्वा समन्ततः ।
प्रोक्षणं वाभिषेकं वा यथाबिम्बं समाचरेत् ॥ १७

यथाबलं नृणां कुर्यात् देव्यै दत्वा महाहविः ।
बल्युत्सवयुता ह्येषा शान्तिस्स्यात्सर्वदोषहा ॥
प्रायश्चित्तमिदं श्रेष्ठं सर्वकर्मसु सर्वदा ॥ १८

इति सौभाग्यचिन्तामणौ पूर्वखण्डे पञ्चचत्वारिंशः पटलः ॥

## षट्चत्वारिंशः पटलः

### दशाहोमविधिः

दशा(शक्ति)होमं प्रवक्ष्यामि सर्वशक्तिप्रियङ्करम् ।
पूर्ववन्मण्डलं कृत्वा मध्यभागे तु वेदिका ॥ १

तत्र धान्यैः परिस्तीर्य सशिवद्रोणयुग्मकैः ।
तदर्धार्धक्रमोपेतैश्शालिभिस्तण्डुलैस्तिलैः ॥ २

परितः पञ्च कुम्भांस्तु पञ्च कुण्डानि मध्यतः ।
चतुर्जातमुशीरं च पञ्चत्वक्पञ्चपल्लवान् ॥ ३

हेमरत्नसुपुष्पाणि निक्षिपेत्कुम्भमध्यमे ।
आवाह्य तेषु गौर्यादि स्वस्वमन्त्रेण देशिकः ॥ ४

अभ्यर्च्य गन्धपुष्पाद्यैरग्निं संस्कृत्य पूर्ववत् ।
हुनेत्क्रमेण पृथुकैर्लाजैः घृततिला(सिता)प्लुतैः ॥ ५

करम्भैस्सक्तुभिश्चैव मध्वाज्यगुडमिश्रितैः ।
पृथगष्टोत्तरशतं हुत्वा स्विष्टकृतं ततः ॥ ६

व्यस्ताभिश्च समस्ताभिर्व्याहृतीभिश्शतं हुनेत् ।
ततः पूर्णाहुतिं हुत्वा निवेद्य च महाहविः ॥ ७

इन्द्रादिद्वारपालेभ्यः परितो बलिमर्पयेत् ।
ब्रह्मणे दक्षिणां दद्यात् सदस्येभ्यो यथारुचि ॥ ८

न्यूने वा ह्यतिरिक्ते वा निखिलेषु च कर्मसु ।
प्रायश्चित्तमिदं प्रोक्तं सर्वसिद्धिकरं तथा ॥ ९

दुर्दशासु च घोरासु राजा राष्ट्रस्य चात्मनः ।
होतव्यत्वादतो होमः दशाहोमः प्रकीर्तितः ॥ १०

इति सौभाग्यचिन्तामणौ पूर्वखण्डे षट्चत्वारिंशः पटलः ॥

## सप्तचत्वारिंशः पटलः

### मूर्तिहोमविधिः

मूर्तिहोमं प्रवक्ष्यामि सर्वशान्तिकरं शुभम् ।
सर्वसौभाग्यजननं विशेषादम्बिकाप्रियम् ॥ १

पुरा सदाशिवो देवस्त्रैलोक्यं सचराचरम् ।
ससर्ज यौगपद्येन तदाऽभूत्सर्वतोमुखम् ॥ २

तेषु मुख्यानि पञ्चाशद्दिक्षु मध्ये महात्मनः ।
तथैव देवी संजाता तत्स्वरूपा सुरूपिणी ॥ ३

**मालिनी - मातृका**

मालाकारमुखी सा तु सर्वतो जगदम्बिका ।
मालिनीत्यभिधां प्रादात्सुसंतुष्टो महेश्वरः ॥ ४

मुख्यानि तस्याः पञ्चाशद्यथा देवस्तथाहि सा ।
संसृष्टा च पृथग्रूपा निवृत्त्यादिकलात्मिका ॥ ५

स्त्रीपुंनपुंसकत्वेन या चिद्विलसते परा ।
ब्रह्मविष्णुगिरीशेशाः सदाशिव इति क्रमात् ॥ ६

तेऽपि तच्छक्तयस्सर्वा यद्विलाससमुद्भवाः ।
उत्पद्यन्ते प्रलीयन्ते यस्यामेव पुनः पुनः ॥ ७

यत्कटाक्षप्रसादश्चेद्वेद्मि नो चेन्न वेद्म्यहम् ।
इदं शृणुष्व देवेशि वेदान्तैकरहस्यगम् ॥ ८

यस्या ध्यानैकमात्रेण लक्ष्मीपतिरभूद्धरिः ।
सोहं च विद्यां त(श्चस्त)द्रूपं नान्यो वेत्तीह कश्चन ॥ ९

प्रकाशकेन हि मया प्रकाश्यं तत्प्रकाशते ।
प्रत्यक्षं दृश्यते देवीं विना ह्मीशो न शोभते ॥ १०

येन सृष्टं जगदिदं येन संरक्ष्यते पुनः ।
तदेकरूपं जानीहि सृष्टिस्थित्योरभेदतः ॥ ११

आदौ सा स्रष्टुमिच्छन्ती गुणानीन्द्रियवत्यभूत् ।
इन्द्रियेभ्यस्तु पुरुषान् जनयामास पञ्च च ॥ १२

ततस्तच्छक्तीश्च गौर्यादीर्जनयामास चित्परा ।
नामरूपविभागं च कृत्याकृत्यं च साऽब्रवीत् ॥ १३

सृष्टिस्थित्यन्तकान्तर्धिरक्षा चेत्यभिधामदात् ।

तत्तत्कर्मण्यशक्तास्ते ततस्तामेव भेजिरे ॥ १४

सदा सिंहत्वमेतेषां सृष्ट्यादिषु बलीयसी ।
कृत्येष्वपि तथाऽशक्तान् दृष्ट्वा सर्वप्रपञ्चसूः ॥ १५

पुनरैक्यफलायैषां तद्रूपं स्वयमास्थिता ।
चकार तानि शुक्लानि (कृत्यानि) तथैव स्वयमास्थिता ॥१६

जगदुज्जीवनार्थाय सा दध्यौ मातृकां पराम् ।
सूक्ष्मात्मकोऽथ तुष्टाव विस्मितश्च सदाशिवः ॥ १७

प्रादुश्चक्रेऽथ सा शक्तिः पञ्चाशद्वर्णरूपिणी ।
सा वर्गपञ्चकैर्युक्ता प्रकाशानन्दरूपिणी ॥ १८

संजज्ञिरेऽथ भूतानि वर्गानुक्रमयोगतः ।
निवृत्त्यादिकलानां च तत्वानां च महेश्वरि ॥ १९

पृथ्व्यादिपञ्चभूतानां समवायो जगत्त्रयम् ।
तत्तन्मन्त्रैर्यजेत्तास्ताः तत्तन्नामसमन्वितैः ॥ २०

तारमायासमायुक्तैः तत्तद्वर्गैः हृदा सह ।
निवृत्त्यादिकलानां च मन्त्राण्युक्तानि तत्वतः ॥ २१

अभ्यर्चने नमोऽन्तं स्यात् स्वाहान्तं होमकर्मणि ।
पूर्ववन्मण्टपं कृत्वा मध्यभागे तु वेदिका ॥ २२

कुण्डानि परितः कुर्याद्योन्याकाराणि पञ्च तु ।
पुरतस्स्थण्डिलं कृत्वा द्रोणषट्कमितैर्यवैः ॥ २३

(तदर्धार्धमितैश्चैव शालिभिस्तण्डुलैस्तिलैः ।)
धान्यराशौ लिखेत्पद्मं यथाकुम्भदळान्वितम् ।
नासिकासहितान् कुम्भान् लोहजान्वाऽथ मृण्मयान् ॥२४

तत्तच्छक्तिनिभाभांश्च हेमाभानरुणप्रभान् ।
धूपयेद्वायुमन्त्रेण ध्यात्वा तद्देवतां हृदा ॥ २५

कलशं वामहस्तेन दक्षिणेन च तन्मुखम् ।
गोशृङ्गाग्रप्रमाणेन सन्तताच्छिन्नधारया ॥ २६

पूरयेत्कुम्भतोयैस्तु पुण्यतीर्थसमाहृतैः ।
वायुना कुम्भकेनैव तत्तन्मन्त्रमनुस्मरन् ॥ २७

कुम्भकेन दृढीकृत्य रेचकेन विसर्जयेत् ।
अर्चयेच्च निवृत्त्याद्या गन्धपुष्पाक्षतादिभिः ॥ २८

श्वेतमाल्याम्बरधरास्सर्वाभरणभूषिताः ।
पुस्तकाक्षवराभीतिहस्ताश्चन्द्रकलाधराः ॥ २९

अग्निं संस्कृत्य विधिवत्समभ्यर्च्य विधानतः ।
हुनेत्पूर्वादिकुण्डेषु द्रव्यैरेतैर्यथाक्रमम् ॥ ३०

फलं तिलं पायसं च भक्ष्यं लाजांस्तथैव च ।
सह क्षीराज्यमधुभिः प्रतिद्रव्यैस्तु मिश्रितम् ॥ ३१

तारशक्तिस्ववर्गाढ्यैः स्वाहान्तैः स्वस्वनामभिः ।
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ॥ ३२

ततः स्विष्टकृतं हुत्वा देवीं ध्यात्वा परात्पराम् ।
जयादिमभ्याता(धा)नं च राष्ट्रभृच्च ततो हुनेत् ॥ ३३

निवेद्य परमान्नं च कुम्भानां परितो बलिम् ।
दत्वा फलेन सहितं पूर्णाहुतिमथाचरेत् ॥ ३४

ततः कुम्भान्समुद्धृत्य मध्यादि क्रमशो गुरुः ।
अब्लिङ्गैः पावमानीभिरभिषेकं समाचरेत् ॥ ३५

अलङ्कृत्य महादेवीं परमान्नं निवेदयेत् ।
गुरवे दक्षिणां दत्वा प्रीणयेच्च विशेषतः ।। ३६

प्रायश्चित्तमिदं प्रोक्तं सर्वापद्विनिवारणम् ।
सर्वसौभाग्यजननं पुत्रपौत्राभिवृद्धिदम् ।। ३७

सर्वासामेव शक्तनीनां सद्यः प्रीतिविधायकम् ।
य इमां स्मरते नित्यं भोगमोक्षौ च विन्दति ।। ३८

इति सौभाग्यचिन्तामणौ पूर्वखण्डे सप्तचत्वारिंशः पटलः ।।

## अष्टचत्वारिंशः पटलः

### कर्मवैकल्यप्रायश्चित्तविधिः

शृणु देवि प्रवक्ष्यामि प्रायश्चित्तं परं शुभम् ।
कर्मवैकल्प्यसञ्जातदुरितापहमिष्टदम् ।। १

उत्सवाङ्गेषु लुप्तेषु येन साफल्यमश्नुते ।
ध्वजयागविहीने च ध्वजमिष्ट्वा महार्हणैः ।। २

शान्तिहोमं ततः कृत्वा तत्तत्कर्म समाचरेत् ।
ध्वजारोहणहीने तु शान्तिं कृत्वा पुनश्चरेत् ।। ३

ध्वजवेदिविहीने तु शान्तिं कृत्वा पुनश्चरेत् ।
ध्वजदण्डनिपाते तु शान्तिं कृत्वा पुनश्चरेत् ।। ४

रज्जुच्छेदे पटच्छेदे शान्तिमेतां समाचरेत् ।
घण्टाहीने च पतिते मूलेनाष्टशतं हुनेत् ।। ५

भेरीताडनहीने च विशेषयजनं जपेत् ।
रज्जुच्छेदे च तन्नाशे यष्टिकानाशने तथा ।। ६

शान्तिहोमं ततः कृत्वा मूलमन्त्रं शतं जपेत् ।
यागमण्टपहीने तु कुण्डवेदिविहीनके ॥ ७

शान्तिहोमं ततः कृत्वा पुनस्सन्धानमृच्छति ।
वेदिस्थण्डिलवैकल्ये मण्डलीनाशनेऽपि च ॥ ८

तदेव पूर्ववत्कृत्वा मूलमन्त्रं शतं जपेत् ।
घटोदकविनाशे च घटभेदे विनाशने ॥ ९

यागशालाग्निदाहे च पुनरुत्सवमाचरेत् ।
नृत्ताद्यङ्गविहीने च शान्तिहोमं समाचरेत् ॥ १०

वितानतोरणादीनां हीने नाशे ध्वजस्य च ।
होमोत्सवविहीने च शान्तिहोमो विधीयते ॥ ११

दर्भमालाविहीने तु मूलमन्त्रं शतं जपेत् ।
होमद्रव्यविहीने च अस्त्रेणैव शतं हुनेत् ॥ १२

महाव्याहृतिभिश्चैव मूलेनापि शतं हुनेत् ।
अङ्कुशस्य विहीने च छेदे भेदे तथाऽशुची ॥ १३

तन्मन्त्रेण शतं हुत्वा पुनस्सन्धानमाचरेत् ।
अष्टमङ्गलहीने च शान्तिहोमो विधीयते ॥ १४

पालिकादिविहीने च तत्तल्लक्षणहीनके ।
अस्त्रयागविहीने च विशेषयजनं चरेत् ॥ १५

मूर्तिहोमं ततः कुर्याद्देशिकैस्तन्त्रपारगैः ।
कुम्भस्थापनहीने च वस्त्राद्यङ्गविहीनके ॥ १६

मूर्तिहोमं ततः कुर्यान्मूलेनाष्टशतं हुनेत् ।
यागदीपस्य नाशे तु शान्तिहोमो विधीयते ॥ १७

कुण्डाग्निनाशे तद्भस्म निरस्याग्निं निधाय च ।
समिदाज्यचरूणां च पृथगष्टोत्तरं हुनेत् ॥ १८

व्याहृतीभिश्शतं हुत्वा यथावद्धोममाचरेत् ।
प्रणीताजलनाशे च मूलेनाष्टशतं हुनेत् ॥ १९

प्रणीतां पूर्ववत्पूर्य पुनः कर्म समाचरेत् ।
मन्त्रतन्त्रविहीने च मूर्तिहोमं समाचरेत् ॥ २०

मूलेनापि शतं हुत्वा पुनःकर्म समाचरेत् ।
बलिद्रव्यविहीने च समादाय च तानि तु ॥ २१

मूलमष्टशतं जप्त्वा बलिदानं च कारयेत् ।
बलिबेरविहीने च शान्तिहोमं समाचरेत् ॥ २२

भग्नेऽङ्गे चायुधादौ तु पुनःसन्धानमाचरेत् ।
प्रतिष्ठां पूर्ववत्कृत्वा विशेषयजनं चरेत् ॥ २३

अन्नलिङ्गेन संयुक्तं बलिदानं च कारयेत् ।
दग्धे तु देवतावस्त्रे छिन्ने चैव महेश्वरि ॥ २४

तत्त्यक्त्वा स्नपनं कृत्वा शान्तिहोमं समाचरेत् ।
छिन्नेऽस्त्रे पूर्ववत्कृत्वा पुनः स्थापनमाचरेत् ॥ २५

अस्त्रमन्त्रेण मन्त्रज्ञो हुनेदष्टोत्तरं शतम् ।
परिगृह्यास्त्रमन्यच्च(भ्यर्च्य)यागशेषं समाचरेत् ॥ २६

शेषस्थानबलिं दत्वा यथावत् तत्समाचरेत् ।
आयुधानां विनाशे तु पुनस्सन्धानमर्हति ॥ २७

नष्टे भिन्ने च कर्तव्यं पूर्ववल्लक्षणान्वितम् ।
तदस्त्रमूलमन्त्रं च जपेदष्टोत्तरं शतम् ॥ २८

बलिद्रव्यविहीने च शान्तिं हुत्वा पुनर्ददेत् ।
बलिताळविहीने तु शान्ति(मूर्ति)होमं तु कारयेत् ॥२९

बलिदीपविहीने च द्विगुणं दीपमुच्यते ।
कालातिक्रमणे शान्तिर्याने वा बलिदानके ॥ ३०

यानहीने मूर्तिहोमं स्नपनं चापि कारयेत् ।
निर्माल्यस्पृष्टपूजायां मूर्तिहोमो विधीयते ॥ ३१

प्रतिमापतने चैव स्नपनं शान्तिहोमकम् ।
शिरो वा भूगतं त्याज्यं अन्यत्सन्धानमृच्छति ॥ ३२

शूद्रैर्वा वर्णहीनैर्वा श्वभिर्वायसकादिभिः ।
स्पर्शनेऽन्तः प्रवेशे च विण्मूत्रादिसमागमे ॥ ३३

विशेषस्नपनं कृत्वा शान्तिहोमं समाचरेत् ।
वीथ्यां मानुषनाशे तु शीघ्रं त्यक्त्वा तु तं शवम् ॥ ३४

पुण्याहं वाचयित्वा तु मूलेनाष्टशतं हुनेत् ।
आलये शवपातश्चेच्छ्रीचक्रस्नपनं चरेत् ॥ ३५

शवसंख्यातगोदानं तत्क्षणादेव कारयेत् ।
पलाशसमिदाज्यैरष्टोत्तरसहस्रकम् ।
व्याहृतीयुतमूलेन तिलैरपि हुनेत्तथा ॥ ३६

शान्तिकुम्भांभसा(भं प्रतिष्ठाप्य) तत्र प्रोक्षयेत्सर्वतो महीम् ।
परिषेकविहीने तु मूलमन्त्रं शतं जपेत् (हुनेत्) ॥ ३७

कुम्भाभिषेकहीने वा पुष्पयागविहीनके ।
विशेषस्नपनं कृत्वा शान्ति(मूर्ति)होमं समाचरेत् ॥ ३८

शुद्धाभिषेकहीने च शान्तिं कृत्वाभिषेचयेत् ।
दिनाधिके च न्यूने च शान्तिं तीर्थं च कल्पयेत् ॥३९

पुनर्मध्ये च (न्यूने च मध्ये) विच्छिन्ने शान्तिं
कृ(हु)त्वोत्सवं चरेत्।
तस्माद्दश दिनान्येव उत्सवं च समाचरेत्॥ ४०

दशसंख्यदिनेष्वेव दिनशेषसमापनम्।
दशस्वहस्स्वतीतेषु पुनरुत्सवकल्पना॥ ४१

पूर्वापरविरोधर्क्षे पुनरुत्सवमाचरेत्।
पीठोद्धासनहीने च मूलमन्त्रं शतं जपेत्॥ ४२

चण्डिकायागहीने तु विस्मृतेऽप्यङ्गपूजने।
विशेषस्नपनं कृत्वा पुनर्यागं समाचरेत्॥ ४३

अन्यतन्त्रकृते चैव स्वतन्त्रेण पुनश्चरेत्।
अमन्त्रके कृते यागे समिदाज्यचरून् पृथक्॥ ४४

मूलेनाष्टशतं हुत्वा पुनर्मन्त्रेण कारयेत्।
आचार्यदक्षिणाहीने द्विगुणां दक्षिणां ददेत्॥ ४५

न चेत्कर्तुर्महाहानिः महादोषश्च जायते।
मन्त्रतन्त्रकृतीनां च लोपे वा तद्विपर्यये॥ ४६

प्रायश्चित्तेषु सर्वेषु(षां) शान्तिहोमो विधीयते।
मूर्तिहोमस्तथैव स्यादिति संक्षेपतोदितम्॥ ४७

पूजाहीने भवेद्रोगः पुष्पहीने कुलक्षयः।
गन्धहीने भवेत्कुष्ठं तोयहीने तु दुःखदम्॥ ४८

सुखनाशं धूपहीने दीपहीने धनक्षयम्।
नैवेद्यहीने दुर्भिक्षं मन्त्रहीने दरिद्रता॥ ४९

वस्त्रहीने महाव्याधिराज्यहीने मृतिर्भवेत्।
कलशद्रव्यहीने तु शत्रुभ्यो भयमाप्नुयात्॥ ५०

घण्टाहीने तु बाधिर्यं मुद्राहीनेऽसुराद्भयम् ।
नित्याग्निकार्यहीने तु राजा राष्ट्रं विनश्यति ॥ ५१

दक्षिणाद्रव्यहीने तु देवताशापभाग्भवेत् ।
पुनः कुर्याच्च तत्कर्म स्वस्तिपुण्याहपूर्वकम् ।
यः कुर्याद्दोषशान्त्यर्थं सर्वान्कामानवाप्नुयात् ॥ ५२

इति सौभाग्यचिन्तामणौ पूर्वखण्डे अष्टचत्वारिंशः पटलः ॥

## एकोनपञ्चाशः पटलः

### संप्रोक्षणविधिः

अथ वक्ष्यामि देवेशि संप्रोक्षणविधिक्रमम् ।
येन संप्रोक्षिते बिम्बे सन्निधत्ते सदाम्बिका ॥ १

पूर्वस्थापितबिम्बस्य न पुनः स्थापनं क्वचित् ।
तस्य संप्रोक्षणं कुर्यादन्यथा दोषभाग्भवेत् ॥ २

अङ्गभङ्गादिसन्धाने पुनः स्थापनमीरितम् ।
चक्रे वा भगमुद्रायां नव(भग)योन्यामथापि वा ॥ ३

छिन्ने जीर्णेऽग्निदग्धे वा पुनः स्थापनमाचरेत् ।
नाम्बुवासं पुनः कुर्यान्नयनोन्मीलनं तथा ॥ ४

खनने जलनिक्षिप्ते चिरलुप्ते च पूजने ।
चण्डालसूतकोदक्याशवपातकिदूषिते ॥ ५

विण्मूत्रश्लेष्मसंस्पर्शे चोरश्वापददूषिते ।
अशुचौ वा महादेवि तस्य संप्रोक्षणं भवेत् ॥ ६

अन्यथा निष्फला पूजा महान्दोषश्च जायते ।
सद्यः कृत्वा निमित्तेषु पूजाकर्म समाचरेत् ॥ ७

एककालार्चनाहीने द्विगुणं तत्र पूजयेत् ।
चतुर्गुणं द्विकाले तु कलशैः पञ्चभिस्त्रिषु ॥ ८

आपक्षं नवभिः कुर्यात्सद्यः कृत्वाङ्कुरार्पणम् ।
मासात्कौतुकबन्धं च कलशानां च षोडश ॥ ९

जुहुयान्नित्यकुण्डेषु मासादर्वाङ्महेश्वरि ।
अत ऊर्ध्वं बुधः कुर्यात्कुण्डमण्टपकल्पनम् ॥ १०

मासद्वये तु षट्त्रिंशत्कलशैः स्नपनं चरेत् ।
त्रिमासे तु चतुष्षष्ट्या कुम्भस्थापनसंयुतम् ॥ ११

चतुर्मासे मण्डलं च श्रीचक्रस्नपनं चरेत् ।
पञ्चमे मासि च तथा श्रीचक्रस्नपनं चरेत् ॥ १२

पुनः प्रतिष्ठा कर्तव्या षष्ठे मासे महेश्वरि ।
प्रायश्चित्तेषु सर्वेषु प्रतिष्ठा परमा मता ॥ १३

अथापि पञ्चभूता(ततः पञ्चामृतादी)नां संक्षेपाद्वक्ष्यते विधिः ।
संशोध्य च महादेव्या गृहमावरणानि च ॥ १४

स्नात्वा विधिवदाचम्य बेरशुद्धिमथाचरेत् ।
एकद्वित्रिचतुःपञ्च षड्बेराण्यप्यनुक्रमात् ॥ १५

सर्वमेकत्र संयोज्य पुण्याहं वाचयेद्गुरुः ।
ततः स्थण्डिलमाकल्प्य द्विद्रोणैस्सशिवैर्यवैः ॥ १६

**पञ्चामृतस्नानम्**

तन्मध्ये तु महादेवि कलशान्पञ्च विन्यसेत् ।
पयोदधिघृतक्षौद्रनाळिकेरजलान्यपि ॥ १७

पृथ्वीजलाग्निखगतिनभोबीजैः प्रपूरयेत् ।
यदतो वाततेत्यृग्भ्यां अभिमन्त्र्य च सर्वतः ॥ १८

मेळयित्वा तु मूलेन स्वसूक्तेनाभिषेचयेत् ।
इदं पञ्चामृतं नाम देवीसन्तोषकारकम् ॥ १९

ततश्शुद्धोदकैः स्नाप्य दद्याच्चैव महाहविः ।
नित्याग्नौ हवनं कुर्यात्समिदाज्यचरूनपि ॥ २०

अन्यच्च स्थण्डिलं कृत्वा चतुर्द्रोणशिवैर्यवैः ।
कृत्वा नवात्मकं प्राग्वत्कोणेषु च फलोदकम् ॥ २१

ऐक्षवं गुडतोयं च शर्करादधिसंयुतम् ।
बालाबीजैस्त्रिभिर्व्यस्तैस्समस्तैरर्चयेत्ततः ॥ २२

षोडश-षट्त्रिंशत्स्नपनम्

शेषं च पूर्ववत्कुर्यात्षोडशस्नपनं शृणु ।
पूर्ववत्स्थण्डिलं कृत्वा साष्टद्रोणैस्तु शालिभिः ॥ २३

तिर्यगूर्ध्वं समालिख्य रेखापञ्चकमम्बिके ।
क्षीरादि मध्यादारभ्य क्रमशोऽन्यानि विन्यसेत् ॥ २४

बीजाम्भश्च कुशाम्भश्च रत्नाम्भः पुष्पवारि च ।
गन्धांभश्चैव दूर्वाम्भोऽक्षतांभश्च ततः परम् ॥ २५

सवारुणश्रिया चैतान् पूर(ज)येदर्चयेत्तथा ।
स्वसूक्तेनाभिषिच्याथ शेषं पूर्ववदाचरेत् ॥ २६

अतः परं प्रवक्ष्यामि षट्त्रिंशत्स्नपनं शृणु ।
पुनः स्थण्डिलमाकल्प्य भारत्रयमितैर्यवैः ॥ २७

तिर्यगूर्ध्वं समालिख्य रेखासप्तकमीश्वरि ।
पूर्ववत्कलशान्न्यस्य बाह्यपङ्क्तिष्वमून्न्यसेत् ॥ २८

जातीफलं लवङ्गं च तक्कोलं चाप्युशीरकम् ।
कोष्ठं वचां हरिद्रां च मञ्जिष्ठां चम्पकं तथा ॥ २९

देवीं च विष्णुक्रान्तां च तुलसीं बिल्वपत्रकम् ।
श्यामाकंचैव नीवारं शङ्खतोयं च सर्षपान् ॥ ३०

कुच(मृच्च)न्दनं च मधुकं एलं चैव प्रविन्यसेत् ।
व्यस्तेन च समस्तेन पञ्चबाणेन चाम्बिके ॥ ३१

व्यस्ताभिश्च समस्ताभिर्व्याहृतीभिस्ततःपरम् ।
मूलमन्त्रैस्त्रिभिः खण्डैस्समस्तैरपि पूजयेत् ॥ ३२

शेषं पूर्वोक्तमार्गेण कुर्याद्देशिकसत्तमः ।
अतः परं प्रवक्ष्यामि चतुष्षष्ट्यभिषेचनम् ॥ ३३

पुरतः स्थण्डिलं कुर्यात् भारपञ्चकमिश्रितैः ।
द्रोणद्वयोत्तरैर्देवि शालिभिस्सुमनोहरैः ॥ ३४

तिर्यगूर्ध्वं समालिख्य नवरेखाः क्रमेण तु ।
पूर्ववत्कलशान्यस्य बाह्यपङ्क्तिष्वमून् न्यसेत् ॥ ३५

अश्वत्थोदुम्बरप्लक्षचूतजम्बूसमुद्भवम् ।
पञ्चत्वक्पञ्चपञ्चाग्रं भृङ्गापामार्गपल्लवम् ॥ ३६

वरालमिन्द्रवल्लीं च खर्जूरं च शिरीषकम् ।
चिञ्चामलकजम्बीरलिकुचाम्रकपित्थकान् ॥ ३७

केतकीकेरपुन्नागचम्पकांश्चोत्पलं तथा ।
नलिन्याश्चैव पुष्पाणि पूर्वादिक्रमशो न्यसेत् ॥ ३८

**तत्त्वानि तत्त्वाक्षराणि**

जीवः प्राणश्च बुद्धिश्चाहङ्कारश्च मनस्तथा ।
शब्दस्पर्शौ रूपरसौ गन्धश्रोत्रे त्वचस्तथा ॥ ३९

चक्षुर्जिह्वा नासिका च वाक्पाणी पादपायवः ।
उपस्थं व्योम वाय्वग्निर्जलं भूमिरितीरिताः ॥ ४०

तत्वा(त्त्व)नामादयो ह्येषां विलोमेन प्रकीर्तिताः ।
शकारं च हकारं च सकारं रेफमेव च ॥ ४१

हृत्पद्मसोमसूर्याग्नितत्त्वास्तद्वर्णसंयुताः ।
हषौ क्षळौ क्रमेणैव परः पुरुष एव च ॥ ४२

प्रकृतिर्विश्वमित्येवं तत्वैरेतान्समर्चयेत् ।
शुद्धोदके तु पुष्पाणि सुरभीणि विनिक्षिपेत् ॥ ४३

पूर्णकुम्भे मृगमदं कस्तूरी चन्दनं शशी ।
कुङ्कुमं नवरत्नानि सुगन्धं हेम वा(च) क्षिपेत् ॥ ४४

इत्येवं कलशानां तु स्थापनं समुदीरितम् ।
संख्यया कलशानां तु नैवेद्यं परिकल्पयेत् ॥ ४५

कर्मयोगं प्रवक्ष्यामि यथावच्छृणु सुन्दरि ।
येन संप्रोक्षिते बिम्बे सन्निधत्ते सदाम्बिका ॥ ४६

संप्रोक्षणदिनात्पूर्वं पञ्चमे सप्तमेऽह्नि वा ।
संकल्प्योपोष्य कर्तव्यं अङ्कुराणामथार्पणम् ॥ ४७

कुण्डमण्टपसंस्कारं कृत्वा पूर्वोक्तवर्त्मना ।
सिंहे व्याघ्रेति तिसृभिः बिम्बशुद्धिमथाचरेत् ॥ ४८

न्यासशुद्धतनुर्मन्त्री देव्यात्मा साधकोत्तमः ।
अग्रे तु स्थण्डिलं कृत्वा द्रोणद्वितयतण्डुलैः ॥ ४९

वस्त्रहेमसमायुक्तान् सकूर्चान् कलशान्न्यसेत् ।
सर्वतीर्थानि चावाह्य समभ्यर्च्य स्वनामतः ॥ ५०

अक्षीभ्यामिति मन्त्रेण कूर्चाग्रेण प्रमार्जयेत् ।
ततः पूर्वोक्तमार्गेण बध्वा च करकौतुकम् ॥ ५१

अम्बिकां समलङ्कृत्य कृत्वा ग्रामप्रदक्षिणम् ।
आलयं तु समासाद्य सर्वातोद्यसमन्वितम् ॥ ५२

स्नापयित्वा पुनर्देवीमलङ्कृत्य विधानतः ।
मङ्गळाष्टकयुक्ते तु वेदिमध्ये मनोहरे ॥ ५३

भारसंख्यैस्त्रिभिर्देवि तदर्धार्धक्रमान्वितैः ।
उपर्युपरि विन्यस्तैर्व्रीहिभिस्तण्डुलैस्तिलैः ॥ ५४

पञ्चवस्त्राणि संस्तीर्य आधारादीन्समर्च्य च ।
अनन्तामिति मन्त्रेण शाययेन्मध्यमेऽम्बिकाम् ॥ ५५

अहतेन सुसूक्ष्मेन देवीमाच्छाद्य वाससा ।
बहिर्निर्गत्य विघ्नानां शान्त्यै देशिकसत्तमः ॥ ५६

गन्धपुष्पादिनाभ्यर्च्य दिक्पतीनस्त्रदेवताः ।
तोरणद्वारपालांश्च संपूज्य स्वस्वनामभिः(तः) ५७

स्थापयेत्कुम्भयुग्मं तु वेदेरीशानभागतः ।
व्याहृतीभिस्समावाह्य शिवं शक्तिमपि प्रिये ॥ ५८

पूजयेद्गन्धपुष्पाद्यैर्दीपान्तैः देशिकोत्तमः।
तत्तन्मासानुगुण्येन समिदाज्यचरून्हुनेत् ॥ ५९

सहस्रवृद्ध्या मासानां शतवृद्ध्याऽथवा प्रिये(ग्यतः) ।
शतादूनं न कर्तव्यं तथा ब्राह्मणभोजनम् ॥ ६०

नैवेद्यं परिकल्प्याथ बलिकर्म समाचरेत् ।
रात्रौ जागरणं कुर्याद्बहुभिर्ब्राह्मणैस्सह ॥ ६१

वेदपारायणादीनि तदीय स्तोत्रपाठकैः ।
ततः प्रभाते संप्राप्ते कृतपूर्वाह्णिको गुरुः ॥ ६२

पूर्ववद्द्वारपालादीनर्चयेत यथाविधिः ।
बोधयेद्देवदेवेशीं उत्तिष्ठ ब्रह्मणेत्यृचा ॥ ६३

दद्यादभ्यर्च्य देव्यै तु दध्यन्नं देशिकोत्तमः ।
कुम्भे च मण्डले वह्नौ बिम्बे चैव यथाक्रमम् ॥ ६४

संपूज्य गन्धपुष्पाद्यैः कलशस्थापनं चरेत् ।
ततोऽग्निं विधिवत् हुत्वा कलशानभिषिच्य च ॥ ६५

शुद्धांभसाभिषेकं च कारयेन्मूलविद्यया ।
ततो देवीमलङ्कृत्य कुर्यान्नीराजनादिकम् (नं तथा)॥ ६६

न्यासजालं च विन्यस्य स्वदेहेऽप्यम्बिकातनौ ।
स्वयं देवीमयो भूत्वा भूषणाद्यैश्च भूषितः ॥ ६७

सपात्रपाणिर्निर्गत्य प्राणानायम्य मूलतः ।
ध्यात्वा चिरं प्रसन्नात्मा सकलीकृत्य यत्नतः ॥ ६८

आयान्तीं मण्डलाद्भानोरिन्दोर्वा निशि भावयेत् ।
अञ्जलिस्थेऽम्बुपात्रे तु तामानीय सुगन्धिते ॥ ६९

भावयन्नेव मूलेन प्रतिमां स्नापयेद्गुरुः ।
शिवा नश्शन्तमेत्यृग्भ्यां स्वस्थानं पुनरानयेत् ॥ ७०

ततः कुम्भौ समुद्धृत्य बहुभिर्ब्राह्मणैस्सह ।
वामदक्षिणयोर्देव्यौ शुभे कालेऽभिषेचयेत् ॥ ७१

शिवकुम्भं समुद्धास्य वर्धन्या(मूर्धन्ये)वाभिषेचयेत् ।
मूलमन्त्रं पुरो जप्त्वा शन्न इत्यनुवाकतः ॥ ७२

देवीसूक्तं परं जप्त्वा कुर्यात्पूर्णाभिषेचनम् ।
ततो देवीमलंकृत्य प्रार्थयेद्देशिकोत्तमः ॥ ७३

आत्वाहारिषमित्यृग्भ्यां शिवा न इति मन्त्रतः ।
संप्रार्थ्य नित्यसान्निध्यं नैवेद्यं परिकल्पयेत् ॥ ७४

नित्यहोमावसाने तु प्रायश्चित्तं समाचरेत् ।
पुनर्वीथीः परिक्रम्य बलिकर्मपुरस्सरम् ॥ ७५

पुरस्तान्मण्टपे स्थाप्य यथोक्तां दक्षिणां ददेत् ।
मासादर्वाङ्निमित्ते तु अर्धनिष्कं तु दक्षिणा ॥ ७६

एकमासादिमासेषु प्रतिष्ठान्तेषु सर्वतः ।
निष्कवृद्ध्या क्रमेणैव नृपस्तु गुरवे दिशेत् ॥ ७७

ऋत्विजामर्धमात्रेण मूर्तिपानां तु पादतः ।
पञ्च त्रीणि द्वयं तेषां वस्त्राण्यपि नृपो दिशेत् ॥ ७८

सदस्यानपि तत्रस्थान्ब्राह्मणान्वेदपारगान् ।
तोषयेद्वस्त्रहेमाद्यैः यथार्हं नृपसत्तमः ॥ ७९

एवं कृत्वा महादेवीं पूजयेत्तु यथाविधि ।
देशिकस्यापि राज्ञश्च राष्ट्रस्यापि शुभं भवेत् ॥ ८०

ज्वरादिव्याधिपीडाभ्यो मुच्यन्ते सर्वजन्तवः ।
इति ते कथितो देवि संप्रोक्षणविधिक्रमः ॥ ८१

यः पठेच्छृणुयाद्वापि श्रावयेद्वा द्विजोत्तमः ।
सर्वपापविनिर्मुक्तः सर्वान्कामानवाप्नुयात् ॥ ८२

इति सौभाग्यचिन्तामणौ पूर्वखण्डे एकोनपञ्चाशः पटलः ॥

## पञ्चाशः पटलः

### जीर्णोद्धारविधिः

पार्वत्युवाच—

भगवन्देवदेवेश सर्वज्ञ करुणाकर ।
प्रतिष्ठाप्रोक्षणादीनि प्रोक्तानि भवता पुरा ॥ १

इदानीं श्रोतुमिच्छामि जीर्णोद्धारविधिं परम् ।
यज्ज्ञात्वा कर्मकुशलो देशिको देव जायते ॥ २

ईश्वर उवाच—

शृणु देवि महाभागे यन्मां त्वं परिपृच्छसि ।
पुरैव त्रिविधं प्रोक्तं विधिना यन्त्रबिम्बयोः ॥ ३

तयोः पुनः प्रतिष्ठायां स एवायं विधिःस्मृतः ।
त्रिविधेषु च बिम्बेषु न भेदो मन्त्रतन्त्रयोः ॥ ४

पुरा यद्योगिनीयुक्तं ताभिरेव प्रकल्पयेत् ।
डाकिन्याद्यास्तु योगिन्यः प्रोक्तास्तन्मनवः पुरा ॥ ५

त्रिविधस्य च बिम्बस्य भेदो न स्थापनादिषु ।
जातिभेदात्क्रियाभेदो मन्त्रभेदश्च कुत्रचित् ॥ ६

गुरुभेदाच्छिष्यभेदो गुरवो ब्राह्मणादयः ।
लोहदारुमये बिम्बे प्रभायुधविपर्यये ॥ ७

पुनस्सन्धाय कुर्वीत प्रतिष्ठाविधिमम्बिके ।
लोहजे करपादाक्षिनासाश्रोत्रविपर्यये ॥ ८

पुनस्सन्धाय कुर्वीत प्रतिष्ठां पूर्ववत्प्रिये ।
उत्सवेषु त्यजेद्बिम्बं नासाश्रोत्रादिकेषु च ॥ ९

जीर्णं जीर्णेन सन्धेयं तरुणेन तथाविधम् ।
विपरीतं न कुर्वीत बिम्बेषु निखिलेषु च ॥ १०

बिम्बेषु वाथवा यन्त्रे समावाह्य प्रपूजयेत् ।
उभयोर्नाशिने देवि बालबिम्बेऽथवा घटे ॥ ११

उत्तमं तु नवाहान्तं आपक्षमधमं स्मृतम् ।
आत्रिसप्तदिनादूर्ध्वं नो वै(र्ध्वं) तिष्ठति तद्घटे ॥ १२

कृमिवत्पूतिगन्धाम्बु नार्चयेत्तत्कचित्प्रिये ।
चिरसाध्ये तु कुर्वीत बालाबिम्बमतः परम् ॥ १३

रत्नजे लोहजे वापि शैलजे दारुजेऽपि वा।
सुधेष्टका भवेद्वापि मृण्मये वा वरानने ॥ १४

दारुजं मृण्मयं वापि बालबिम्बं तु कारयेत् ।
चक्रं तु विलिखेत्पीठे रक्तचन्दनसंभवे ॥ १५

देवदारुकृते वापि चन्दने वाथ निम्ब(र्ण)जे ।
सुरदारुकृते वापि मूलविस्तारतोऽनुगम् ॥ १६

त्रिपादमर्धपादं वा विलिखेच्चक्रमुज्ज्वलम् ।
मूलबिम्बानुसारेण किञ्चिदुत्सवतोऽधिकम् ॥ १७

चित्रं वाप्यर्धचित्रं वा बिम्बं कुर्याद्विचक्षणः ।
अर्धे वाप्यन्तराले वा पुरस्तान्मूलबिम्बतः ॥ १८

चतुष्पादयुते पीठे कुर्यादेवं विचक्षणः ।
दारवीभिः गृहं कुर्यात्फलकाभिश्च सुन्दरि ॥ १९

न भूमौ बालबिम्बं तु स्थापयेन्न शिलासु च ।
भूमौ तु स्थापितं बिम्बमुद्धरेन्न कदाचन ॥ २०

श्रेष्ठं तु मृण्मयाद्बिम्बात्सुधेष्टकसमुद्भवम् ।
तस्माच्च दारुजं श्रेष्ठं दारुजाच्छैलमुत्तमम् (जं वरम्) ॥ २१

शैलाल्लोहकृतं श्रेष्ठं तस्माद्रौप्यजमुत्तमम् ।
तस्मादपि हिरण्यं तु तस्माद्रत्नमयं वरम् ॥ २२

अनर्घरत्नजं बिम्बं यन्त्रं वा वरवर्णिनि ।
उभयं च यजेद्यस्तु सोऽहमेव न संशयः ॥ २३

यत्र तिष्ठति तद्बिम्बं यन्त्रं वा विधिवत्कृतम् ।
नवहेममयं वापि तत्र श्रीः सर्वतोमुखी ॥ २४

त्रपुसीसायसं बिम्बं अरीणां निग्रहे मतम् ।
यद्द्रव्येण कृतं बिम्बं तद्द्रव्येणैव कारयेत् ॥ २५

मुख्यद्रव्येण वा कुर्यात्तदधीनमधः क्वचित् ।
कुर्याद्यन्त्रं च बिम्बं च पूर्ववद्रूपसंयुतम् ॥ २६

अथ प्रक्षाल्य चरणावाचान्तः शुद्धचेतनः ।
प्राणानायम्य संकल्प्य पुण्याहं वाचयेत्ततः ॥ २७

पुरतो बालबिम्बस्य कुम्भं स्थाप्य विधानतः ।
उपविश्यासने देवीं पुरतो मूलबिम्बतः ॥ २८

न्याससन्नद्धहृदयो देवीभावमुपागतः ।
अञ्जलौ पात्रमादाय गन्धपुष्पाम्बुपूरितम् ॥ २९

स्थित्वा तु पुरतो देव्याः प्राङ्मुखो वाऽप्युदङ्मुखः ।
पृथिव्यादीनि भूतानि तन्मात्राणीन्द्रियाणि च ॥ ३०

मनोऽहङ्कार बुद्ध्या च प्रकृतौ योजयेत्क्रमात् ।
ध्यात्वा बिम्बोद्गतां देवीं सहस्रार्कसमप्रभाम् ॥ ३१

बिम्बानुगतरूपाढ्यां सर्वाभरणभूषिताम्।
प्रसन्नवदनां सौम्यां ध्यात्वा तद्ध्यानयोगवित्॥ ३२

पात्रस्थाम्बुनि विन्यस्य विनिर्गत्य ततो बहिः।
कुम्भे देवीं समावाह्य युक्त्वा कुम्भाम्बुनाऽम्बु च॥ ३३

कुण्डे वा स्थण्डिले वापि समाधाय हुताशनम्।
जुहुयात्समिदन्नाज्यैः पृथगष्टोत्तरं शतम्॥ ३४

अष्टाविंशतिसंख्या वा जुहुयान्मूलमन्त्रतः।
ततः पूर्णाहुतिं हुत्वा वह्निस्थां योजयेद्घटे॥ ३५

समभ्यर्च्य विधानेन गन्धपुष्पाक्षतादिभिः।
महानिवेदनं कृत्वा बलिं दत्वा तु पूर्ववत्॥ ३६

पाणिभ्यां कुम्भमुद्धृत्य ध्यात्वा देवीं घटोद्गताम्।
तद्बिम्बान्तर्गतां ध्यात्वा तज्जलेनाभिषेचयेत्॥ ३७

प्रकृत्यादि पृथिव्यन्तमुत्पाद्य स्वस्वकारणात्।
भावयेद्बिम्बगात्रेषु तन्मात्राणीन्द्रियाणि च॥ ३८

जीवन्यासं तु मूलेन कुर्याद्देशिकसत्तमः।
शिरःप्रभृति पादान्तं मूलमन्त्राक्षरान्न्यसेत्॥ ३९

व्यापकत्वेन विन्यस्य मूलेनैव विचक्षणः।
प्रणिपत्य क्षमस्वेति यथावत्पूजयेत्तदा॥ ४०

बिम्बं च पूर्ववत्कृत्वा मूलबिम्बात्ततो गुरुः।
कुम्भे संयोज्य विधिवन्मूलबिम्बे तु योजयेत्॥
एवं कृते महादेवी सन्निधत्ते सदाम्बिका॥ ४१

इति सौभाग्यचिन्तामणौ पूर्वखण्डे पञ्चाशः पटलः॥

## एकपञ्चाशः पटलः

### सहस्रकलशार्चनविधिः

अथ देवि प्रवक्ष्यामि सहस्रकलशार्चनम् ।
यद्विधानेन शक्राद्याः प्राप्नुवन्ति महोदयम् ॥ १

प्रतिष्ठाप्रोक्षणान्तेषु विशेषदिवसेषु च ।
प्रायश्चित्तेषु सर्वेषु शान्तिके पौष्टिके तथा ॥ २

भूकम्पोल्कानिपातेषु महामारीभयेषु च ।
महाग्रहोपघातेषु चोरशत्रुभयेषु च ॥ ३

अवग्रहादिदुःखेषु सर्वापत्सु च सर्वदा ।
प्रायश्चित्तमिदं प्रोक्तं सर्वदुःखनिवारणम् ॥ ४

धन्यं यशस्यमायुष्यं सर्वसंपत्प्रदायकम् ।
नास्मात्परतरं किञ्चित् त्रिषु लोकेषु भामिनि ॥ ५

हिताय सर्वलोकानां स्नेहादपि तवानघे ।
तच्छृणुष्व प्रवक्ष्यामि सहस्रकलशार्चनम् ॥ ६

पुरस्तादम्बिकायास्तु गोमयेन महीतलम् ।
समालिप्य परिस्तीर्य द्विचत्वारिंशभारकैः ॥ ७

भारत्रयोत्तरयुतैर्द्रोणद्वययुतैर्यवैः ।
अथवा तु तदर्धेन तदर्धेनैव (दर्धोर्धेन) वा पुनः ॥ ८

योन्याकाराणि कुण्डानि कुर्यादष्टासु दिक्ष्वपि ।
सङ्कल्प्य कृत्वा पुण्याहं व्याहृत्या प्रोक्षयेत्ततः ॥ ९

चतुरश्रीकृतं क्षेत्रं त्रिपञ्चकविभाजितम् ।
पूर्वे च पश्चिमे चैव बाह्यपङ्क्तिमथाचरेत् ॥ १०

अन्तस्त्रयोदशायां तु पंक्तौ द्वे चैव कल्पयेत् ।
कुण्डस्य भूतरेखार्धं पूर्वे कुण्डार्धमेव च ॥ ११

पादार्धं पश्चिमे कुर्यात् दक्षादङ्गस्य योजयेत् ।
प्राक्प्रत्यञ्चोश्च (प्रत्यग्रासु च) भूतानां रेखानां द्वारकाप्तये ॥ १२

वीथ्यर्थं नव पङ्क्तीश्च त्यक्त्वा मध्ये महेश्वरि ।
प्रत्यगग्रासु रेखासु गायत्रीवर्णसंख्यया ॥ १३

उत्तराग्रासु रेखासु द्वात्रिंशत्स्वपि भामिनि ।
ब्रह्मस्थितस्य सूत्रस्य दक्षिणे सूत्रपञ्चकम् ॥ १४

आरभ्य बाह्यं देवेशि त्रयोदशकसूत्रकम् ।
संगृह्य च तदन्तस्तु आरभेन्मानसूत्रतः ॥ १५

उभे पार्श्वे द्वादशकसूत्रान्तर्गतकुक्षिके(ते) ।
परिभ्राम्य च तेनैव सूत्रेणाथ प्रयोजयेत् ॥ १६

उत्तरे दक्षवत्कुर्यात् कुम्भ(कण्ठा)स्योदरकल्पनाम् ।
कुम्भकर्णास्यकुक्ष्यर्थं ऐन्द्रं बाह्यादितोऽन्ततः ॥ १७

षट्पङ्क्तौ पुरुहूतायां मध्यसूत्रस्य शाम्भवि ।
द्वे द्वे दशकविंशश्च पदकैर(र्द)लिकां कुरु ॥ १८

त्रिधा कृत्वाथ तां पङ्क्तिं तदन्तस्थां पदं ततः ।
कोणादारभ्य तस्यैव बाह्यकोणं च संगृहेत् ॥ १९

बहिर्भ्राम्य च तस्यान्तः परपङ्क्तौ च भामिनि ।
द्व्यन्न(द्विनखा)वान् कण्ठशोभान् च वदनार्थं वियोज्य च ॥ २०

तदन्त्यपदयुग्मे तु आस्यान्तं वक्त्रवद्बहिः ।
भ्रामयेदन्त्यवक्त्रस्य पश्चिमस्य चतुष्टयम् ॥ २१

आरभ्य सूत्रमन्तस्तु उत्तरे चतुरक्षर(क)म् ।
कण्ठमध्यस्य सिद्ध्यर्थं सूत्रं गृह्यैव तद्भ्रमेत् ॥ २२

आस्यैकांशेन कण्ठस्य भूषणार्थं तदन्ततः ।
आस्यान्तश्चतुरस्त्यक्त्वा मध्यसूत्रमथारभेत् ॥ २३

पश्चिमे पश्चिमं सूत्रमारभ्य च तदन्ततः ।
तत्पश्चिमे चक्रसूत्रं संगृह्यैकांशतस्ततः ॥ २४

द्विरेखां भ्रामयेद्देवि अर्धचन्द्रवदुज्ज्वलाम् ।
कुम्भस्य पादसिद्ध्यर्थं पश्चिमे तु दृढं श्रयेत् ॥ २५

बाह्यपङ्क्त्यन्तभूताख्यपङ्क्तिमध्ये तु षोडश ।
तदेकपङ्क्तिं कृत्वा तु सूत्रस्यान्तस्य तस्य तु ॥ २६

प्राच्यारभ्य तु भूताख्या तद्दक्षे चोत्तरेऽपि च ।
उत्तरे दक्षिणे चापि गृह्य सूत्रं चतुर्थकम् ॥ २७

अर्धेन्दुवदुदक्पश्च पङ्क्तौ वामस्य मध्ययोः (मध्यसीमयोः)।
भ्रामयेत्तस्य वह्नौ तु तस्मात्प्रागादि पङ्क्तिषु ॥ २८

कृत्वाष्टौ पङ्क्तिकास्तास्तु(भागे तु) नव पङ्क्तिषु ते पुनः ।
हित्वा भागे तु पदकं तत्पश्चिमगता पदम् ॥ २९

कुम्भस्य नाळकाग्रं स्यात् पङ्क्तौ प्राक्कोणभागतः ।
सूत्रस्य पश्चिमस्थं तु सूत्रमारभ्य चान्ततः ॥ ३०

.................. संगृह्य तु चतुर्थकम् ।
द्वे पार्श्वे च तृतीयाख्या पादार्धं चन्द्रवद्भ्रमेत् ॥ ३१

तस्यान्तश्च(स्य)तृतीयाख्यास्तत्र संगृह्य यत्नतः ।
द्वे पार्श्वे च तृतीयाख्य(:)सूत्रे सम्यक् प्रयोजयेत् ॥ ३२

तत्पश्चिमे पञ्चकं च सूत्रमारभ्य योजयेत् ।
इति ते कथितं देवि सहस्रपदसंयुतम् ॥ ३३

नवचक्रा(रेका)त्मकं देवि नवयोनिभिरुज्ज्वलम् ।
महात्रिपुरसुन्दर्या निवासं सर्वशक्तिमत् ॥ ३४

अस्य दर्शनमात्रेण सम्यक् खेचरतां व्रजेत् ।
तत्पदेष्वपि सर्वेषु कुम्भान्पूर्वोक्तलक्षणान् ॥ ३५

सवस्त्रयुग्मान् रत्नाढ्यान् साढकोदान्सुनिर्मलान् ।
सहस्रनामभिस्तस्यां स्थापयेद्बीजपूर्वकैः ॥ ३६

गन्धपुष्पादिनाऽभ्यर्च्य मध्यादीनि पृथक्पृथक् ।
हरिद्राचूर्णकलशं दक्षिणे तस्य कारयेत् ॥ ३७

तस्याग्रे स्थापयेत्कुम्भान् षोडशग्रहपञ्च वा ।
तत्तत्पात्रेषु तद्द्रव्यैः मेळयित्वाऽखिलेष्वपि ॥ ३८

गन्धौषधादि निक्षिप्य शोषणाद्यैस्तु शोध(ष)येत् ।
सर्वमेवामृतीभूतं सञ्चिन्त्यार्चनमारभेत् ॥ ३९

ततो होमं प्रकुर्वीत ब्रह्मवृक्षसमिच्चयैः ।
सहस्रं पायसैश्चैव तथाज्येन सहस्रकम् ॥ ४०

कर्मवैकल्यशान्त्यै तु पुनर्हुत्वा सहस्रकम् ।
ततः स्विष्टकृतं हुत्वा पूर्णाहुतिमथाचरेत् ॥ ४१

मूले वा कर्मबिम्बे वा चक्रे वा देशिकोत्तमः ।
आवाह्य द्रव्यस्नानान्तं कृत्वा वासो व्यपोह्य च ॥ ४२

धारयित्वा शुभं वस्त्रं अभिषेकं समाचरेत् ।
पूर्वोक्तैर्वैदिकैर्मन्त्रैः मूलेनाप्यभिषिच्य च ॥ ४३

हरिद्राचूर्णकलशैः(शं) श्रीसूक्तेनाभिषेचयेत् ।
ततश्शुद्धोदकैस्स्नाप्य मूलमन्त्रेण केवलम् ॥ ४४

ततो वसनगन्धाद्यैश्शोभनैः दिव्यभूषणैः ।
महानिवेदनैश्शुद्धैः शतादिदशसंयुतैः ॥ ४५

नीराजनादिभिर्देवि सन्तोष्य परमेश्वरीम् ।
देव्यै निवेदितं सर्वं तच्चतुर्धा विभज्य च ॥ ४६

ब्राह्मणान्भोजये(नां दिशे)देकं मूर्तिपानां द्वितीयकम् ।
सर्वेषां परिचाराणां दासानां च तथैव च ॥ ४७

दासीनां कर्मकाराणां वैद्यानां मन्त्रवादिनाम् ।
गणितज्ञौषधकृतां मण्डलीनां तथैव च ॥ ४८

शिल्पिनां चित्रकाराणां कुलालानां तृतीयकम् ।
दीनानां च दरिद्राणां सर्वेषां च तथैव च ॥ ४९

धर्मकर्तुर्नृपस्यापि चतुर्थांशमुदाहृतम् ।
गुरवे दक्षिणां दद्याद्धिरण्यं शतनिष्ककम् ॥ ५०

गोभूवस्त्रैर्भूषणाद्यैः प्रीणयित्वा महात्मने ।
ऋत्विजामर्धमात्रं तु मूर्तिपानां तु पादतः ॥ ५१

अर्धेन वा तदर्धेन सदस्यानपि तोषयेत् ।
व्ययीकृत्वा (दक्षिणां च) नृपस्त्वेवं गन्धताम्बूलपूर्वकम्॥

कौतुकं पूर्ववत्कृत्वा बलिकर्म समाचरेत् ।
ग्रामप्रदक्षिणं कुर्यात् सर्वातोद्यसमन्वितम् ॥ ५३

प्रवेश्य चालयं पश्चान्नीराजनमथाचरेत् ।
स्वस्थानं पूर्ववन्नीत्वा गीतनृत्तादि दर्शयेत् ॥ ५४

इति ते कथितं देवि सहस्रकलशार्चनम् ।
सर्वपापहरं दिव्यं सर्वोपद्र(प्ल)वनाशनम् ॥ ५५

भोगमोक्षप्रदं दिव्यं विशेषादम्बिकाप्रियम् ।
यः कुर्याच्छ्रद्धया युक्तः सर्वान्कामानवाप्नुयात् ॥ ५६

इति सौभाग्यचिन्तामणौ पूर्वखण्डे एकपञ्चाशः पटलः ॥

## द्विपञ्चाशः पटलः

### महाभिषेकविधिः

श्रीदेव्युवाच—

देवदेव महादेव परिपूर्णप्रथा(भा)मय ।
सर्वज्ञ सर्वलोकेश सृष्टिस्थित्यन्तकारण ॥ १

सकलं कर्म विज्ञातं भवतो भवभञ्जन ।
यानि यानि रहस्यानि ज्ञेयानि ज्ञानसागर ॥ २

प्रायश्चित्तं च काम्यं च न कदाचिन्मया श्रुतम् ।
इदानीं तद्विधानं मे श्रोतुमुत्कण्ठते मनः ॥ ३

इति श्रुत्वा वचो देव्या विचार्य क्षणमीश्वरः ।
किञ्चिद्विहस्य प्रोवाच जगतां हितकाम्यया ॥ ४

ईश्वर उवाच—
त्वमेव ननु कल्याणि सर्वम(त)न्त्रस्वरूपिणी ।
सर्वज्ञा सर्वगा सर्वा सर्वलोकस्वरूपिणी ॥ ५

ज्ञातुं शक्यं त्वया श्रुत्वा मत्तस्सर्वं तदैक्यतः (यथैर्यतः)।
मयापि च (यतः) तथा वक्तुमावयोः सैव कारणम् ॥ ६

त्वं माता सर्वलोका(भूता)नां सर्वभूतानुकम्पिनी ।
श्रोत्र(तृ) वक्त्र(क्तृ)समायोगाज्जायते कर्म शोभनम् ।। ७

तस्माल्लोकहितार्थाय पृच्छसे परमेश्वरि ।
प्रायश्चित्तं च काम्यं च लभ्यते चैव कर्मणा ।। ८

तदहं तेऽभिधास्यामि शृणु सुन्दरि साम्प्रतम् ।
इतः पूर्वं मया नोक्तं यस्य कस्यापि पार्वति ।। ९

महाभिषेचनं नाम सर्वभूतसुखावहम् ।
महोत्सवेषु लुप्तेषु प्रतिमापतनेषु च ।। १०

ध्वजपाते रथध्वंसे ध्वजदण्डनिपातने ।
आलये शिथिले जाते(चैव) तथा प्रासादपातने ।। ११

दग्धे तु देवतावस्त्रे भूकम्पोल्कानिपातने ।
महामारीयुते देशे तथावग्रहपीडिते ।। १२

अन्येषूत्पातजाते(ले)षु प्रायश्चित्तविधिर्मतः ।
देवताभावदेशेषु दृश्यन्ते चेदिमानि तु ।। १३

कृत्वा प्रतिष्ठां विधिवदिति कर्म समाचरेत् ।
यदि नावसरः कर्तुं प्रतिष्ठाकर्म पार्वति ।। १४

राज्ञो वा करयेदेतदथवा दीक्षितस्य तु ।
तत्सर्वं शममाप्नोति अभिषेकविधानतः ।। १५

तद्विधानं प्रवक्ष्यामि शृणुष्वैकमनाः प्रिये ।
यस्य विज्ञानमात्रेण शोभनाय प्रकल्पते ।। १६

षट्त्रिंशत्स्तम्भसंयुक्तमादौ कृत्वा तु मण्टपम् ।
प्रपां वापि विशालाक्षि सुविशालां मनोहराम् ।। १७

बाह्यपङ्क्तिं विहायान्ते(विनाऽन्तेषु) षट्कोणं परिकल्पयेत्।
अष्टौ कुण्डानि परितो योग्याकाराणि कारयेत् ॥ १८

दक्षिणे सर्वतोभद्रं गौरीमण्डलमुत्तरे ।
साधनानि च सर्वाणि न्यसेद्गन्धचतुष्टये ॥ १९

कुर्यात्कोणेषु पद्मानि पूर्वादिक्रमशस्तथा ।
तेषां दलानि कुर्वीत अष्टौ नव चतुर्दश ॥ २०

षट्द्वादशाष्टौ विधिवत्पूर्वादिक्रमशः प्रिये ।
तत आचम्य संकल्प्य कृत्वा पुण्याहवाचनम् ॥ २१

गायत्र्या व्याहृतीभिश्च कुशैस्संप्रोक्षयेत्ततः ।
धूपयित्वा सुधूपेन कलशानर्पयेद्गुरुः ॥ २२

यत्र स्यात्कलशन्यासस्तत्र व्रीहिरुदाहृतः ।
यत्र मण्डलमुद्दिष्टं तत्र तण्डुलमुच्यते ॥ २३

तत्तन्मन्त्रेण वाऽऽपूर्य स्वनाममनुभिश्च वा ।
श्रीचक्रे प्रथमं न्यस्य पूर्वोक्तेन विधानतः ॥ २४

मातृकावर्गमार्गेण विघ्नेशादींश्च पूर्वतः ।
आग्नेये तु प्रविन्यस्य नव कुम्भान्महेश्वरि ॥ २५

तत्र ग्रहान्समावाह्य सम्पूज्य स्वस्वमन्त्रतः ।
साभिजित्कं प्रविन्यस्य नैर्ऋते तारकागणम् ॥ २६

समभ्यर्च्य विधानेन युग्मशः परमेश्वरि ।
वारुणे योगिनीचक्रं तत्तन्नाथसमन्वितम् ॥ २७

तत्पद्म (द्वर्ण) संख्यया न्यस्य क्षुद्रपद्मं विधाय च ।
सम्पूज्य स्वस्वमन्त्रेण स्वनाममनुभिश्च वा ॥ २८

वायव्यपद्मे राशींश्च मेषादीन्क्रमशोऽर्चयेत् ।
मातृकाचक्रमार्गेण ईशान्ये पीठदेवताः ॥ २९

समभ्यर्च्य विधानेन गन्धपुष्पाक्षतादिभिः ।
कर्णिकासु च पद्मानां कुम्भषट्के प्रविन्यसेत् ॥ ३०

तेषु देवीं समाराध्य मूलमन्त्रेण देशिकः ।
मण्डलद्वितये चैव पूजयेत्परमेश्वरीम् ॥ ३१

मण्टपद्वारपालानां कुर्यादुत्सववद्गुरुः ।
एवं षट्त्रिंशदधिकं कुम्भानां च शतत्रयम् ॥ ३२

स्थापयित्वाऽथ सम्पूज्य स्वस्वमन्त्रेण देशिकः ।
ततोऽग्निं च समाधाय पूर्वकुण्डे च पूर्ववत्॥ ३३

सर्वकुण्डेषु निक्षिप्य परिस्तीर्य यथाविधि ।
ऋत्विग्भिस्सह कुर्वीत हवनं चैक एव वा ॥ ३४

ईशाने गणनाथानां ग्रहाणामपि चोत्तरे ।
ताराणां मारुते कुर्यात् योगिनीनां तु वारुणे ॥ ३५

राशीनां नैर्ऋते कुर्यात् पीठानामपि दक्षिणे ।
आग्नेये द्वारपालानां हवनं कारयेद्गुरुः ॥ ३६

अष्टोत्तरशतं हुत्वा सर्वकुण्डेषु मूलतः ।
जुहुयात्परिवाराणामष्टाविंशतिसंख्यया ॥ ३७

उत्सवोक्तैः पुनर्द्रव्यैर्हुनेत्साष्टसहस्रकम् ।
श्रीचक्रकुण्डमध्ये तु हुनेत्पञ्चसहस्रकम् ॥ ३८

ततः स्विष्टकृतं हुत्वा ततो निष्कलया शतम् ।
व्याहृतीभिस्ततः कुर्यादष्टाविंशतिसंख्यया ॥ ३९

ततः पूर्णाहुतिं हुत्वा परिषिच्य यथाविधि ।
पृथङ्निवेदनं कुर्यात् कुम्भेषु परमोदनम् ॥ ४०

दशभारं समारभ्य शतभारावसानकम् ।
कुम्भाग्रे देवताग्रे च दद्याच्चैव महाहविः ॥ ४१

ब्राह्मणान् भोजयेत्पश्चात्सदारान्समदर्शनान् ।
तोषयेद्दक्षिणाभिश्च गोभूवस्त्रैश्च भूषणैः ॥ ४२

कृत्वा कौतुकबन्धं च बलिकर्म विधाय च ।
ग्रामप्रदक्षिणं कृत्वा निजस्थाने निवेशयेत् ॥ ४३

सहस्रैरर्चयेद्देवीं पलाशकुसुमैर्नवैः ।
कल्हारैः पङ्कजैर्नीपैरुत्पलैः करवीरकैः ॥ ४४

जातीचम्पकपुन्नागपुण्डरीकैस्सुगन्धिभिः ।
पूजयेन्नामभिर्देव्या अष्टोत्तरसहस्रकैः ॥ ४५

पूजान्ते बहुभक्ष्याढ्यं परमान्नं निवेदयेत् ।
एवं निवेदयेद्रात्रौ पूजाहोमोत्सवान् दिवा ॥
(एवं दिवा च रात्रौ च पूजाहोमोत्सवांश्चरेत्) ४६

अबहिर्मानसो भूत्वा रात्रौ जागरणं चरेत् ।
यदि स्यादवशो मन्त्री सौभाग्यहृदयं (कवचं) जपेत् ॥ ४७

वह्नयस्सर्वकुण्डस्था रक्षितव्याः प्रयत्नतः ।
यदि नश्येत्प्रमादेन तेष्वेको द्वौ त्रयस्तु वा ॥ ४८

श्रीचक्राग्निं समाधाय मूलेन जुहुयाच्छतम् ।
व्याहृतीभिश्शतं हुत्वा ततः पूर्णाहुतिं हुनेत् ॥ ४९

श्रीचक्राग्नौ तु विच्छिन्ने पुनस्संस्कारपूर्वकम् ।
हुत्वा मूलेन साहस्रं व्याहृतीभिस्तथा हुनेत् ॥ ५०

कृतं तु सकलं कर्म पुनरेव समाचरेत् ।
वह्निरेव मनुष्याणां कारणं सुखदुःखयोः ॥ ५१

तस्मात्सर्वप्रयत्नेन रक्षितव्यो हुताशनः ।
एकाहादिनवाहान्तं यथाविभवमम्बिके ॥ ५२

ब्राह्मणान्भोजयेत्पश्चान्मूर्तिपान्देशिकांस्तथा (कादिमान्) ।
तोषयेद्दक्षिणाद्यैश्च गन्धताम्बूलसंयुतैः ॥ ५३

तीर्थं चैव तु यः कुर्यात् साक्षाद्देवीमयो भवेत् ।
तत्ते तीर्थं प्रवक्ष्यामि यत्कृत्वा मुच्यतेऽशुभैः ॥ ५४

पूर्वेद्युरङ्कुरं कुर्यात्तीर्थकर्माङ्गमम्बिके ।
आलये वा गृहे वापि देव्या वा दीक्षितस्य वा ॥ ५५

वध्नीयात्कौतुकं हस्ते वामे दक्षिणके क्रमात् ।
(दक्षिणे कौतुकं हस्ते वामे देव्याश्च दक्षिणे ।)
दक्षिणे वापि देव्याश्च धारयेद्दीक्षित(देशिक)स्य च ॥५६

परेद्युर्नित्यपूजान्ते होमं कृत्वा बलिं तथा ।
ग्रामप्रदक्षिणं कुर्यादादावन्ते च देवताम् ॥ ५७

दीक्षान्ते दीक्षितं कुर्याद्रथेन तु गजेन वा ।
कृत्वा हेममयं पीठं षडाधारयुतं शुभम् ॥ ५८

तन्मध्ये मातृकाचक्रं कुर्याद्देवि मनोहरम् ।
उत्तरे देवि कुम्भानां वेद्यामेतन्निधाय च ॥ ५९

कृत्वा कृष्णाजिनं पश्चात्प्रणवेनैव केवलम् ।
तन्मध्ये तु प्रतिष्ठाप्य शिरः स्पृष्ट्वा शतं जपेत् ॥ ६०

भावयेद्देवतारूपं दीक्षितं च तथा प्रिये ।

ततस्सर्वाणि कुम्भानि मध्यादीनि पृथक्पृथक् ॥ ६१

अभिषिञ्चेत्ततो मूर्ध्नि तन्मन्त्रैर्नामभिस्तु वा(ःस्तुवन्) ।
ततः शुद्धोदकेनैव देवीसूक्तेन मूलतः ॥ ६२

अलङ्काराणि सर्वाणि मूलमन्त्रेण कारयेत् ।
एतदेव विधानं स्यात् देव्याश्चाजिनवर्जितम् ॥ ६३

महाहविर्निवेद्याथ कुर्यान्नीराजनादिकम् ।
गुरवे दक्षिणां दद्याद्दिनानामपि संख्यया ॥ ६४

दश निष्कं तु दातव्यं गोभूषांम्बराणि च ।
ऋत्विङ्मूर्तिपसभ्येभ्यो यथार्हं दक्षिणां दिशेत् ॥ ६५

स्वपूर्व(सम्पूज्य)गुरवे दद्याद्दीक्षितो निखिलं धनम् ।
अनुज्ञया गुरोस्तस्य किंचिदादाय जीवयेत् ॥ ६६

अथवा तु तदर्धेन पादेनाष्टांशतोऽपि वा ।
यथा तुष्टा भवेद्देवी तथा कुर्वीत सत्क्रियाम् ॥ ६७

एवं यः कारयेत्सर्वं हर्षान्नृपतिसत्तमः ।
श्रद्धया सहितो यत्र तत्र श्रीः सर्वतोमुखी ॥ ६८

चिरायुषश्च संहृष्टास्सर्वे तद्राष्ट्र(ज्य)वासिनः ।
सर्वेऽपि शत्रवस्तस्य पलायन्ते दिशो दश ॥ ६९

न पुत्रमरणं किञ्चित् द्रक्ष्यन्ति पुरुषाः कचित् ।
न तत्र पतिहीना स्त्री नाभार्यः पुरुषस्तथा(कचित्) ॥ ७०

न चाग्निजं(नैवोरग) भयं किंचिन्नैव रोगभयं तथा ।
न दुर्भिक्षभयं तत्र न व्यालाश्च न तस्कराः ॥ ७१

भवेयुर्धनधान्याढ्यास्सर्वे देवीप्रसादतः ।
यत्र तिष्ठति सा देवी दीक्षितो वा वरानने ॥ ७२

सैव काशी गयाऽयोध्या कामरूपादिकानि च ।
वाजपेयसहस्राणि हयमेधशतानि च ॥ ७३

कुर्वतो गण्यते पुण्यं अस्य पुण्यं न गण्यते ।
न शक्नोमि फलं वक्तुमहं च किमुतेतरे ॥ ७४

तपोभिर्लभ्यते दीक्षा सहस्रैर्जन्मभिः कृतैः ।
बहुनात्र किमुक्तेन सोऽहमेव वरानने ॥ ७५

इति सर्वं मया प्रोक्तं प्रायश्चित्ताभिषेचनम् ।
सर्वतन्त्राणि संक्षिप्य दध्नो घृतमिवाश्रि(वोत्थि)तम् ॥ ७६

इत्याकर्ण्य वचो देवी देवदेवस्य शूलिनः ।
कृत्वा प्रदक्षिणं गौरी परां ध्यात्वा प्रणम्य ताम् ॥ ७७

स्वतन्त्रं सात्विकावासमामोदं परमं ययौ ।
पुरा मया महादेवी तपसा तोषिताऽचिरात् ॥ ७८

आचार्य(राध्य)त्वं च सर्वेषां देशिकानामदान्मम ।
ततो लोकहितार्थाय भक्तानुग्रहकाम्यया ॥ ७९

तन्त्रं चिन्तामणिमिमं अत्र देवी ददौ मम ।
ददामि देवीभक्तानां हिताय जगतामपि ॥ ८०

चरामि सर्वलोकेषु दत्तदीक्षो महत्स्वहम् ।
इतीदं परमं गुह्यमाख्यानं वेदसंमितम् ॥ ८१

यः पठेच्छृणुयाद्वापि सर्वपापैः प्रमुच्यते ।
विप्रो वेदान्तवेत्ता स्यात्क्षत्रियो विजयी भवेत् ॥ ८२

वैश्यो धनमवाप्नोति शूद्रस्सुखमवाप्नुयात् ।
अर्थार्थी चार्थमाप्नोति मूको वाचस्पतिर्भवेत् ॥ ८३

भोगार्थी भोगमाप्नोति पुत्रार्थी पुत्रवान्भवेत् (माप्नुयात्) ।
जायन्ते सुखिनो मर्त्या नीरोगा दीर्घजीविनः ॥ ८४

तेजस्विनो यशस्वन्तो लक्ष्मीवन्तश्च धार्मिकाः ।
सुखिनो नित्यसम्पन्ना मुदिताश्शिवमर्च्य ते (वर्चसः) ।
इह भुक्त्वाखिलान्भोगानन्ते मोक्षमवाप्नुयुः ॥ ८५

इति सौभाग्यचिन्तामणौ पूर्वखण्डे द्विपञ्चाशः पटलः ॥

इति पूर्वखण्डः समाप्तः

## अथ पूर्वखण्डपरिशिष्टम्

## त्रिपञ्चाशः पटलः

### कूर्मशान्तिविधिः

**(सनत्कुमारसंहितातः)**

अथातः संप्रवक्ष्यामि कूर्मशान्तिमनुत्तमाम् ।
दृष्टश्चेदालये कूर्मस्तद्दोषफलमुच्यते ॥ १

गर्भगेहे चान्तराले मण्टपे गोपुरे तथा ।
प्रासादे च द्विशालायां सहस्रस्तम्भमण्टपे ॥ २

यागागारेऽथवा पाकशालायां च तथैव च ।
तत्र दिक्षु च दृष्टश्चेच्छान्तिं कुर्याद्विधानतः॥ ३

कूर्मे दृष्टे गर्भगेहे बिम्बस्य छिन्नता भवेत् ।
अन्तराले च दृष्टे च देशिकानां क्षयो भवेत् ॥ ४

मण्टपे गोपुरे दृष्टे दासीदासक्षयो भवेत् ।
प्रासादे च विशालायां पूजायाः क्षयसम्भवः ॥ ५

दृष्टे सहस्रस्तम्भे च मण्टपे देशपीडनम् ।
तथैव पाकशालायां दृष्टे राज्ञां क्षयो भवेत् ।। ६

यागागारे च दृष्टे वा दुर्भिक्षभयसूचकम् ।
मध्ये च कच्छपे दृष्टे फलमुक्तं क्रमात्प्रिये ।। ७

ततो दिशि फलं वक्ष्ये सावधानेन मच्छृणु ।
ऐन्द्रे दृष्टे राष्ट्रनाश आग्नेय्यां राजपीडनम् ।। ८

याम्ये शत्रुभयं चैव नैरृत्यां क्षोभकारणम् ।
वारुण्यां कच्छपे दृष्टे धनधान्यक्षयो भवेत् ।। ९

वायव्यां दिशि दृष्टश्चेत् वस्त्राभरणनाशनम् ।
कौबेर्यां दिशि दृष्टे च प्रजाक्षयकरं परम् ।। १०

ऐशान्यां दृष्टमात्रे च विभवोत्सवसंक्षयः ।
इति ज्ञात्वा दिशस्सर्वाः शान्तिं कुर्यादतन्द्रितः ।। ११

देशिकस्सर्वतन्त्रज्ञः ऋत्विजो वरयेत्क्रमात् ।
अष्टोत्तरसहस्रं तु मूलमन्त्रजपादिकम् ।। १२

कारयेत् गन्धपुष्पाद्यैः अर्चयित्वा पृथक् पृथक् ।
कुम्भद्वादशकं न्यस्य धान्यभारार्धतण्डुलैः ।। १३

तदर्धतिलसंभारान् पञ्चत्वक्पञ्चपल्लवान् ।
संपाद्यैवं विधानेन पञ्चगव्यान्यथाक्रमम् १४

अन्यत्र स्थण्डिलं कृत्वा व्रीहिभिस्तण्डुलैस्तिलैः ।
कुम्भमेकं प्रतिष्ठाप्य कूर्चवस्त्रादिसंयुतम् ।। १५

सौवर्णकूर्मप्रतिमां कुम्भोपरि निधाय च ।
प्रक्षाल्य पञ्चगव्येन पुण्याहं वाचयेत्ततः ।। १६

मध्ये देवीं समावाह्य कुम्भेष्वादौ पृथक् पृथक् ।
वाग्देवताष्टकं न्यस्य कामेश्यादित्रयं क्रमात् ॥ १७

गायत्रीं संपुटीकृत्य मूलमन्त्रेण चार्चयेत् ।
आवाह्य गन्धपुष्पाद्यैः कूर्मकूर्मेति मन्त्रतः ॥ १८

प्राणप्रतिष्ठां विधिवत् कृत्वा तन्मन्त्रतो यजेत् ।
धूपदीपादिकं कृत्वा नैवेद्यं च पृथक्चरेत् ॥ १९

स्थण्डिले वाऽथ कुण्डे वा होमं कुर्याद्विचक्षणः ।
अष्टोत्तरसहस्रं वाऽप्यथवाऽष्टोत्तरं शतम् ॥ २०

पञ्चाशद्वाऽथवा पञ्चविंशतिं वा यथाक्रमम् ।
तेभ्यश्च दक्षिणां दत्वा ताम्बूलैश्च विशेषतः ॥ २१

आदौ तत्प्रतिमां चैव देशिकाय महात्मने ।
दानं कुर्याद्विधानेन गोभूवस्त्रादिसयुतम् ॥ २२

एवं यः कुरुते भक्त्या सर्वपापैः प्रमुच्यते ।
तदृष्टदोषशान्त्यर्थं कारयेन्नृपसत्तमः ॥ २३

इति सौभाग्यचिन्तामणौ पूर्वखण्ड परिशिष्टे त्रिपञ्चाशः पटलः ॥

## चतुःपञ्चाशः पटलः

### शिथिलीशान्तिः

(शिथिली - நெருப்பெறும்பு, கரையான்)

अथ वक्ष्यामि देवेशि शिथिलीशान्तिमुत्तमम् ।
गर्भगेहाङ्गदेवीनां मध्ये वा देवतालये ॥ १

गर्भगेहस्य मध्ये वा अन्तरालेऽर्धमण्टपे ।
मण्टपे पुरतो देव्या विशालायां च गोपुरे ॥ २

प्रासादे धान्यशालायां सहस्रस्तम्भमण्डपे ।
तीर्थकूलेऽथवा यागशालायां पचनालये ॥ ३

उद्धृते रत्न(क्त)वल्मीकौ तद्दोषफलमुच्यते ।
गर्भागारे तु दृष्टश्चेत् पट्टभद्रो विनश्यति ॥ ४

दृष्टेऽन्तराले दाहाय बिम्बस्य भवति ध्रुवम् ।
मण्डपे शिथिलीयुक्ते मूर्तिपानां विनाशनम् ॥ ५

दर्शने च द्विशालायां वस्त्रभूषणनाशनम् ।
गोपुरे राष्ट्रनाशाय दर्शने भवति ध्रुवम् ॥ ६

प्रासादे यजमानस्य मरणं शिथिलीयुते ।
दृष्टे च धान्यशालायां पूजायाः क्षयकारणम् ॥ ७

दृष्टे सहस्रस्तम्भाख्ये मण्डपे क्षयसूचकम् ।
नृत्तमण्डपमध्ये चेत् तीर्थतीरे तु दृश्यते ॥ ८

देव्यास्तु गणिकादासीदासबृन्दक्षयो भवेत् ।
तथैव यागशालायां देशिकस्य तु मारणम् ॥ ९

पाकालये पावकानां नैवेद्यस्य च नाशनम् ।
गर्भालयेऽङ्गदेवीनां राजराष्ट्रविनाशनम् ॥ १०

मध्ये देवालये दृष्टे प्रजाक्षयकरं परम् ।
पूर्वस्यां दिशि दृष्टे च पवेरस्य च भिन्नता ॥ ११

दर्शने तु तथाऽग्नेय्यां कौतुकस्य तु पातनम् ।
दक्षिणे शिथिलीयुक्ते तस्य दोषफलं शृणु ॥ १२

स्नापनस्य तु बेरस्य नाशो हि भवति ध्रुवम् ।
नैर्ऋत्यां दर्शने जाते बलिबेरस्य नाशनम् ॥ १३

वारुण्यां भोगबेरस्य भिन्नाय(ता) च भवेद्ध्रुवम् ।
वायव्यां यागबेरस्य छिन्नता च भविष्यति ॥ १४

कौबेर्यां दिशि दृष्टं चेच्चाङ्गदेवीविनाशनम् ।
ऐशान्यां दृश्यते नूनमङ्गदेवस्य नाशनम् ॥ १५

समस्तदोषशान्त्यर्थं शान्तिं कुर्याद्विधानतः ।
आदौ विघ्नेशपूजां च ततः सङ्कल्पमेव च ॥ १६

पुण्याहं वाचयित्वाऽथ सर्वत्र प्रोक्षयेन्महीम् ।
पयो दधि घृतं चैव शकृन्मूत्राण्यनुक्रमात् ॥ १७

कल्पयित्वा पञ्चगव्यं तत्तन्मन्त्रेण देशिकः ।
स्थण्डिलं कल्पयित्वा तु वेदिमध्ये यवैश्शुभैः ॥ १८

चतुर्द्रोणयुतैर्भारैः व्रीहिभिस्तण्डुलैस्तिलैः ।
तदर्धार्धक्रमेणैव चतुरश्रं मनोहरम् ॥ १९

कुम्भानां विंशतिं चैव स्थापयेत् देशिकोत्तमः ।
उभयत्र लिखेत्पद्मं दळाष्टकसमन्वितम् ॥ २०

एकस्य कर्णिकामध्ये देवीं देवं समर्चयेत् ।
परितस्तु वशिन्यादीरर्चयेत् देशिकोत्तमः (स्वस्वमन्त्रतः)॥ २१

अन्यस्य कर्णिकामध्ये भूमिं वाराहमर्चयेत् ।
परितो दिक्पतीन्यष्ट्वा तत्तन्मन्त्रेण देशिकः ॥ २२

विन्यसेत्कुम्भरत्नं च दक्षिणां प्रतिमां पुनः ।
वस्त्रेणाच्छाद्य परितः प्रतिकुम्भं ततो गुरुः ॥ २३

मध्यकुम्भे तु निक्षिप्य पञ्चत्वक्पञ्चपल्लवान् ।
अश्वत्थोदुम्बरवटचूतजम्बूसमुद्भवान् ॥ २४

प्राणप्रतिष्ठां विधिवत् प्रतिमाया विधाय च ।
गन्धपुष्पादिनाभ्यर्च्य धूपदीपादिकं ददेत् ॥ २५

निवेद्य विधिवत्पश्चात् होमकर्म समाचरेत् ।
चतुर्दिक्षु विधानेन कृत्वा कुण्डचतुष्टयम् ॥ २६

प्रागादिकुण्डमारभ्य होमं कुर्याद्विधानतः ।
मध्ये दृष्टे तु वल्मीकौ पलाशकुसुमैर्हुनेत् ॥ २७

ऐन्द्रे तु दृष्टे पालाशसमिद्भिश्च हुनेत्ततः ।
आग्नेय्यां दर्शने जाते चाश्वत्थतरुसंभवैः ॥ २८

दक्षिणे शिथिलीयुक्ते वह्निवृक्षसमुद्भवैः ।
नैरृते वारुणे दृष्टे यज्ञाङ्गतरुसंभवैः ॥ २९

कौबेर्यां दिशि संभूते त्वपामार्गैर्हुनेत्ततः ।
ऐशान्यां दिशि दृष्टश्चेत् खादिरेण हुनेत्क्रमात् ॥ ३०

पायसेन हुनेत्तत्र नाळिकेरफलैस्सह ।
माषमुद्गाढकक्षीरपिण्डैश्चैव पृथक्पृथक् ॥ ३१

प्राज्यैराज्यैश्च सिक्त्वा तु पयोभिर्वाऽथवा प्रिये ।
देवीगायत्रिमनुना हुनेदष्टसहस्रकम् ॥ ३२

अथवाऽष्टशतं चैव विंशत्यष्टोत्तरं क्रमात् ।
व्याहृत्या संपुटीकृत्य बालयैवाथवा पुनः ॥ ३३

ऊर्ध्वीभूतेऽथ वल्मीकौ लाजैःशर्करया सह ।
विस्मृ(स्तृ)ते रत्नवल्मीकौ पृथुकैः पयसान्वितैः ॥ ३४

उद्दीयते चेच्छिथिली तिलैराज्यविमिश्रितैः ।
क्रमादतन्द्रितो देवि हुनेद्देशिकसत्तमः॥ ३५

शान्त्यर्थं काञ्चनमयीं वराहस्याकृतिं पुनः ।
पञ्चगव्येन मृत्तोयैः स्नाप्य पञ्चामृतेन च ॥ ३६

क्षीरेण शुद्धतोयेन स्नाप्य पीठे निवेश्य च ।
नववस्त्रेण संवेष्ट्य तत्पुरस्ताज्जपादिकम् ॥ ३७

आदौ वराहमन्त्रेण दशविप्रैः समं पुनः ।
भूसूक्तं ब्रह्मसूक्तं च विष्णुसूक्तं ततः परम् ॥ ३८

दिव्यं श्रीरुद्रसूक्तं च ततो वरुणसंज्ञितम् ।
देवीसूक्तं जपेन्मेधासूक्तं श्रीसूक्तमेव च ॥ ३९

ततोऽप्रतिरथं चैव मृतसंजीविनीं तथा ।
त्रैयम्बकं च रक्षोघ्नं ततो गौरीमिमाय च ॥ ४०

जप्त्वा तु चमकं पश्चात् अभयङ्करमेव च ।
दुर्गासूक्तं तदन्ते तु पञ्चशान्तिं जपेत्क्रमात् ॥ ४१

धूपदीपं ततो दत्वा नैवेद्यं च पृथक्पृथक् ।
चतुर्विधं च नैवेद्यं कारयेन्नृपसत्तमः ॥ ४२

भोज्यं भक्ष्यं च लेह्यं च शोष्यं चैव क्रमात्प्रिये ।
नैवेद्यं शुद्धतोयेन चारुकर्पूरवासितम् ॥ ४३

ताम्बूलं च निवेद्याथ पुनराचमनं ददेत् ।
ततो नीराजनं दद्यात् यथावद्देशिकोत्तमः ॥ ४४

प्रदक्षिणनमस्कारान् कृत्वा तु प्रार्थनां शुभाम् ।
नृपस्सन्निधिमभ्येत्य भक्तिनम्रस्त्वकल्मषः ॥ ४५

शिथिलीदृष्टशान्त्यर्थं नमस्कृत्य च देशिकम् ।
प्रतिमां नववस्त्रं च आचार्याय ददेत्सुधीः ॥ ४६

गोभूदानं ददेत्तस्मै तच्छान्त्यर्थं नृपोत्तमः ।
देवीकुम्भादिदशकं बेराणां प्रोक्षयेत् गुरुः ॥ ४७

वाराहं कुम्भदशकं सर्वत्र प्रोक्षयेन्महीम् ।
सहस्रभोजनं पश्चात् प्रोक्षणान्ते महेश्वरि ॥ ४८

तदर्धं वा तदर्धं वा ब्राह्मणान् भोजयेन्नृपः ।
एवं यः कुरुते भक्त्या सर्वपापैः प्रमुच्यते ॥ ४९

तस्य पुत्रादिसौभाग्यं भविष्यति न संशयः ।
राजराष्ट्राभिवृद्ध्यर्थं कारयेन्नृपसत्तमः ॥ ५०

क्षामक्षोभादिकं सर्वं नाशो भवति तत्क्षणात् ।
तापत्रयादिरोगांश्च कदाचिदपि न स्पृशेत् ॥ ५१

शान्तिं यः कारयेद्राजा तस्य भोगापवर्गकम् ।
तत्सर्वं स्वयमायाति शान्तिसूक्तविधानतः ॥ ५२

आचार्यं पूजयित्वैनं ऋत्विजो मूर्तिपानपि ।
एवं यः कारयेद्देवि जीवन्मुक्तो न संशयः ॥ ५३

इति सौभाग्यचिन्तामणौ पूर्वखण्डे चतुःपञ्चाशः पटलः ॥

पूर्वखण्डः समाप्तः

# सौभाग्यचिन्तामणौ

## उत्तरखण्डः

## प्रथमः पटलः

**माननिर्णयः**

राजोवाच—

भगवन् सर्वधर्मज्ञ सर्वभूतहिते रत ।
परावरज्ञ पुण्यात्मन् नमस्तेऽस्तु तपोधन ॥ १

त्वत्तः श्रुतमिदं शास्त्रं संक्षेपेणेति मे मतिः ।
दुर्बोधत्वेन शास्त्रस्य नोद्बुद्धमधिजायते ॥ २

सरहस्यमिदं शास्त्रं त्वत्तः को वक्तुमर्हति ।
तमहं जातु जानामि न सर्वज्ञान्महेश्वरात् ॥ ३

प्रासादप्रतिमादीनां लक्षणं चैव सर्वशः ।
तन्मानं तद्विधानानि सूचितानि त्वया पुरा ॥ ४

जयङ्कराणि भूपानां विशां पुष्टिकराणि च ।
अन्येषामपि सर्वेषां सर्वैश्वर्यकराणि च ॥ ५

यत्राहं करुणापात्रं भवतः करुणार्णव ।
वदस्व वदतां श्रेष्ठ वन्दिताखिलसत्तम ॥ ६

मुनिरुवाच—

साधु पृष्टं महाराज सर्वज्ञेन त्वयाऽधुना ।
तदेव शम्भुना गीतं पृष्टेन गिरिकन्यया ॥ ७

तत्प्रसादादिदं शास्त्रं मयापि नृपसत्तम ।
तदेव शृणु संप्राप्तं प्रवक्ष्यामि समासतः ॥ ८

पुरा सदाशिवः श्रीमान् मायावी मन्मथान्तकः ।
चकारानेकशास्त्राणि मुख्यान्याह द्विषट्पुनः ॥ ९

शैवं पाशुपतं चैव बौद्धमार्हतकं तथा ।
कापालं पाञ्चरात्रं च तद्वैखानसयामळौ ॥ १०

सौरं महाव्रतं चैव सोमसिद्धान्तलाकुलम् ।
तेषां भेदोपभेदैश्च तत्तच्छास्त्रं समाचरेत् ॥ ११

द्वादशास्य तु भेदानि यथेष्टं कारयेत्सुधीः ।
कर्षणादि प्रतिष्ठान्तं एकतन्त्रेण कारयेत् ॥ १२

सर्वदेवमयी देवी सर्वदेवमयः शिवः ।
अन्येन कौतुकं बध्वा ततोऽन्यैर्यदि संकरः ॥ १३

सांकर्यं यदि कुर्वीत राजराष्ट्रं विनश्यति ।
यच्छास्त्रेण यदारब्धं तच्छास्त्रेणैव कारयेत् ॥ १४

कृतं चेदन्यशास्त्रेण महादोषाय जायते ।
शैवं पाशुपतं सोमं वातुलं (लाकुलं)च चतुर्विधम् ॥१५

रौद्रं सौम्यमिति द्वेधा शैवं सौम्यमिति स्मृतम् ।
तदन्ये त्रिविधं तन्त्रं(द्वि) (सौम्यं)रौद्रमेवेति चोच्यते ॥१६

विंशत्संवत्सरे शून्यं तत्र रौद्रं न कारयेत् ।
सौम्ये प्रपूजिता देवी तत्र सौम्यफलप्रदा ॥ १७

महाव्रतं यामलं च सोमसिद्धान्त सौरकम् ।
चत्वारि षट् च शून्यं चेत् सौम्यशास्त्रेण कारयेत् ॥१८

सौम्येन पूजिता देवी सर्वसिद्धिं प्रयच्छति ।
तत्तत्तन्त्रक्रिया चैव शास्त्रदृष्टेन कर्मणा ॥ १९

बौद्धमार्हतकं चैव तत्तच्छास्त्रैस्समाचरेत् ।
अन्यशास्त्रेण संमिश्रे ते तु दोषाय कल्पते ॥ २०

पाञ्चरात्रं च शैवं च एकतन्त्रं न संशयः ।
शिवस्य हृदयं विष्णुः विष्णोश्च हृदयं शिवः ॥ २१

इयं च वैष्णवी माया शङ्करार्धशरीरिणी ।
तयोरप्यविनाभावात् तत्रैक्यं समुदाहृतम् ॥ २२

भेदभावनया तेषां भिन्नमन्त्रमुदाहृतम् ।
भिन्नमन्त्रा यतो देवि भिन्नैषां प्रतिपद्यते ॥ २३

विशेषास्तत्र राजेन्द्र यतो देवी जगन्मयी ।
सर्वतन्त्रोक्तमार्गेण पूज्यते साधकोत्तमैः॥ २४

मूलप्रकृतिरेषा तु कार्यकारणरूपिणी ।
सदसद्भावभावी सा जायते बहुधेच्छया ॥ २५

तस्मादशेषदेवानां इदं सामान्यतोदितम् ।
तदहं संप्रवक्ष्यामि यदुक्तं शम्भुना पुरा ॥ २६

बिम्बप्रासादवेश्मानां ऐक्यमाह महेश्वरः ।
मानसाराणि राजेन्द्र तानि सर्वाणि नान्यथा ॥ २७

दुर्बोधत्वाच्छिवस्साक्षात्तदा शिल्पिमयो गुरुः ।
तनुते सर्वकार्याणि कृपया क्रमपूजितः ॥ २८

उद्देशेनैव कुर्वन्ति मानवन्नियता (न्तियतः)ततः ।
उद्देशवद्भिः कुशलैः मानशास्त्रं हि मा(म)न्यते ॥ २९

उद्देशमपि सामान्यं पर्यायं प्राह शङ्करः ।
प्रासादतारपादाधिष्ठानद्वारोच्चगर्भगे ॥ ३०

यजमानोदयेनापि हस्तेनांगुलिभिस्त्रिभिः ।
मूलबेरविभागेन तुङ्गान्येकादशानि च ॥ ३१

प्रासादपादतुर्यांशं वरं तद्द्विगुणं वरम् ।
चितांश(न्त)विहितान्तर्ये जातं त्रित्रित्रयोदश ॥ ३२

श्रेष्ठानि नव तावन्ति मध्यमानि नवैव हि ।
नीचानि तानि श्रेष्ठानि अग्निसंख्यानि तानि च । ३३

सात्त्विकं राजसं चैव तामसं चेति वै त्रिधा ।
सात्त्विकं स्थानके योज्यमासने राजसं भवेत् ॥ ३४

तामसं शयने योज्यमत्र तल्पमुदाहृतम् ।
यानादौ त्रीणि योज्यानि रूपभेदेषु नादितः ॥ ३५

श्रेष्ठमध्यकनिष्ठानि नवमानासु सुन्दरि ।
पादात्पादैककं श्रेष्ठं पादतुल्यं तु मध्यमम् ॥ ३६

पादोनमधमं श्रेष्ठं पदतुल्यं तु मध्यमम् ।
पदोनमधमं श्रेष्ठं मध्ययोर्मध्यनीचयोः ॥ ३७

त्रिदशांशे कृतान्तर्ये सप्तविंशतितुङ्गता(दा) ।
संभवन्ति पुरः पश्चात्(रोऽवश्यात्) श्रेष्ठानि त्रित्रिभेदतः ॥

पादोदयमधिष्ठानमूर्ध्वमुत्तरसीमकम् ।
अधिष्ठानसमं हीनमर्धाधिक्यं तु मध्यम(क)म् ॥ ३९

अधिष्ठाद्विगुणं श्रेष्ठमन्तराण्यग्नितुङ्गवत् ।
द्वारायाम समोत्तुङ्गं द्वारपादाधिकं तथा ॥ ४०

द्वारादध्यर्धकं चैव द्वारात्स्कन्दाम्शहीनकम् ।
अन्यार्धपादाधिकयोः पादादिकसमं तयोः ॥ ४१

सनोभागीकृतान्तर्ये ज्यानानवदशोदया।
षडंशेन समान्तर्ये वसुवंशं हि तेषु यः(विहितेषु च) ॥ ४२

सप्तादशसमाभागां(हस्तां) श्रेष्ठादि नवपूर्ववत्।
दशभागी कृतागारे सप्तांशे कवयं परम् ॥ ४३

चतुरंशोदयं हीनं षड्विंशाद्राजितान्तरे।
सप्तविंशतितुङ्गानि तत्र(तति)माया भवत्यतः ॥ ४४

समश्चैव परे वापि ब्रह्मभागे विधीयते।
भागाधिकानि नेत्रस्य गळस्तनसमानि च ॥ ४५

श्रेष्ठमध्यकनिष्ठानि नवमानानि सुन्दरि।
सार्धद्विहस्तमारभ्य षडङ्गुलविवर्धना ॥ ४६

अत्य(ध्य)र्धहस्तमानानि सप्तविंशति तानि हि।
ब्राह्मी सा तारमानादि हस्तमानान्तकादिभिः।
मूलबेरप्रमाणानि सप्तसंख्यानि चोच्यते ॥ ४७

इति सौभाग्यचिन्तामणौ उत्तरखण्डे प्रथमः पटलः ॥

## द्वितीयः पटलः

**माननिर्णयः**

त्रिविधाङ्गुलिमानेन जङ्गमं मूलतोनुगम्।
मानाङ्गुलेन पञ्चाशत् सन्मायाङ्गुल्यमुत्तमम् ॥ १

ततस्ताद्व्यङ्गुलेनोनादासप्ताङ्गुलसीमकम्।
सप्तविंशतितुङ्गानि सप्ताद्या नव तुङ्गकाः ॥ २

स्वगेहेनार्चनाकर्मादर्चना समुदीरिता ।
मध्यमानि प्रमाणानि कर्म चोत्सवयोरपि ॥ ३

महोत्सवाच्चैकविंशाच्च योग्यामा(न्यु)त्कृष्टमान्यपि ।
मात्राङ्गुलेन त्रिद्व्येकषष्ठो द्विद्व्यङ्गुलाधिका ॥ ४

तुङ्गानि सप्तविंशाश्च गृहार्चानां तु नान्यथा ।
भर्तुर्दक्षिणहस्तेन मध्यमा मध्यपर्वणा ॥ ५

आयामायाम इत्युक्तं मात्राङ्गुलवरं ततम् ।
देहलब्धाङ्गुलैरात्मद्वित्रयाधिकषष्ठकान् ॥ ६

सप्तविंशतितुङ्गादि द्विद्व्यङ्गुलविवर्धनात् ।
उत्कृष्टे नवभिस्तुङ्गैः कर्तव्यार्चा महोत्सवे ॥ ७

स्नपनोत्सवकर्मार्चा मध्यमैर्नवभिर्मता ।
स्नपनोत्सवबेराभ्यां विनार्चा त्वधमैर्मता ॥ ८

अष्टांशाद्वा चतुस्त्रिंशदंशिते स्थापनोदये ।
चतुरंशं भजेत् तुङ्गं जङ्गमानां तु पूर्ववत् ॥ ९

सप्तविंशतिभिश्चैव ज्येष्ठादीनि च पूर्ववत् ।
कर्मार्चायां समावाह्योद्वासनान्तं यथाक्रमम् ॥ १०

अन्योन्यवरतुङ्गाः स्युः दशांशोनोदयापि वा ।
गृहीतप्रतिमोत्तुङ्गं मानाङ्गुलसमन्वितम् ॥ ११

एकद्वित्रयगोर्था(त्था)नां अङ्गुलीनां समं न(समुन्न)येत् ।
आयव्ययातिरिक्तांशं योनिं चांशाद्विधीयताम् ॥ १२

बेरोदयत्रिगुणिते शिष्टमानं नगैर्ह(र्हृ)ते(तैः) ।
चतुर्भिर्गुणिते पञ्च हृते शेषं हृतं भवेत् ॥ १३

नवभिर्गुणिते सप्तहृते सौरादिकं (रत्रिकं) दिनम् ।
बेरोच्चमष्टगुणितं सप्तविंशतिभिर्हृतम् ॥ १४

दृष्टमश्वादिभिर्विद्यात्तच्छेषं हि चतुर्गुणम् ।
अर्धं हृतं नवांशं तच्छेषभागं हि भे(छिभे)हृतम् ॥ १५

तत्तत्फलानि चैतेषां विद्यन्ते वरवर्णिनि ।
आयादशनवृद्धिस्स्यात् व्ययवृद्ध्या व्ययो भवेत् ॥ १६

बेरोदयत्रिगुणितं योनिः स्याद्विष्वभीहृतम् ।
रत्नहे(सालग्रा)मशिलाचक्रे श्रीचक्रे हव्यवाहने ॥ १७

नायव्ययपरीक्षा स्यात् भूसुराणां तथार्चने ।
सर्वदेवमया ह्येते तेषु नित्यं स्थिताः सुराः॥ १८

नारीषु गुणशीलासु पूजनीया तथाम्बिका ।
चतुरङ्गुलतोर्ध्वन्तु षण्णवत्र्यङ्गुलावधि ॥ १९

यजमानानुकूलं चेच्छोभनाय प्रकल्पते ।
स्थूलाकारेण भित्तौ तु सूक्ष्माकारेण भूतले ॥ २०

यथा सुस्पष्टकोणाग्रं बिन्दुयुक्तं प्रजायते ।
सकलं बिम्बरूपं तु निष्कलं चक्रमुच्यते ॥ २१

चक्रं बिम्ब समायुक्तं भुक्तिमुक्तिफलप्रदम् ।
प्रतिमान्यासमार्गेण चक्रमार्गं प्रकल्पयेत् ॥ २२

वारेषु सूर्यसौराणां विनान्यैश्शुभदा स्मृता ।
रौद्रकर्मणि भौमः स्यात् शान्त्यादिषु च भार्गवः॥ २३

दिननक्षत्रयोगानि स्युः बहुन्यबहूनि च ।
भर्तुर्नामर्क्षजन्मक्षादिकद्विद्वित्रिषड्वसु ॥ २४

नवमानि शुभानि स्युर्नान्यदा शुभदानि हि(च) ।
तस्करो भुक्तिशक्तिश्च धन्यो राजा च षण्डकः ॥ २५

निर्ह्रतीरध(निर्हरेदथ)नप्रेक्ष्य नवान्तानि भवन्ति हि ।
भांशे राशिं विनिश्चित्य भर्ता राश्या समं नयेत् ॥ २६

शूलस्थापनहोरायां सार्धं नश्यति वार्धकम् ।
बेरोदये त्यथाष्टांशे शेषाः द्वारि व्ययस्य तु ॥ २७

पादादारभ्य पद्मस्य स्थावराणां तु तुङ्गकम् ।
जङ्गमानां भवेत्पादा शेषमासनपद्मकम् ॥ २८

अन्येषां प्रथमारम्भं जन्मभं य(यु)त्प्रतिष्ठिते ।
त्रिचतुः पञ्चभागांशे तत्षट् सप्ताष्टरिक्तके ॥ २९

त्रिभागमूर्ध्वपद्मं स्यात् शेषं पीठस्य तुङ्गकम् ।
पद्माधस्स्थोपवीतं च प्रतिलोमेन योजयेत् ॥ ३०

पद्मोच्चाष्टांशभागेन ऊर्ध्वपद्मदलोदयम्(ः) ।
अधः पद्मत्रिभागेन तारमूर्ध्वं रहस्यकम्(नभस्य तु) ॥ ३१

बेरोच्चे पञ्चपञ्चार्धषडंशैर्विंशकं मतम् ।
अर्धाधिक्यत्रिपादं वा द्विगुणं चाश्रये(चोच्छ्रये)ततम् ॥ ३२

विस्तारं जगती बाह्या दशोना मध्यपट्टिका ।
तदष्टांशेन विस्तारमथ(र्ध) पद्मदलाग्रकम् ॥ ३३

पीठोच्चे सूर्यभागेंशं पद्मक(पादुका)त्रितयार्धकम् ।
जगत्युत्थेन ककुभं पद्ममध्यां(ध्यां)शकं गलम् ॥ ३४

कंपं पादत्रिभागं स्यात् अर्धांशं (कंपार्धं)पद्मपट्टिका ।
सार्धांशं महती पट्टी यथाशोभं प्रवेशनम् ॥ ३५

उपपीठं तथाद्यंशं पादुकाद्यंशकं गलम् ।
कंपं पादत्रिभागं स्यात् कंपार्धांशं गलं मतम् ॥ ३६

अंशोऽब्जाद्यंशविस्तारं महती पट्टिका भवेत् ।
बेरोदयत्रिभागैकं आसनस्योदयं भवेत् ॥ ३७

अष्टांशेनार्धकं वापि विस्तारं पादपीठवत् ।
पादमध्यात्त्रिगुणितात् पादपीठं सकृद्भवेत् ॥ ३८

इति दोषाः समाख्याताः तावन्तश्च गुणाः स्मृताः ।
तयोर्गुणाधिकं ग्राह्यं समं वा तदलाभतः ॥ ३९

इति सर्वं समाख्यातं देव्या मानविनिर्णयम् ।
सर्वदेवेषु सामान्यं बुध्यस्व वरवर्णिनि ॥ ४०

इति सौभाग्यचिन्तामणौ उत्तरखण्डे द्वितीयः पटलः ॥

## तृतीयः पटलः

**बिम्बसामान्यलक्षणम्**

**श्रीदेव्युवाच—**

देवदेव महादेव सच्चिदानन्दविग्रह ।
दुर्बोधान्मानशास्त्रस्य भूय इच्छामि वेदितुम् ॥ १

मानभेदानि तस्यास्तु रूपभेदानि यानि च ।
तथैव करुणाभावाद्वदस्व करुणार्णव ॥ २

**ईश्वर उवाच—**

भूय एव प्रवक्ष्यामि दुर्बोधत्वेन सुव्रते ।
सर्वेषामेव शास्त्राणां अन्योन्यं भेदतोदितः ॥ ३

एतस्मिन्यत्समाख्यातं स सर्वेषु विधीयते ।
न विरोधोऽत्र सर्वाणि सर्वदेवमयो यतः ॥ ४

एतच्छास्त्रेण योऽभ्यस्तः सोऽनन्तफलमश्नुते ।
मयैव दर्शिता त्रेधा (स्तिस्रः) सिद्धान्ताः सिद्धिदायिनः ॥५

अन्योन्यमविनाभूताः शिवशक्त्यच्युताभिधाः ।
मध्यमिश्रावुभौ विद्धि मध्यमेनाप्यमिश्रितः ॥ ६

तस्माच्छक्तियुतं शंभुं अर्चयन्ति विपश्चितः ।
तथा रमापतिं देवं रमया सहितं सदा ॥ ७

अन्येऽपि मुनयः सांख्याः यद्भेदात्सिद्धिमागताः ।
सैव माया वर्णरूपा तथा प्रकृतिपूरुषौ ॥ ८

ततस्तु सर्वभावा सा पुरुषं चाप्यमोहयत् ।
ततोऽहमिति सर्वात्मा सर्वेषां च प्रवर्तकः॥ ९

तयैव माययोद्बुद्धः सर्वैर्भावैस्तमैक्षत ।
न प्रवर्तककर्माणि प्रवृत्तिर्वा तदीक्षताम् ॥ १०

तान्प्रवर्तयितुं भावान्न शक्तोऽभून्महेश्वरः ।
सरूपमविनाभूतं प्रधानं समचिन्तयत् ॥ ११

तस्य चिन्तयमानस्य शब्दब्रह्माभ्यवर्तत ।
स शब्दो वर्णरूपेण विभक्तः समपद्यत ॥ १२

ततस्त्रिपञ्चधा ध्या(धृ)त्वा सद्योभावत्वमागतः ।
इच्छायाः शक्तयो ह्यस्याः कर्मणा सह हेतयः ॥ १३

बभूवुः सर्वतेजांसि भूषणानि वरानने ।
मायामयी महाभागा जगन्मोहनरूपिणी ॥ १४

शृङ्गारैकरसावासा शृङ्गाररसरूपिणी ।
पाशाङ्कुशेक्षुकोदण्डपञ्चबाणलसत्करा ॥ १५

मोहिनी सर्वलोकानां सृष्टिस्थित्यन्तकारिणी ।
तां दृष्ट्वा पुरुषः साक्षान्मोहात्तन्मयतां गतः ॥ १६

तत्क्षणादेव देवेशि तदैक्यं समुपागतः ।
तद्रूपस्तु ततो जज्ञे वशीकृतजगत्त्रयः ॥ १७

यथा दृष्टा तु सा देवी तस्य रूपं तथाऽभवत् ।
निधाय तस्मिन् कामा(ला)ख्ये स्वरूपे जगतां ततिम् ॥ १८

जगत्प्रविष्टौ तावेव क्रीडतोऽद्यापि सुन्दरि ।
तस्य लोकस्य रक्षार्थं सर्वलोकहितैषिणी ॥ १९

स्वविद्यां स्वयमेवार्या ब्रह्मणे समुपादिशत् ।
तदुपासनयैवैतन्मुक्ताः स्युस्तत्प्रमोहतः ॥ २०

प्रवृत्तौ निवृत्तौ च कारणं सैव वक्ष्यते ।
श्रुतेऽप्यदृष्टे भावे तु यतते न कश्चिज्जनः ॥ २१

तस्मात्तयैव कथिता प्रतिमा स्वात्मनः पुरा ।
पुरैकं रूपमादाय सर्वभावा ततो यतः ॥ २२

पुरा भवस्य भावस्य श्रैष्ठ्यमादौ तयोदितम् ।
स्वामिभावे च भृत्यत्वे ततो लोकः प्रवर्तते ॥ २३

जगत्कारणभावत्वं कर्तृत्वं भोक्तृता तथा ।
गुणित्वं च प्रधानत्वं प्रकृतित्वं च संमतम् ॥ २४

तस्मात्सर्वहिता देवी सर्वतुङ्गासनं गता ।
तदधः सर्वदेवानां आसनं परिचक्षते ॥ २५

अङ्गावृति(त्ति)विहीनं तत्पूजनं केवलार्थकम् ।
साङ्गमभ्यर्चनं देवि भुक्तिमुक्तिक्रियापदम् ॥ २६

साङ्गेन प्रतिमां कृत्वा पूजनीया वरानने ।
चक्रं च पूर्वमाख्यातं प्रतिमा साऽपि सूचिता ॥ २७

दुर्बोधः प्रतिमायास्तु पुनरेव प्रचक्षते ।
सकलं निष्कलं चेति प्रतिमा द्विविधोच्यते ॥ २८

लिङ्गं चक्रं च बिम्बं च शैवादिषु यथाक्रमम् ।
सर्वत्र प्रतिमायुक्तं भोगमोक्षफलप्रदम् ॥ २९

प्रशस्ता प्रतिमा चात्र चक्रं वा तु द्वयं वरम् ।
शैललोहसुधामृद्भिः शर्करादारुकादिभिः ॥ ३०

यथावत्सम्भवं मध्ये कारयेत्प्रतिमां शुभाम् ।
प्रासाद पद(श)तो मानं गर्भमानेन वा भवेत् ॥ ३१

द्वारमानेन वा कुर्यात्स्तम्भमानं ततः परम् ।
हस्तमानेन वा कुर्यात् मूलबेरप्रमाणतः ॥ ३२

आदिप्रासादविस्तारपदव्या सुविनिश्चितम् ।
तदर्धं गृह्य चोत्सेधं तन्मानं श्रेष्ठमुच्यते ॥ ३३

तस्योत्सेधचतुर्भागं त्रिभागं बाह्यमानतः ।
कन्यकाप्रतिमोत्सेधं द्विभागं मध्यमं भवेत् ॥ ३४

त्रिविधं तत्समाख्यातं प्रतिमोत्सेधमुत्तमम् ।
इति मानप्रमाणेन त्रिविधं बिम्बमुच्यते ॥ ३५

यस्य गर्भगृहस्यार्धकन्यासं प्रतिमोच्छ्रितम् ।
नवधा मानमित्युक्तं कनिष्ठादित्रयं त्रयम् ॥ ३६

द्वारमानेन कर्तव्यं उत्तमं द्वारतः समम् ।
नवभागैकहीनं तु मध्यमध्यं विधीयते ॥ ३७

अष्टांशहीनमधमं त्रिविधं प्रतिमानकम् ।
तदेव स्तम्भमानं स्यादुत्तमाधममध्यमाः ॥ ३८

स्तम्भमानमिति प्रोक्तं हस्तमानमतः परम् ।
दशपञ्चाधिके हस्ते प्रतिमा श्रेष्ठमुच्यते ॥ ३९

दशभिर्मध्यमा ज्ञेया पञ्चहस्तं तु कन्यसम् ।
त्रिर्वृद्ध्या द्वादशान्तं स्यात् हस्तमानमितीष्यते ॥ ४०

अल्पप्रासादमानं स्याद्धस्तमानं न कारयेत् ।
प्रतिमानं त्रिधा कृत्वा भागैकमधिकोच्छ्रयम् ॥ ४१

शयनं चान्तिके कुर्यादासनं तु प्रवक्ष्यते ।
चतुर्भागैकभागं स्यात् प्रतिमायास्तु मानकम् ॥ ४२

पञ्चभागैकभागं स्यात् प्रतिमायास्तु मानकम् ।
पञ्चभागैकभागं स्यात्स्थानके तु विधीयते ॥ ४३

मूलबेरप्रमाणं स्यादुद्दिष्टं कथितं मया ।
अर्चनाप्रतिमां वक्ष्ये यथावदनुपूर्वशः॥ ४४

अङ्गुष्ठादिविधिस्तस्य गृहार्चाबिम्बमुच्यते ।
तेषामेवातिकर्तव्यं मात्राङ्गुलविधानकम् ॥ ४५

अर्चनप्रतिमां कृत्वा मूलबेरवशानुगाम् ।
द्वादशाङ्गुलमित्युक्तं षोडशाङ्गुलमेव च (वा) ॥ ४६

अष्टादशाङ्गुलं प्रोक्तं चतुर्विंशाङ्गुलं तु वा ।
अष्टाविंशाङ्गुलं वाऽपि द्वात्रिंशाङ्गुलमेव वा ॥ ४७

प्रतिमायार्धसंयुक्तं आलयं पञ्चकोच्छ्रयम् ।
द्वादशाङ्गुलमायामं ततो द्वात्रिंशकान्तकम् ॥ ४८

एकादशकमित्युक्तं एकादशकसंख्यया ।
एकैकं प्रतिमोत्सेधं कारयेद्दर्शनं शुभम् ॥ ४९

द्वादशाङ्गुलमायामं क्षुद्रबेरमिति स्मृतम् ।
तद्विना तु न कुर्वीत कारयेद्यदि दोषभाक् ॥ ५०

लब्धोत्सेधाङ्गुलं तत्र अष्टभिर्गुणितं भवेत् ।
सप्तविंशतिभिर्हीनं शेषाश्विन्यादिसंख्यया ॥ ५१

तत्तदर्यादि ऋक्षाणां जातराशिस्तु योजिता ।
तस्योत्सेधाङ्गुलं कृत्वा त्रिगुणीचाष्टभिन्नकम्॥ ५२

शेषध्वजश्च धूम(प)श्च सिंहश्वानेन यो वृषः ।
गर्दभो गजकाकश्च अष्टयोन्यः प्रकीर्तिताः ॥ ५३

ध्वजः स्यादर्थलाभं तु धूपं कलहमादिशेत् ।
सिंहे जयं प्रकुर्वीत श्वाने चान्तर(नन्त)रोगता॥ ५४

वृषे तु सस्यलाभाय गर्दभे मरणं विधिः।
गजे तु पुत्रलाभाय काके सर्वार्थनाशनम् ॥ ५५

एते नक्षत्रयोनेश्च संयुक्तं कारयेच्छुभम् ।
इति ते कथितं देवि सामान्यमपि लक्षणम् ॥ ५६

इति सौभाग्यचिन्तामणौ उत्तरखण्डे तृतीयः पटलः ॥

# चतुर्थः पटलः

## बिम्बानां मानभेदकथनम्

सर्वेषां देवतानां च तत्तद्भावानुभावतः ।
तद्बिम्बानां च सर्वेषां मानभेदः प्रचक्ष(क्ष्य)ते ॥ १

सर्वभावोन्नतत्वेन मानमस्या न वक्ष्यते ।
उत्तमं दशतालेन ब्रह्मविष्णुमहेश्वरान् ॥ २

उमां दुर्गां च लक्ष्मीं च अग्निश्चामुण्डिमेव च ।
मध्यमं दशतालेन क्षेत्रपालं तथैव च ॥ ३

आदित्यवसुरुद्रांश्च आर्याकावत्रिधारिणी ।
अश्विनौ देववीरांश्च कनिष्ठं दशतालतः ॥ ४

वाराही च तथेन्द्राणी कौमारी च सरस्वती ।
नारायणी च कर्तव्या नवतालप्रमाणतः ॥ ५

अग्निश्चण्डेश्वरश्चैव यमश्च वरुणस्तथा ।
वायुश्चापि कुबेरश्च तार्क्ष्यगन्धर्वयक्षकाः ॥ ६

सिद्धचारणनागेन्द्र विद्याधरगणोरगाः ।
उत्तमं नवतालं तु बिम्बेषु वरवर्णिनि ॥ ७

अर्धतालविहीनं तु दैत्येशो निरृतिस्तथा।
अङ्गुलं नवतालं स्याद् दिव्यमानुषमानकम् ॥ ८

राक्षसासुरबिम्बेषु मध्यमं नवतालकम् ।
अधमं नवतालं स्याच्चतुस्तालं तु भूतकाः ॥ ९

त्रितालं किन्नराणां तु द्वितालं पशवः स्मृताः ।
पक्षिणः तालमात्राः स्युः एवं तालक्रमो भवेत् ॥ १०

तस्याभरणभावेन सर्वेषामेव चोदितम् ।
कृत्यं पञ्चविधं सृष्ट्वा सैव भावमयी पुरा ॥ ११

उभयं त्रिषु विन्यस्य चकार त्रिविधं च तत् ।
तत्तत्कर्मानुगुण्येन गुणं च त्रिविधं ततः ॥ १२

गुणानुभावाद्रूपं च त्रिधा भिन्नमजायत ।
अन्योन्यमिश्रभावेन नवरूपं च जायते ॥ १३

तदधीने समस्ते तत्तदेकादशधा भवेत् ।
एकैकगुणरूपाणि ब्रह्मविष्णुशिवाख्यया ॥ १४

एका प्रवर्तकत्वेन वाञ्छत्यन्योन्यसंश्रयम् ।
अन्योन्ययोगभावेन द्वन्द्वं द्रुतमजायत ॥ १५

तेभ्यः प्रवर्तितं लोकं तत्तद्गुण्यविभागतः ।
आसीद्दुष्टं च पुरुषं तत्र देवीं तु योजयेत् ॥ १६

अष्टतालं नमास्तत्र सप्ततालं पिशाचकः ।
षट्तालं कुब्जमानं तु पञ्चतालं विनायकः ॥ १७

वामनस्य तथैव स्याच्छिष्टमन्योन्यजीवनम् ।
कृतं न्यूनाधिकं तत्त्वं स्वस्मिन्नेव स्वमायया ॥ १८

अन्यूनमधिकेनेदं तन्निरासाय पार्वति ।
दुःखत्रयान्विताभावादिति रूपं वरानने ॥ १९

तेषां न्यूनातिरेकेण तथैव द्विविधान्यभूत् ।
ततो बहुतरं रूपं प्राधान्येनैव वक्ष्यते ॥ २०

तेषु यन्निर्गुणं रूपं भावनामात्रमेव तत् ।
सदसद्गुणभूयिष्ठं श्रीचक्रं समुदाहृतम् ॥ २१

अशेषगुणसङ्घातं पाशाङ्कुशधनुर्धरम् ।
एकैकगुणभूयिष्ठं रूपं ब्रह्मादिकं प्रिये ॥ २२

पूर्वं प्रवर्तितं तेन रूपमार्गेण यज्जगत् ।
अद्यापि रक्ष्यते येन तदेव प्रोच्यते मया ॥ २३

योगाय पूर्वतन्त्रं तु ते तु पञ्चममीरितम् ।
क्षेमाय कथ्यते विंशद्रूपाण्यङ्गाभिधानि च ॥ २४

आत्मना बहुरूपाऽसौ स्वरूपैरेव रक्षति(क्ष्यते) ।
यत्रैव स्थाप्यते बिम्बं रूपमद्वैतमम्बिके ॥ २५

तत्रैव परितः स्थाप्याः शक्तयो रक्षणावहाः ।
तत्रैव ग्रामरक्षार्थे पुरस्य नगरस्य वा ॥ २६

शक्तयस्तु प्रतिष्ठाप्याः सर्वदा क्षेममिच्छता ।
काली चैव महाकाली चर्ममुण्डी च चण्डिका ॥ २७

चामुण्डी च महाकाली तद्रूपाः शक्तयो नृप ।
ग्रामोत्तरगुणाकारा अन्योन्याधिकवैभवाः ॥ २८

पृथगुक्ता विशेषेण यामले बहु विस्तृतम् ।
अतो न कथितं देवि सूचितं केवलं मया ॥ २९

मूलदेव्याः प्रमाणं च प्रवक्ष्यामि समासतः ।
प्रकृतिश्च प्रधानं च कामकोष्ठं च शाम्भवि ॥ ३०

पर्यायवाचका ह्येते पराम्बा त्रिपुरेति च ।
प्रवर्ततेति प्रकृतिः प्रधानं कर्तृभावतः ॥ ३१

क इति ब्रह्मणो नाम सर्वतन्त्रमुदाहृतम् ।
कामो मनीषा लोकानां तस्यान्तं तत्र संस्थितम् ॥ ३२

तत्कामकोष्ठकं नाम पुनरन्यं वदामि ते ।
कामो भोगस्तु को ब्रह्मा तद्द्वयं यत्र संस्थितम् ।। ३३

तत्कामकोष्ठकं नाम परेति परमार्थतः ।
अम्बा लोकप्रसूस्तेन त्रैगुण्यं त्रिपुरा स्मृता ।। ३४

सैवाश्रयाऽऽश्रिता चैव वर्ण्यते वरवर्णिनि ।
वामात्सृज्य(त्य) वसेत्साधु तद्ब्रह्म परमं भवेत् ।। ३५

अज्ञानाद्द्वन्द्वभूतां तां (तानां) तद्ब्रह्म बहुधा विदुः ।
यत्र तिष्ठति सा देवी शिवः स्याच्छोभनत्वतः ।। ३६

मयि केचिच्छिवत्वं तु दृष्ट्वा तां अभिवासते ।
स्थितिरेव (रेव च)शि वं मत्वा तद्भावाद्धरिणा च ताम् ।।

ब्रह्मणो नामसाधर्म्यात् ब्रह्मणः(ह्माणीं) केचिदिच्छति ।
पार्वती च रमाशक्तिरूपाऽत्रैषाऽभिपूज्यते ।। ३८

तद्रूपैकविहीनोऽपि न कदाचित्प्रवर्तते ।
सर्वभावस्थिता चापि विशेषेण मदन्तिके ।। ३९

वर्तते सैव भवति पूज्यते विबुधोत्तमैः ।
मदाश्रयास्यहं यस्मात् ये त्रि(वेम्नि) रूपाणि तेऽम्बिके ।।

विनैतन्न(?)पयोः शक्ते क्रोधारुसममञ्जसा ।
श्रोत्र(तृ)वक्त्र(क्तृ)समायोगाद्विना शास्त्रं न कारयेत् ।। ४१

तवापि त्वत्स्वरूपं तु दुर्बोधत्वेन विद्यते ।
अतो दोषान्प्रवक्ष्यामि रूपमाने त्वदग्रतः ।। ४२

इति सौभाग्यचिन्तामणौ उत्तरखण्डे चतुर्थः पटलः ।।

## पञ्चमः पटलः

### प्रतिमालक्षणम्

स्थितं निषण्णं शयनं विम्बं त्रिविधमुच्यते।
प्रवर्तकतया तस्याः ध्रुवे तु शयनं न हि ॥ १

शयनं भोगबेरं स्यात् सशिवा केवलाऽपि वा ।
पाशाङ्कुशधनुर्बाणसंयुक्तं सुस्थितं भवेत् ॥ २

सधनुर्विधनुश्चेति निषण्णं द्विविधं भवेत् ।
पाशांकुशाभयवरैः शिवाङ्गे(न्ते) च विधीयते ॥ ३

विष्णुचिह्नं शिवाङ्गे तु जङ्गमं बिम्बमुच्यते ।
सधनुर्विधनुर्वाऽपि विष्णुचिह्नमथापि वा ॥ ४

स्वतन्त्रे तु प्रकर्तव्यं प्रतिष्ठापूर्वचोदितम् ।
रूपभेदमिह प्रोक्तं साधु सर्वं मया यतः ॥ ५

स्थानकर्मसमं पादं तस्य सूत्रं विधीयते ।
पुरश्च पार्श्वयोः पृष्ठे चतुःसूत्रं प्रसारयेत् ॥ ६

मध्यमध्यमसूत्रस्य गुरु(द)रन्ध्रं प्रलम्बितम् ।
पार्श्वमध्यं तदेवोक्तं कायमध्यमसूत्रतः ॥ ७

मध्यमस्य (मं स्यात्) पुरो मध्यादूर्ध्वं सूत्रं प्रलम्बयेत् ।
शिखाग्रे मौलिमध्ये तु भ्रूमध्ये तु पुरो मतौ ॥ ८

नासाग्रलम्बितं सूत्रं स्तनयोत्रान्तमुन्नतम् ।
नाभिमध्ये तु पूर्वे तु श्रोण्यूर्ध्वे स्पर्शनं भवेत् ॥ ९

सूत्रान्तयोनिमध्यं तु पादयोश्च प्रलम्बयेत् ।
तस्मान्मौल्यग्रनीव्यन्तं रुद्रमानमिति स्मृतम् ॥ १०

मौलिमध्यं तु पञ्चांशं ललाटाद् द्व्यङ्गुलं मतम् ।
तत्सूत्रा(त्) हनुमध्यं स्याद्यवकालोकमुच्यते ॥ ११

हिकामध्यार्धमूनोनिर्वं रसमात्रं विधीयते ।
सूत्रान्ताद्धि विनिर्गन्तुं रसमात्रं विधीयते ॥ १२

तत्सूत्राद्योनिमूलं तु द्विमात्रं तु विधीयते ।
तत्सूत्रादूरुमूलं तु मध्यान्निम्नं(त्रं)त्रि(निर्वृति)मात्रकम् ॥ १३

तत्तद्विद्धांशमूलं तु कौ(का) शिकाङ्गुलमुच्यते ।
जङ्घामध्येऽष्टमात्रं स्यान्नलकाष्टार्धमात्रकम् ॥ १४

तत्सूत्रमङ्गुष्ठाग्राणि तज्जानुद्वयमात्रकम् ।
एवं नीवीकर्म प्रोक्तं अन्योन्याद्यन्तरं भवेत् ॥ १५

योनिमूलान्तरं मात्रमूरुमध्यं द्विमात्रकम् ।
नालीकान्तषडङ्गुल्यं तत्क्षणे पञ्चमात्रकम् ॥ १६

पार्ष्ण्योरन्तरभावे तु प्रवदन्तु षडङ्गुलम् ।
अङ्गुष्ठान्तरमार्गं तु अष्टमात्रं विधीयते ॥ १७

कायमध्ये तु पूर्वे तु द्व्यन्तरं सप्तमात्रकम् ।
तत्सूत्रशिरपृष्ठं तद्व्यङ्गुलं नन्दमात्रकम् ॥ १८

सूत्रात्तु पूर्वहिक्का तद् द्व्यङ्गुलं तु विधीयते ।
तत्सूत्रात्ककुदे पृष्ठे पञ्चमात्रं विधीयते ॥ १९

कायमध्यस्तनाग्रान्तं रव्यङ्गुलमिति स्मृतम् ।
तत्सूत्राद्बृहतीपृष्ठे तत्षण्मात्रमिति स्मृतम् ॥ २०

स्तनाधो मध्यपूर्वे तु अर्धमात्रमिति स्मृतम् ।
तत्सूत्रात्पृष्ठदेशे तु पञ्चमात्रमिहोच्यते ॥ २१

नाभिप्रदेशे पूर्वे तु अष्टमात्रं विधीयते ।
तत्सूत्रात्पृष्ठदेशे तु चतुरङ्गुलमीरितम् ॥ २२

श्रोणिदेशे तु पूर्वे तु द्वादशाङ्गुलमीरितम् ।
तत्सूत्रात्पृष्ठदेशे तु षण्मात्रं तु विधीयते ॥ २३

पुरमध्यं तु पूर्वे तु नवमात्रमिति स्मृतम् ।
तत्सूत्रपृष्ठदेशे तु षण्मात्रं तु विधीयते ॥ २४

कटिप्रदेशपूर्वे तु त्वन्तरं तु त्रयोदश(शाङ्गुलम्) ।
तत्सूत्रात्पृष्ठदेशे तु अष्टमात्रमिति स्मृतम् ॥ २५

ऊरुमध्येषु पूर्वे तु नवमात्रमिति स्मृतम् ।
तत्सूत्रात्पृष्ठदेशे तु त्र्यङ्गुलार्धं विधीयते ॥ २६

जानुमध्यमपूर्वे तु त्र्यङ्गुलान्तमुदाहृतम् ।
तत्सूत्रात्पृष्ठदेशे तु चतुरङ्गुलमीरितम् ॥ २७

जङ्घामध्यमपूर्वे तु त्र्यङ्गुलार्धमिति स्मृतम् ।
तत्सूत्रात्पृष्ठदेशे तु चतुरर्धाङ्गुलं भवेत् ॥ २८

सूत्रात्तु पृष्ठ(पूर्व)देशे तु त्र्यङ्गुलार्धं विधीयते ।
तत्सूत्रात्पृष्ठनालीकाद् द्व्यङ्गुलं तु विधीयते ॥ २९

करमध्यमसूत्रात्तु पुरतः पृष्ठतस्तु तत् ।
एवं लक्षणसंयुक्तं कारयेच्छिल्पिना बुधः ॥ ३०

मुखपर्यन्तसूत्राणि कर्ण(ण्ठ)बाह्यं तथोच्यते ।
कक्षपर्यन्तसूत्राणि बाहुपर्यन्तमुच्यते ॥ ३१

तिर्यङ्मुखप्रविस्तारं रुद्राङ्गुलमिति स्मृतम् ।
स्तनचूचुकविस्तारं रुद्राङ्गुलामिति स्मृतम् ॥ ३२

वक्त्रबाह्यगतं सूत्रं स्तनचूचुकमध्यमे ।
ऊरुमध्यात्तु जङ्घानां अङ्गुष्ठनखबाह्यके ॥ ३३

रुद्राङ्गुलतदायामे ऊर्ध्वसूत्रं प्रलम्बयेत् ।
कर्णबाह्यं तु विस्तारं त्रिपञ्चाङ्गुलकं भवेत् ॥ ३४

स्तनमण्डलमायान्त द्व्यन्तरं तिथिमात्रकम् ।
तर्जनीमध्यदेशो तु ऊर्ध्वसूत्रं प्रलम्बयेत् ॥ ३५

कक्षाभ्यन्तरकं सूत्रं कक्षाद्बाह्यं तु लम्बनम् ।
बाहुपार्श्वगतं सूत्रं कू(कौ)र्परस्य तु मध्यमे ॥ ३६

अभ्यन्तरभुजो भागे सूत्रात्सप्ताङ्गुलं बहिः ।
बाहुपर्यन्तसूत्रं स्यादूर्ध्वसूत्रं यथाक्रमम् ॥ ३७

श्रोणिपश्चात्परं मध्ये वेदभूतषडङ्गुलम् ।
सुनिर्वृत्तक्रमं प्रोक्तं शास्त्रमार्गे विचक्षणैः ॥ ३८

एकादशकसूत्राणि ऊर्ध्वसूत्रतले स्थितः ।
एतद्गौरि प्रकर्तव्यं मध्यमं दशतालकम् ॥ ३९

चतुर्भुजं त्रिणेत्रं च जटामकुटसंयुतम् ।
शङ्खचक्रसमायुक्तं किरीटमकुटं तथा ॥ ४०

गौरीलक्षणसंयुक्तं विष्णुसारूप्यविग्रहम् ।
सूत्रं तु तलमध्यं तु द्व्यन्तरं मनुमात्रकम् ॥ ४१

परहस्तद्वयोश्चापि मणिबन्धपुरे मतौ ।
जत्रु सूत्रसमं वाऽथ कटकानां तु सीमकम् ॥ ४२

पूर्वाश्रितकरे विद्यात्कायमध्यमसूत्रतः ।
तत्सूत्रात्तालपृष्ठान्ताद् द्व्यन्तरं (द्व्यायतं) मनुमात्रकम् ॥ ४३

तस्मात्तु तालदैर्व्य(र्घ्य)स्यान्मुखमानमुदीरितम् ।
बाह्वायामं तु विस्तारं नाभेरन्त्यकराग्रकम् ॥ ४४

नाभिमध्यतलाग्रान्ततिर्यङ्मानं त्वयोर्ध्वगम् ।
तद्व्यन्तरं तु विस्तारं मे त्रिंशाङ्गुलकं भवेत् ॥ ४५

कर्तरी परिहस्ते तु शङ्खचक्रे विधीयते ।
कर्तरीनिर्गमं बाह्वोः स्तनमध्याङ्गुलाग्रकम् ॥ ४६

तद्व्यङ्गुलं तु निर्वे स्याद्दश वा(ना)ष्टकमात्रकम् ।
बाह्वग्रं कटकादेव द्व्यन्तरं दशमात्रकम् ॥ ४७

तारमानं तु पूर्वोक्तं नाभिमानं तथैव च ।
मुखदीर्घं तदायामे श्रोत्रनासाग्रनिर्मि(र्ग)तम् ॥ ४८

मूर्धादिपृष्ठकेशान्तमङ्गुलीनां त्रयोदश ।
केशान्ताक्षादिकादीर्घं चतुर्मात्रिमुदाहृ(दीरि)तम् ॥ ४९

तस्मात्ककुत्(तृ)चतुर्भागं तद्ग्रीवायाममुच्यते ।
तस्मात्तु नाभिशौण्डान्तं मुखदीर्घं तदायतम् ॥ ५०

पृष्ठलम्बं तु भागं स्याद्वंशतालं द्विमात्रकम् ।
ग्रीवाथ कक्षपर्यन्तं षट्त्रिंशदथ(दिति) मात्रकम् ॥ ५१

तस्मात्तु बाहुपर्यन्तं त्र्यङ्गुलं तु विधीयते ।
मूर्धादिपृष्ठमूलं तु षष्टिवेदाङ्गुलं तथा ॥ ५२

पृष्ठोरुजघनं पूर्वे उन्नतं पञ्चमात्रकम् ।
वंशस्य पृष्ठगम्भीत(हीत)योरेकादशको भवेत् ॥ ५३

षडाधारां(रं)षडङ्गुल्यं वस्त्रस्योर्ध्वे तु बन्धनम् ।
नाभेरधः षडङ्गुल्यं वस्त्रस्यालम्बनं भवेत् ॥ ५४

गुल्फस्योर्ध्वे षडङ्गुल्यं वस्त्रसीमावसानकम् ।
स्वतन्त्रे रक्तवस्त्रं स्यान्मिश्रेऽङ्गे पीतमुच्यते ॥ ५५

आललाटं धनुर्मानं मौल्यन्तं तस्य पल्लवम् ।
तदर्धं स्याच्छरं पौष्पमाकर्णौ सृणिपाशकौ ॥ ५६

आमानमस्य कथितं दशतालमथापि तम् ।
स्थानं तु सात्विकं प्रोक्तं सर्वसिद्धिकरं परम् ॥ ५७

वैशाखस्थानकं प्रोक्तं उभयोः सिद्धिदं भवेत् ।
आसने राजसं प्रोक्तं धनुषाऽधनुषायुतम् ॥ ५८

तामसं रूपभेदेषु पञ्चप्रेतासनादिषु ।
सर्वेषामङ्गशक्तीनां सात्विकं रूपमुच्यते ॥ ५९

तामसं केचिदिच्छन्ति द्वारपालादिषु प्रिये ।
इति सर्वं समाख्यातं प्रतिमालक्षणं परम् ॥ ६०

इति सौभाग्यचिन्तामणौ उत्तरखण्डे पञ्चमः पटलः ॥

## षष्ठः पटलो नोपलभ्यते

## सप्तमःपटलः

### प्रतिमानिर्णयः

दारुमृच्छैलताम्राणि क्रमोत्तरगुणादिषु ।
मृद्वृक्षयोर्भवेत्तस्य पुत्रार्थी तेन कारयेत् ॥ १

मोक्षार्थी शैलजं कुर्यात् सर्वकामार्थसिद्धये ।
विमानगर्भविस्तार पादमानमुदाहृतम् ॥ २

तत्पादहीनमर्धं वा स्तम्भद्वारसमं तु वा ।
यजमानप्रमाणं वा शुभमध्याधमानि तु ॥ ३

शिलायष्टिमृदङ्गानि विमानानि तथैव च ।
सिंहद्वार......................*षणं कुरु ॥ ७

इत्युक्त्वा तत्स्वभावार्थं रङ्गत्वे द्वे विचिन्तयेत् ।
काकोलू(ल्य)काकृती तौ तु ददृशाते तदग्रतः ॥ ८

सा तु तासां तदाज्ञप्ता मिथो द्वे समजीजनत् ।
स्वरूपं चिन्तयामास जयार्थं द्विषतां हरिः ॥ ९

तदानीमेव देवस्य रूपमासीदनुत्तमम् ।
जपाकुसुमसङ्काशं कालालिकृतमूर्धजम् ॥ १०

पूर्णचन्द्रमुखाम्भोजं मृणालसमबाहुकम् ।
तुङ्गपीनकुचाभोगं त्रिवलीललितोदरम् ॥ ११

पीनोरुजघनाभोगं कदलीकाण्डजङ्घकम् ।
गूढगुल्फपदद्वन्द्वं पदांहसितपङ्कजम् ॥ १२

जपाकुसुमसङ्काशं फुल्लेन्दीवरलोचनम् ।
कुङ्कुमाभपरीधानं जगदेकविमोहनम् ॥ १३

एवं रूपं समास्थाय सर्वशक्तिमयो हरिः ।
चिन्तयामास भूयोऽपि पुनः केनाशु मुच्यते ॥ १४

एवं चिन्तयतस्तस्य मुखाज्ज्योतिरजायत ।
निर्गतं तैजसं सत्वं द्रवीभूतं मितोष्णवत् ॥ १५

सोच्छ्वासवायुना पश्चाद्ध्मानादन्तःस्थिताग्निमत् ।
स्वतोऽप्यनन्यसद्भावात्तं दृष्ट्वा मुमुदे च सा ॥ १६

*मध्यगतो भागः४-७ श्लोकात्मकः त्रुटितो नोपलभ्यते ।

ददे च द्रव्यमेवासीन्नाम चास्ते यथार्थतः ।
यत्र वत्स्याम्यहं द्रव्यं तिष्ठ त्वं च तथाऽस्म्यहम् ।। १७

इत्युक्त्वा भूषणाकारं स्वयमेव दधार तत् ।
तस्माद्धेममये बिम्बे सन्निधत्ते सदाऽम्बिका ।। १८

करोति भावमस्थाय मोहयित्वा तु दानवान् ।
ददौ सुरेभ्यः पीयूषं सा तु(धु)त्रैलोक्यमोहिनी ।। १९

जगन्मोहनसौन्दर्यां स्वतोऽनन्यां महेश्वरः ।
दृष्ट्वा विमोहितो धीरः सद्यस्तां परिषस्वजे ।। २०

सद्य एव ततो जज्ञे शास्ता नाम तदात्मजः ।
शङ्खचक्रधरं रूपं ततो देव्यास्तु वैष्णवम् ।। २१

कामं कलयते शम्भोः यतः कामा ततश्च सा ।
कामं कृत्वा च लोकानां अतः कामकलाभिधा ।। २२

स्थितिकर्ता यतो विष्णुः यस्तु सत्वगुणालयः ।
स एव शक्तिभावस्थः सा शक्तिः सर्वकारिणी ।। २३

रक्षणं तु तदायत्तं तस्माद्धि वरवर्णिनि ।
तन्मयत्वाधिरुक्मं तु सर्वलोकप्रवर्तकम् ।। २४

अतो रुक्मसुबिम्बस्य फलमत्र न वक्ष्यते ।
अयस्ताम्रप्रमाणा वा पिकस्मा(त्तला)सीसकैरपि ।। २५

न कुर्याद्दिवतारूपमाभिचारं विना प्रिये ।
अयसा वाऽपि कुर्वीत पाशाङ्कुशधनुःशरान् ।। २६

ध्रुवबेरस्य यन्मानं त्रिभागं कारयेच्च तत् ।
तस्यैकभागमानं तु कौतुकं परिचक्षते ।। २७

स्नपनं च तथा बिम्बं उत्सवं च तथाविधम् ।
ध्रुवबेरं नवांशं तत्कृत्वैकांशं व्यपोह्य च ॥ २८

शेषांशं तु त्रिधा कृत्वा एकभागेन संयुतम् ।
उत्तमं मध्यमं चैतत्कौतुकं परिचक्षते ॥ २९

एवमेव यथान्यायं एकानन्तं त्रिधाकृतम् ।
तत्रैकभागेन मितं कौतुकं स्यात्क्रमेण तु ॥ ३०

उत्तमादधमं चापि मध्यमादधमं तथा ।
अधमादुत्तमं तद्वदधमान्मध्यमं तथा ॥ ३१

ध्रुवबेरं नवांशं तत्कृत्वैकांशेन कौतुकम् ।
अधमादधमं प्रोक्तं यथाशक्त्या तु कारयेत् ॥ ३२

अथवा कौतुकादीनां कारयेदेवमेव तु ।
मूलबिम्बस्य चायामं त्रिधा कृत्वैव तस्य तु ॥ ३३

एकभागं व्यपोह्यैतद्द्विभागं संव्यपोह्य च ।
तद्विभागं त्रिधा कृत्वा समस्तं चोत्तमं भवेत् ॥ ३४

द्विभागं मध्यमं प्रोक्तमेकभागं तथाऽधमम् ।
तदेकं तु त्रिधा कुर्यान्नवधेति च केचन ॥ ३५

सामान्यप्रतिमां कुर्यादेवमेव विधानतः ।
द्वादशाङ्गुलमानं वा बिम्बमानाङ्गुलेन च ॥ ३६

अष्टादशाङ्गुलं वाऽपि विंशत्यङ्गुलमेव च ।
अधमं मध्यमं श्रेष्ठं केचित्सामान्यमुच्यते ॥ ३७

मूलबिम्बविहीनं तु बिम्बेनैव तु कारयेत् ।
अथ सामान्यबिम्बं तद्बिम्बं लौकिकमुच्यते ॥ ३८

द्वे बिम्बे कारयेदेवं अथवा वरवर्णिनि ।
बेरायामं त्रिधा कृत्वा तस्यैकांशसमुच्चयम् ॥ ३९

वृत्तं वा चतुरश्रं वा पीठं कुर्याद्विचक्षणः ।
आयामं तत्समं कुर्याद्विस्तारं च समं तथा ॥ ४०

तलं च पादमानेन स्मृतं मध्यार्धमेव तत् ।
यद्द्रव्येण कृतं बिम्बं तद्द्रव्येणैव पीठकम् ॥ ४१

तेनैव तत्प्रभां कुर्याद्विपरीतं न कारयेत् ।
प्रभां त्रियष्टिकां कुर्यान्मूलदेव्यास्तु सर्वदा ॥ ४२

तद्यष्टीनां तु विस्तारं एकैकाङ्गुलकं भवेत् ।
द्वादशाङ्गुलमानं तत्प्रभाविस्तारमिष्यते ॥ ४३

देहलब्धाङ्गुलं चेदं अङ्गुलं समुदाहृतम् ।
एकयष्टिप्रभाख्याताः सर्वा एवांगदेवताः ॥ ४४

येन कौतुकमुद्दिष्टं तेन पीठं प्रभामपि ।
अन्यथा चेन्महादोषः तस्मात्तेनैव कारयेत् ॥ ४५

उपर्युपरि यष्टीनां रश्मयस्ता न ताः स्मृताः ।
(उपक्रमस्तु यष्टीनां आश्रयस्तनुताग्रतः)
तच्छाखा(च्छिला)यामविस्तारं यथा सौन्दर्यदर्शनम् ॥४६

तच्छिष्टा नैव विरलाश्चोभयत्र समाः स्मृताः ।
ऊर्ध्वाग्रैर्नैव तां कुर्यात्पार्श्वयोरुभयोरपि ॥ ४७

दक्षिणा दक्षिणावन्तः वामवन्तस्तु वामतः ।
इन्द्रवाहनिभा यष्टिः शिखिवद्रश्मिमालिका ॥ ४८

व्यपोह्य मकुटादूर्ध्वं चतुरङ्गुलमुन्नतम् ।
भागं भागं व्यपोह्यैव पार्श्वयोस्त्रीणि पार्श्वयोः ॥ ४९

पीठस्य पार्श्वयोर्बाह्ये यन्त्रं तत्सुस्थिरं दृढम् ।
कारयित्वा प्रभां तत्र सुषिरे योजयेच्छुभम्।। ५०

अथ पाशाङ्कुशौ कुर्याद्योजयेत शुभां तथा ।
मधूच्छिष्टेन विधिना कारयेद्युतिहेतुकम् ।। ५१

शक्तिप्राधान्यतो देवि प्रभालक्षणमीरितम् ।
सर्वदेवेषु सामान्यं सविकल्पमसंशयः ।। ५२

तज्ज्ञात्वा सर्वकार्येषु कुशली सर्वतन्त्रवित् ।
देवताबिम्बतत्त्वज्ञो देशिको देवि जायते ।। ५३

इति सौभाग्यचिन्तामणौ उत्तरखण्डे सप्तमः पटलः ।।

## अष्टमः पटलः

### शक्त्युत्पत्तिः

पार्वत्युवाच-

देवदेव महादेव सर्वज्ञानसुधार्णय ।
पिबन्त्याश्च न मे तृप्तिरुपयाति महेश्वर ।। १

प्रकृतिर्वैष्णवी शक्तिः शाम्भवीत्यभिधानकम् ।
कथं प्राप्ता परा शक्तिर्निर्गुणा भावनात्मिका ।। २

साऽपि लक्षणयाऽन्योन्यं सृष्टिस्थितिलयात्मिका ।
गुणरूपा कथं देवी सत्वैकनिलया कथम् ।। ३

सत्वैकनिलया सा तु कथं सा हरिणी भवेत् ।
त्वत्तो नास्त्यधिकः कश्चित्संशयोच्छेदकारकः ।। ४

तदहं श्रोतुमिच्छामि वदस्व करुणार्णव ।
ईश्वर उवाच—
शृणु देवि महाभागे यन्मां त्वं परिपृच्छसि ॥ ५

यदद्वैतं परं ब्रह्म सदसद्भाववर्जितम् ।
तस्येच्छाकृतिभावस्तु प्रकृतिः प्रोच्यते मया ॥ ६

अव्यक्तभावस्तस्यैव पुरुषश्चेति गीयते ।
तच्चलत्वं रजोभावप्रवृत्तिः सत्वमुच्यते ॥ ७

तच्चलत्वोपसंहारस्तम एते गुणाभिधाः ।
अभावो भावनाभावश्चलद्वृत्तिलयात्मकः ॥ ८

क्रियास्तु महिमाभावादेहाः स्युः पृथगेव ताः ।
येन भावेन यत्कर्ता स भावस्तन्मयोदितः ॥ ९

अन्यत्कर्मणि भावेऽन्य इत्यस्य बहुभावताः ।
एते भावास्तु वै नित्याः स्वस्वभावेन भाविताः ॥ १०

स्वभावान्तरभावार्थमन्यभावमपेक्षते ।
भावभावभवाभावाः विकारा इति भावतः ॥ ११

अभाविनस्ते भावाः स्युः पूर्वभावाः सदाभवाः ।
तत्पूर्वभावाभावास्ते भावो भावविवर्जितः ॥ १२

एवं तद्ब्रह्मणोरैक्यात्प्रकृतेर्बहुधा मताः ।
तत्कालकार्यानुवशात् तथा रूपं दधाति सा ॥ १३

स्वयं मोहयते विश्वं स्वयमेव च मुह्यति ।
विश्वाकारेण सा देवी वर्तते परमेश्वरी ॥ १४

इदं च प्रकृतैश्वर्यं शृणुष्व परमेश्वरि ।
पुरा सदाशिवः श्रीमान्पञ्चकृत्यविधायकः ॥ १५

तत्तत्कृत्यानुसारेण पञ्चधा समजायत ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ १६

इमानि पञ्चकृत्येषु रूपाणि ब्रह्मणः स्मृतम् ।
एते प्रकृतिसंरूढास्तत्तत्कृत्यविशारदाः ॥ १७

चराचरमिमं लोकं परिपूर्णात्मना स्थिताः ।
तैस्त्रिधानीन्द्रियाणि स्युः प्राकृतं मानसं तथा ॥ १८

एवंभूतस्तु पुरुषो मायाबलसमन्वितः ।
तन्माया मोहितो भूत्वा तदहं चेत्यमन्यत ॥ १९

परस्य ब्रह्मणो रूपं मायैवेति स्मृतं यतः ।
तस्या देवि विकासोऽथ विधा(ह्रा)तुर्निर्विकल्पकः ॥ २०

विकल्पभावनाभावात्सर्वे साधर्म्यवृत्तयः ।
रागद्वेषविनिर्मुक्तः कार्याकार्यविशारदः॥ २१

प्रापुः स्तब्धत्वमेवेति पाषाणवदिवाचलाः ।
एवं जिज्ञासमानायां पुरुषस्य बलाबलम् ॥ २२

क्षीयमाणेषु भूतेषु न किञ्चित्प्रत्यपद्यत ।
तत्प्रवृत्तौ निवृत्तौ चाप्यशक्तः परमेश्वरः ॥ २३

न चचाल तदा शक्तिः सन्मात्रे गुण(णवि)वर्जितः ।
कपिलो नाम देवर्षिः ततो देवीपारायणः ॥ २४

समवेक्ष्य जगत्सर्वं निश्चलं शक्तिहीनतः ।
किमेतदिति सञ्चिन्त्य ज्ञात्वा प्रकृतिवैभवम् ॥ २५

स्वयं च तन्मयो भूत्वा ध्यानयोगेन निश्चलः ।
ददृशे परमाकाशे देवीं निखिलविग्रहाम् ॥ २६

सर्वाधारेषु तिष्ठन्तीं भेदाभावस्वरूपिणीम् ।
पुरुषेण पृथग्भावाद्रौद्रभावेन भावितः ॥ २७

अन्तर्हितं जगद्भावं स्वव्यापारविमोहनात् (दनाम्) ।
महतो मोहनां देवीं भ्रमो देतीत्यमन्यत ॥ २८

पुरुषं च तदाऽपश्यत्पञ्चधा संव्यवस्थितम् ।
सन्मात्रं भावरहितं अशक्तं निर्विकल्पकम् ॥ २९

अणोरणुतरत्वेन भावाभावत्वभावनम् ।
प्रेतभूतानिमान्दृष्ट्वा पुरुषान्पञ्च संज्ञितान् ॥ ३०

प्रकृतिं च सदाधारेष्वाभिमुख्यमुपागताम् ।
स्वेष्टभावामिमां दृष्ट्वा लोकहेतोरचिन्तयत् ॥ ३१

निष्प्रपञ्चं परं लोको जायेतेति यया विना ।
तुष्टा सा केन जायेत तदुपादिश तत्परा ॥ ३२

इति संप्रार्थ्य जपतो देवीसूक्तं ऋचोदितम् ।
स्वानन्यभावसिद्ध्यर्थं स्वतन्त्रं समुपादिशत् ॥ ३३

तत्प्रभावात्क्षणादेव साक्षाद्देवीमयोऽभवत् ।
तद्वैभवमशेषं च तत्प्रसादाद्ददर्श कः ॥ ३४

एवं संस्तूयमाना सा कपिलेन महात्मना ।
स्वरूपं दर्शयामास सर्वभावप्रवर्तकः ॥ ३५

सपाशाङ्कुशकोदण्डपुष्पबाणमनोहरम् ।
तदादि लोकसौन्दर्यं यतो नाम्ना तु सुन्दरी ॥ ३६

तत्सुष्ठुत्वाच्च रूपाणां तन्मातुं नैव कल्प(ध्य)ते ।
तत्तदाधारभूतेन भिन्नरूपा तु याऽम्बिका ॥ ३७

तत्र तत्र स्थिता पुंभिः मूर्तयो रहिताश्च ताः ।
विना भूतेन रौद्रेण सहिता एक(वीर)शक्तयः ॥ ३८

विना रौद्रेण (कर्तृभावत) एवादौ पुरुषस्त्यक्तशक्तिमान् ।
पुरुषो गुणहीनस्तु सन्मात्रो भाववर्जितः ॥ ३९

ततः स्वानित्यहि(भू)तेन लोकानां हितकाम्यया ।
मुनिना मुनिसत्वेन ददृशे न महीयसा ॥ ४०

संप्रार्थिता महाभागा गुणिनी गुणवत्सला ।
तटस्थं निर्गुणं चापि भेजे पुरुषमम्बिका ॥ ४१

प्रकृतेरेव संभूता पुरुषोऽजप्रवाकृ(भाव)तः ।
ततस्तु पञ्चधा भिन्ना प्रकृतिस्तु यथाविधा ॥ ४२

स्वभावभाविताभावैर्युक्ता हीना पुनर्यतः ।
तातेव लोकविहिता माता रूढा ततस्तु सा ॥ ४३

प्रकृतेरेव चैतन्यं पुरुषत्वं प्रपद्यते ।
एकत्वं च द्विधात्वं च बुद्धिचेतनयोर्यथा ॥ ४४

चेतनाभावतो देवि नामरूपवतीश्वरी ।
अन्तःस्थचेतना या तु प्रकृतिर्वोढुमक्षमा ॥ ४५

सचेतना महालक्ष्मीः संजज्ञे भावभाविता ।
ततस्तु द्वन्द्वसाम्यस्था त्रिपुरा त्रिगुणात्मिका ॥ ४६

पृथग्भूताश्च मिश्राश्च पञ्चधा गुणतः स्मृताः ।
विषयाश्चैव पञ्चैते विख्यातास्त्रिगुणोदयाः ॥ ४७

तत्तद्भावानुभावित्वात्पुरुषः पञ्चधा स्थितः ।
अविनाशक्तितो भाव्या ये भावा भाविनश्च वा ॥४८

शक्तयस्तेन पञ्चासन् समता न कदा(नदो)चन ।
तत्तद्गुणानुगुण्येन न्यूनाधिकसमन्विताः ॥ ४९

शक्तयः पुरुषाश्चैव भिन्ना लोकानुकम्पया ।
समेतपुरुषारूढा या तु प्रथममीरिता ॥ ५०

गुणभेदेन सा वाऽपि भिन्ना कार्यानुसारतः ।
सदसद्भावरहितं यदेवात्र न वक्ष्यते ॥ ५१

इति सौभाग्यचिन्तामणौ उत्तरखण्डे अष्टमः पटलः ॥

## नवमः पटलः

### देवीस्वरूपम्

प्रथमं तु महालक्ष्मीर्द्वितीयं त्रिपुराम्बिका ।
चामुण्डीति तृतीयं स्याद्देवी गुणमयी भवेत् ॥ १

यद्रूपेण जगत्सृष्टं ब्रह्मविष्णुशिवात्मकम् ।
तदहं संप्रवक्ष्यामि शृणुष्व वरवर्णिनि ॥ २

नवहेमनिभा देवी सर्वाभरणभूषिता ।
मातुलङ्गं गदां खड्गं पानपात्रं च बिभ्रती ॥ ३

नागं लिङ्गं च योनिं च धारयन्ती स्वमूर्धनि ।
शुक्लवस्त्रपरिधाना सर्वावयवसुन्दरी ॥ ४

स्थापनादर्चनाद्दानात्सर्वां सिद्धिं प्रदास्यति ।
उक्तं सत्वगुणावासं पुरैव त्रिपुराभिधम् ॥ ५

द्वितीयं रक्षकत्वेन प्राधान्येनैव सुन्दरि ।
तृतीयं कालमेघाभं भीमं धूपसमन्वितम् ॥ ६

खड्गबाणशिरःखेटैरलङ्कृतचतुर्भुजम् ।
अतिभीषान्वितं रौद्रं तामसं रूपमीरितम् ॥ ७

यद्द्वितीयं महालक्ष्म्या रूपं शृणु वदामि ते ।
दशवक्त्रं दशभुजं त्रिंशल्लोचनसंयुतम् ॥ ८

भिन्नाञ्जनतनुप्रख्यं पीनोन्नतपयोधरम् ।
कुङ्कुमाभपरीधानं सर्वाभरणभूषितम् ॥ ९

खड्गबाणगदाशूल पाशचक्रभुशुण्डिधृत् ।
परिघं कार्मुकं चैव शीर्षकं खेटकं दधत् ॥ १०

इदं ते तामसं(राजसं) रूपं महाकालीति विश्रुतम् ।
रक्तपादा रक्तदंष्ट्रा नीलजङ्घोरुरुन्नता ॥ ११

अपरे तामसं प्राहुः रूपमेतद्वरानने ।
इदमेव मरुद्रूपं राजसं च विदुर्बुधाः ॥ १२

श्वेतानना नीलभुजा सुश्वेतस्तनमण्डला ।
रक्तपादा नीलजङ्घोरून्मत्ता(न्नम्रा) परिशोभिता ॥ १३

विचित्रजघनां देवीं रक्तमाल्याम्बरावृताम् ।
अक्षमालां च मालां च बिभ्रतीं कुलिशं गदाम् ॥ १४

चक्रं त्रिशूलं परशुं शङ्खघण्टासिपाशकम् ।
शक्तिं चर्म च दण्डं च चापौ पानं कमण्डलुम् ॥ १५

अष्टादशभुजामेभिः समलङ्कृतविग्रहाम् ।
वदन्ति तामसं रूपं ताम(राज)सं त्विति केचन ॥ १६

अष्टबाहुधरा बाणमुसले शूलधृक्तथा ।
शङ्खं घण्टां कपालं च बिभ्रती करुणामयी ॥ १७

एतच्च सात्विकं रूपं अधुना संप्रकीर्तितम् ।
सत्वैकनिलयं तिस्रो वाणी लक्ष्मीर्भवानिका ॥ १८

अङ्गभावादि तासां तु नामरूपाणि नोच्यते ।
इदं च शृणु वक्ष्यामि रूपभेदं वरानने ॥ १९

पुराऽमरपतिर्हेतोरमराणां पतिः स्वयम् ।
तोषयामास देवेशं नीलकण्ठमुमापतिम् ॥ २०

वरेण छन्दयामास सन्तुष्टस्तं महेश्वरः ।
सोऽपि वव्रे वरमिति परेभ्यो रक्षतां पुरम् ॥ २१

तथैवोक्त्वा तिरोधत्ते त्रिपुरां तामपूजयत् ।
ततः पूजयतस्तस्य प्रादुरासीद्गुणात्मिका ॥ २२

अभ्यर्थिताऽऽत्मनाऽऽत्मानं स्पर्धया समयस्तया ।
ततः स्वशक्तीराहूय रक्षणाय दिवौकसाम् ॥ २३

नियोजयित्वा तत्रैव सत्वभावा(व)मया यतः ।
अद्यापि रक्षते देवी तद्रूपैरेव शक्तिभिः ॥ २४

ग्रामे वा नगरे ग्रामे पत्तने राजधानिके ।
खेटके वा विहीनं स्याद्वस्तु स्थानं विशेषतः ॥ २५

काली चैव महाकाली चर्ममुण्डी च चण्डिका ।
चामुण्डी भद्रकाली च एकबेरकुलात्मिका ॥ २६

एकद्वित्रिचतुःपञ्चमात्रोदयमिति स्मृतम् ।
त्रिशूलं करमुत्तुङ्गं षष्ठं चापि ततो व्रतिम् ॥ २७

अभेदा त्रिपुरालक्ष्म्योः विनान्यासां तु साम्यतः ।
पुरोदितत्वात्संक्षेपान्मानलक्षणमुच्यते ॥ २८

सूत्रं तत्कुक्षितारान्तमष्टाविंशतिमानकम् ।
सूत्राद् द्वादशहस्तास्तु पञ्च सप्तदशाङ्गुलम् ॥ २९

अभ्यन्तरं तु पञ्चैव पञ्चत्रिंशाङ्गुलं मतम् ।
दक्षिणे जानुनीव्रः स्याद्वेदविंशतिमात्रकम् ॥ ३०

सूत्रादालम्बितं पादमेकविंशतिमात्रकम् ।
आरभ्य मात्रा च अलकान्तं स्वमेव वार्धनुः ॥ ३१

नेत्रान्तं कर्णसीमान्तं पुटसीमन्तकं भवेत् ।
रूढोच्चमानं सर्वासां नवतालप्रमाणकम् ॥ ३२

दष्टमास्यकददन्तं ललाटे मालसंयुतम् ।
दक्षिणे खड्गहस्तं स्याद्वामे कटकसंयुतम् ॥ ३३

ललाटं(टे) पादमध्ये तु मौलिकं मध्यमेव वा ।
भुजमध्योदरान्तं स्याद्देवि नाहस्तसंशयः ॥ ३४

कपालं वामहस्तेन बिभ्रद्दंष्ट्री च तन्मुखम् ।
दक्षिणं कुञ्चितं पादं वामपादं प्रलम्बयेत् ॥ ३५

पीठं शयनमूर्ध्वं च यद्व्यासं च मयोच्यते ।
पीठं त्रिविधमित्येवं सर्वाभरणभूषितम् ॥ ३६

ग्रामातिसंयुतं प्रोक्तं सप्तमात्रं च बेरकम् ।
सप्तमात्रमयी चैका कालं स्याद्बहुरूपिणी ॥ ३७

दक्षादिविघ्नवीराभ्यां संयुतं बहुबेरकम् ।
धूपज्वालावतीनां च वाहनं तत्प्रचक्षते ॥ ३८

दक्षिणाभिमुखं पादं मानुषं पद संज्ञितम् ।
द्विभुजं च द्विनेत्रं च करण्डमकुटं भवेत् ॥ ३९

प्राक्चर्मकेशं ललाटे प्याकटकसंयुतम् ।
पद्मं च दक्षिणं चैव वामपक्षे तु भूतकम् ॥ ४०

दंष्ट्रं सहास्यदन्तं च रौद्रमुदग्रदंष्ट्रकम् ।
भुजङ्गमकुटं चैव सर्वा(र्पा)भरणभूषितम् ॥ ४१

यज्ञोपवीतं नागं स्यात्कटिसूत्रं च नागकम् ।
बाहुद्वयं च नागं स्याद्दंष्ट्रा नागमिहोच्यते ॥ ४२

शुकनासाद्द(वृ)तं चैव स्वनाभं तस्य योजयेत् ।
पक्षस्य पक्षपात्रं स्यात्.........नवैव वा ॥ ४३

नवैव पादकरतलं द्वयमन्तस्तस्य वा भवेत् ।
इदमेव समाहारं शक्तीनां वरवर्णिनि ॥ ४४

पञ्चप्रेतासनारूढा भेदाद्यैश्च यथास्थिता ।
तानि षड्विधरूपाणि शृणुष्व कथयामि ते ॥ ४५

त्रिशूलं चैव खड्गं च वेतालं नागमेव च ।
चतुर्भुजैः सहादक्षैर्यद्दधाना परापरा ॥ ४६

चामुण्डीति च विख्याता लोकरक्षणकारका ।
देशिकास्तु प्रपूजार्थं सह कालीति सा स्मृता ॥ ४७

चामुण्डीभद्रकाल्योस्तु रूपैक्यं नामभेदतः ।
केचिद्भेदं प्रकुर्वन्ति नादेन सह सुन्दरि ॥ ४८

कपालाभयहस्तां च त्रिशिखां चापमेव च ।
सामान्यं सर्ववस्तूनां आपदुत्तारकारकम् ॥ ४९

एवं मानप्रतिष्ठाभ्यां भद्रकाल्यास्तु विग्रहः ।
पाशाङ्कुशविधानं वा वरदाभयपूजनम् ॥ ५०

स्थाप्य संपूजयेदेतद्वास्तवार्थे मनीषिणः ।
शूलं चैव कपालं च वरदाभयमेव च ॥ ५१

वास्तवार्थं प्रशंसन्ति रूपमेतदभीष्टदम् ।
एवमेतद्भेदरूपं वास्तवं सौम्यमूर्तिकम् ॥ ५२

शतकोटिः समादिष्टा रूपतो भेदभावना ।
तासु सौम्यप्रकृतयः पूजनीया हि वास्तुषु ॥ ५३

सर्वत्रैवाद्यमूर्तौ तु एकबेरविधानतः ।
सन्दोहमुपसन्दोहं प्रादक्षिण्यक्रमेण तु ।
..................ग्राम्यादीनां स्वयुक्तितः ॥ ५४

इति सौभाग्यचिन्तामणौ उत्तरखण्डे नवमः पटलः ॥

## दशमः पटलः

### स्थानदेवतारूपविधिः

श्रीदेव्युवाच—

केषु स्थानेषु सा देवी पूज्यते रूपभेदतः ।
तान्यहं श्रोतुमिच्छामि वदस्व करुणार्णव ॥ १

ईश्वर उवाच—

शृणु देवि प्रवक्ष्यामि स्थानभेदमिह शृणु ।
तत्तत्स्थानेषु सर्वेषु तत्र तत्र स्थितैर्नरैः ॥ २

ग्रामाग्रहारखेटं च स्थानं नगरकं तथा ।
पत्तनं खेटकं चेति कुदुम्बं खर्वटं पुनः ॥ ३

संवाह्यनामाश्रमाणां कुटुम्ब(कूटं च)जनवासकम् ।
द्वादशान्तस्थानमेव तद्भेदश्च प्रवक्ष्यते ॥ ४

नानासहस्रविप्रैश्च संयुक्तो ग्राम उच्यते ।
वेदविद्ब्राह्मणैरेव युक्तं सर्वकैस्मि(र्वि)ना॥ ५

अग्रहार इति प्रोक्तं राज्ञः खेटं प्रशस्यते ।
अनुपन्नयुतं सर्वैरन्यजातिसमन्वितम् ॥ ६

स्वामिस्थानसमं योगात् स्थानीयं समुदाहृतम् ।
नगरं सर्ववर्णानां पत्तनं वणिजामपि ॥ ७

अन्नादिविक्रयं चाब्धिपार्श्वगतं यदेव वा ।
विशामवैदिका प्रोक्ता कुटुम्बं कृषिजीवनम् ॥ ८

खर्वं तु हीनवर्णानां सर्वविक्रयसंयुतम् ।
संवाह्य पार्वतीयानां तत्पार्श्वे वा वनान्विते ॥ ९

द्रोणोपह्योत्तराणां च सर्वसंकरसंयुतम् ।
एकप्रधानकं तत्र कुटुम्बं (कूटं च)सोपजीवकम् ॥ १०

तासां वृत्तिश्च भागैश्च पताकैश्च समन्वितम् ।
तेषां संक्षेपणं यानं वक्ष्ये दण्डप्रमाणतः ॥ ११

स्थानदेशाधिकारं च यथावत्सर्ववास्तु च ।
नर्तकालोकमातृणां वक्ष्यामि च महेश्वरि ॥ १२

ग्रामे वा नगरे चैव पत्तने राजधानिके ।
रक्षार्थे सर्वभूतानां पुरे वा खेटकादिषु ॥ १३

......................तत्तद्वर्णानुसारतः।
बहिः प्राकारतः कुर्यान्मातृस्थानं च वास्तवम् ॥ १४

श्रेष्ठं पूर्वोत्तरे भागे शतदण्डादनन्तरे ।
तदर्धे वा तदर्धे वा दशदण्डान्तरेऽपि वा ॥ १५

सोमे स्याद्वास्तवं देवि(वीं)मातृणामिव चोदितम् ।
पूर्वे वा पश्चिमे वापि स्थानमासां प्रशस्यते ॥ १६

सोमे पूर्वोत्तरे वापि नगरग्रामयोर्हितम् ।
दक्षिणे खेटकस्योक्तं अन्येषां प्राचि पश्चिमे ॥ १७

आग्नेयं नैर्ऋतं चैव तृतीयं वायुगोचरम् ।
वास्तवार्थं न शंसन्ति देशोऽन्याश्चैव शोभनाः ॥ १८

दक्षिणे खेटकस्योक्तं अन्येषां प्राचि पश्चिमे ।
मध्ये तु त्रिपुरां लक्ष्मीं चण्डिकां च निधापयेत् ॥ १९

अनादिसिद्धपीठानि पुराणोक्तानि सुन्दरि ।
मध्यानि वा बहिष्ठानि न वै देय प्रकल्पयेत् ॥ २०

सर्वेषामेव वर्णानां पूजनीयानि शस्यते ।
बहिष्ठबेरे न्यग्रोधं वृक्षषण्डयुतं भवेत् ॥ २१

प्राकारगोपुराद्दूरे बहुलं काननं वृतम् ।
आरण्यं वास्तवे नेष्टं योगस्थानेषु संमतम् ॥ २२

पूर्वे वा पश्चिमे वाऽपि स्थानं तासां प्रशस्यते ।
सौम्यं पूर्वोत्तरं वापि नगरग्रामयोर्हितम् ॥ २३

दक्षिणे खेटकस्योक्तं अन्येषां प्राग्वि(चि) पश्चिमे ।
असमृद्धं कलहदं यन्त्रस्थानमशक्तिकम् ॥ २४

मातरो वाऽथ काल्याद्याः सर्वरूपाऽथवा भवेत् ।
काल्याद्यं षड्विधं प्रोक्तं तत्तद्भेदेन भेदितम् ॥ २५

विश्वा रौद्री महाकाली वैवादी चोदिताऽद्रिजे ।
बह्निःशक्तिरिति ख्याताः रूपभेदेन देवताः ॥ २६

चतुर्थी(र्धा)भेदसंपत्तिः विजयार्थे नृपस्य तत् ।
वामा ज्येष्ठा च रौद्री च काली च कलवी तथा ॥२७

पश्चात्तु बलवी शक्तिः बलप्रमथिनी ततः ।
सर्वभूतदमनी देवी माता चैव मनोन्मनी ॥ २८

काली चैव कराली च विकराली ततः परा ।
कंकाली नाम संयुक्तं चतुर्धा समुदीर्यते ॥ २९

एतासां चण्डिका देवी उषा चेत्यष्टशक्तयः ।
विधू वि अवनीते जीवा यवी च सिता (शिरा)तथा ॥३०

धरणी वज्रिणी चैव रोधिनी गुणकन्यका ।
योगिन्यष्टकमेवेदं पूजाप्रणवयोजितम् ॥ ३१

षडङ्गदेवताः प्रोक्ताः प्रसिद्धाः सर्वरक्षकाः ।
रक्षोहणौ बलहणौ सुमुखं कं(पाद)पदण्डकम् ॥ ३२

अर्दिनी मोदिनी चेति सकला शुद्धिकण्टकः ।
वज्रं शक्तिश्च दण्डं च खड्गः पाशस्तथाङ्कुशम् ॥ ३३

गदा त्रिशूलसंयुक्तं चक्रं पद्मं तथैव च ।
असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तभैरवः ॥ ३४

कपाली भीषणश्चैव संहारश्चाष्टभैरवाः ।
मार्ताण्डो दास्यतो(भास्करो) भानुर्जगच्चक्षुर्दिवाकरः ॥

विवस्वानंशुमांश्चैव सूर्यो वैकर्तनस्तथा ।
आदित्यो लोकसाक्षी च रविश्च द्वादश स्मृताः ॥ ३६

अभयं च कपालं च शूलं च परशुं तथा ।
खड्गं पाशं च नाराचं सुवर्णे सा परापरा ॥ ३७

सव्यवामकराभ्यां च यथामार्गेण धारिणी ।
चामुण्डीति सुविख्याता सर्वरक्षार्थकारिका ॥ ३८

भेदिता वास्तुपूजार्थं भद्रकाली परापरा ।
पञ्चधा शुद्धिराख्यातं पृथक्सिद्धिरिहोदितम् ॥ ३९

भद्रकाली महाकाली काली चैव ततः परम् ।
चामुण्डी चण्डिका चैव स्थानभेदं समागता ॥ ४०

भुजाष्टकसमोपेता तीक्ष्णदंष्ट्रोत्कटानना ।
त्रिशूलं करवालं च कंकं वै शक्तिकं तथा ॥ ४१

सूची भद्रा कपालं च घण्टा खेटक पल्लवम् ।
सव्येतरकरे नित्यं धारयन्ती विराजते ॥ ४२

भद्रकाली समाख्याता सर्वसिद्धिप्रदायिनी ।
शूलं खड्गं च खट्वाङ्गं डमरुं सव्यहस्ततः ॥ ४३

कपालं खेटकं घण्टां पाशं चैवेतरैः करैः ।
धारयन्त्यूर्ध्वकेशी च सुदंष्ट्रेण भयङ्करा ॥ ४४

एवंभूता महाकाली कीर्त्यते परमेश्वरी ।
शूलं खड्गं तथा नागं पाशं चान्यच्छुभं करैः ॥ ४५

डमरुं खेटकं घण्टां कपालं दक्षिणेतरे ।
धारयन्ती करैर्नित्यं ऊर्ध्वकेशी सुदंष्ट्रिणी ॥ ४६

सर्वाभरणसंयुक्ता शिरोमालाविभूषिता ।
क्रुद्धायुधा नागभूषा रक्तधारासवप्रिया ॥ ४७

एवं लक्षण संयुक्ता काली नामेति विश्रुता ।
त्रिशूलं चैव निस्त्रिंशं वेतालं शक्तिमेव च ॥ ४८

कपालं खेटकं चान्यद्घोषमन्यत्ततः परम् ।
घण्टां चैव वहन्त्येषा चामुण्डी संप्रकीर्तिता ॥ ४९

शूलं खड्गं तथा कङ्कं वेतालं सव्यहस्तके ।
कपालं खेटकं घण्टां डमरुं चेतरैः करैः ॥ ५०

धारयन्ती सदाऽप्येषा चण्डिका संप्रशस्यते ।
वास्तुरक्षार्थमेवोक्तं स्थापयेत्पूजयेदपि ॥ ५१

त्रिणेत्रा च महारौद्री चन्द्रार्धकृतशेखरी ।
पिनद्धपन्नगेन्द्रेण राजमान कुचद्वया ॥ ५२

विचित्राभरणोपेता भुजाष्टकसमन्विता ।
त्रिशूलं चैव खट्वाङ्गं खड्गं डमरुकं तथा ॥ ५३

कपालं खेटकं चैव भिण्डिपालं च घोणसम् ।
सव्याङ्गैर्वामभागैश्च स्वहस्तैर्भूषणोज्ज्वला ॥ ५४

इत्थं लक्षणसंपन्ना ख्यापिता क्षेत्रदेवता ।
पूजनार्हा भवेत्सौम्या चतुर्हस्तद्वयान्विता ॥ ५५

शूलघोणससंयुक्ता कपालाभयमुद्रिका ।
राजधान्यां पुरे वाऽपि कल्पिता गोरिवार्धतः ॥ ५६

प्रयोगाद्यैः सुसंस्थाप्या महाकाली परापरा ।
भुजमेवाष्टहस्ता वा सौम्या वाऽपि चतुर्भुजा ॥ ५७

विचित्रार्थक्रियाकारा स्थापयेत् क्षेत्रदेवता ।
कानने पर्वताग्रे वा प्रभाद्ये वास्तुवर्जिते ॥ ५८

पञ्चवक्त्रा विचित्राङ्गी क्रू(सौ)रभावं समागता ।
स्फुरन्ती तीक्ष्णदंष्ट्रास्या भुजाष्टकसमन्विता ॥ ५९

वेतालं च त्रिशूलं च खट्वाङ्गं चैव धारिणी ।
बिल्वपल्लवमुद्राङ्गी फालेनैव विराजिता ॥ ६०

सिद्धपीठे स्वतः सिद्धे सिद्धबेरे प्रकीर्तिता ।
पीठस्थदेवता या स्यादुपपीठाधिदेवता ॥ ६१

सन्दोहं देवताधार रौद्रार्धो वाऽपराजिता ।
ऊर्ध्वकेशी विरूपाक्षी भुजाष्टकसमन्विता ॥ ६२

त्रिशूलं च कपालं च खड्गं डमरुकं तथा ।
शक्तिं चैव तु घण्टां च खेटकं च त्रिखण्डकम् ॥ ६३

धारणी भीषणोपेता........................ ।
स्वेष्टा चतुर्भुजोपेता त्रिशिखा पालपाशिनी ॥ ६४

कपालाभयसंयुक्तामत्रिसन्देहदेवता ।
रुष्टाऽद्रौ दिव्यरूपाक्षी भूषितानेकभूषणा ॥ ६५

अष्टहस्तोर्ध्वकेशी च तद्धस्ता मकुटान्विता ।
खड्गं त्रिशूलं वेतालं चामरं सव्यकं करैः ॥ ६६

कपालं डमरुं चैव खट्वाङ्गं नागशीर्षकम् ।
एवमष्टभुजोपेता क्षेत्राणामधिदेवता ॥ ६७

एवं प्राधान्यतो देव्या रूपभेदमुदीरितम् ।
चक्रस्थयोगिनीनां तु चक्रपूजासु वक्ष्यते ॥ ६८

अनन्ताः शक्तयः सन्ति भेदाभेदविभागतः ।
अशक्यत्वाद्धरारोहे नोक्तं चाष्टशतैरपि ॥ ६९

इति सौभाग्यचिन्तामणौ उत्तरखण्डे दशमः पटलः ॥

## एकादशः पटलः

### महालक्ष्मी स्वरूपम्

इदमन्यत्परं देव्याः सात्त्विकं रूपभेदकम् ।
गुणाङ्गभावनायुक्तं तत्तद्गुणमयात्मकम् ॥ १

त्रैगुण्यादेव संभूतं एकरूपं त्रिधास्थितम् ।
वाणी लक्ष्मीर्भवानीति पूजितं सर्वदा बुधैः ॥ २

स्वातन्त्र्येणैव भावेन द्विधा तासां हि रूपकम् ।
पृथक्प्रवक्ष्यमाणत्वात्तन्त्रे इह न वक्ष्यते ॥ ३

इदं विशेषकं देवि रहस्यं सर्वकामधुक् ।
यस्य ध्यानैकमात्रेण लक्ष्मीपतिरभूद्धरिः ॥ ४

सोऽहं च विघ्नस्तद्रूपं नान्यो वेत्तीह कश्चन ।
प्रकाशकेन हि मया प्रकाश्यं तत्प्रकाश्यते ॥ ५

प्रत्यक्षं दृश्यते देवी वीरोऽपीशो न शोभते ।
येन सृष्टं जगदिदं येन संरक्ष्यते पुनः ॥ ६

तदेकरूपं जानीहि सृष्टिस्थित्योरभेदतः ।
आदौ सा स्रष्टुमिच्छन्ती गुणानिन्द्रियवर्त्यभूत् ॥ ७

इन्द्रियेभ्यस्तु पुरुषान् जनयामास पञ्च च ।
नामरूपविभागं च कृत्याकृत्यं च साऽब्रवीत् ॥ ८

सृष्टिस्थित्यन्तरं विद्धि रक्षा चेत्यभिधामदात् ।
तत्तत्कर्मण्यशक्तास्ते ततस्तामेव भेजिरे ॥ ९

सदा सिंहत्वमेतेषां तत्स्रष्टान्तरलीयत ।
कृत्येष्वपि तथाऽशक्तान् दृष्ट्वा सर्वजगत्प्रसूः ॥ १०

पुनरैक्यफलायैषां तद्रूपं स्वयमास्थिता ।
चकार तानि कृत्यानि तथैव स्वयमास्थिता ॥ ११

पुनर्विवर्तरूपेण बहु स्यामिति लीलया ।
पञ्चधाऽऽत्मानमकरोत्पुरुषोऽपि तथाविधः ॥ १२

विख्याताः पुरुषाः पञ्च शक्तयः शृणु मत्प्रिये ।
विद्याऽप्यविद्या वाणी च लक्ष्मीश्चैव भवानिका ॥ १३

पुरुषाणां च शक्तीनामङ्गाङ्गीभावभेदतः ।
द्वैरूप्यमभवत्तेषां अङ्गाङ्गीभावहेतुतः ॥ १४

एकेनाङ्गमभूद्व्याप्यङ्गी लोकेषु चेतरत् ।
अङ्गानि हरिवक्त्राणि तानि सिंहासनादितः ॥ १५

तदात्मकानि मामेव धारयन्ति रमां सदा ।
यया शक्त्या जगदिदं दधार परमेश्वरी ॥ १६

पद्माकारेण सा शक्तिः दधार पुनरेव ताम् ।
या विद्या सर्वलोकानां जगत्प्रावरणाय तु ॥ १७

सैवाच्छादनरूपेण छादयामास तां पराम् ।
शब्दब्रह्म यदेकं तत्........स्वरूपकम् ॥ १८

विपञ्चीरूपतो देवि सेवते सर्वदेश्वरीम् ।
प्रभावाद्वा पदाकाराद्वर्णस्तम्भकशोभिनी ॥ १९

वाणी सुरद्रुमलता स्तम्भ(ब)काङ्गा निषेवते ।
तारतम्यविभागस्था जगतः स्थितिकारिणी ॥ २०

पद्माकारेण सा पद्मा सेवते परमेश्वरीम् ।
स्वतोऽप्यनन्यसद्भावात्स्वात्मदर्शन कारणम् ॥ २१

यद्विशुद्धतमं ज्ञानं दर्पणाङ्गेन सेवते ।
आदिः सर्वस्य चिच्छक्तिः प्राणा नाममयी च सा ॥ २२

सेयं पुष्पेण रूपेण सेवते परदेवताम् ।
योऽखिलानां हि जन्तूनामास्थायाभिमनोरथम् ॥ २३

इच्छाविहारी लोकेषु सेष्वासां सेवतेऽम्बिकाम् ।
योऽसौ मनसि जन्मा... देव्यान्तानि सर्वाणि ॥ २४

यानि सर्वाणि भूतानि पृथिव्यादीनि संशयः ।
तान्येव शालिकलिकारूपेणेमां भजन्ति हि ॥ २५

कला काष्ठा मुहूर्तं तु युगमन्वन्तकल्पकाः ।
कालक्लृप्तिरियं देवीं मालारूपेण सेवते ॥ २६

यो धर्मः सर्वलोकेषु भूतानामभयङ्करः ।
स एव हय(हार)रूपेण सेवते परमेश्वरीम् ॥ २७

यत्तत्स्वतन्त्रभूतानां प्रवर्तकनिवर्तकम् ।
तदेव वरदाकारं कर्म(रं)संसेवतेऽम्बिकाम् ॥ २८

दिव्यसिंहासनारूढां दिव्याभरणभूषिताम् ।
चन्द्रसूर्याग्निनयनां चन्द्रार्ध(सचन्द्र) कृतशेखराम् ॥ २९

शेखरीकृतरत्नाख्यां वर्णमालाविभूषिताम् ।
पद्मं सुरद्रुमलतां मुकुरं च विपञ्चिकाम् ॥ ३०

पुष्पास्त्रमिक्षुचापं च शाल्यग्रं गन्धमालिकाम् ।
धारयन्त्यभयं दानं दशभिर्हस्तपङ्कजैः ॥ ३१

चामरव्यजनच्छत्रयुक्ताभिः पञ्चशक्तिभिः ।
सेव्यमानामनारम्भां जगदारम्भरूपिणीम् ॥ ३२

जगद्रक्षोदयां देवीं दिव्यामानन्दविग्रहाम् ।
महदाद्यखिलाकारां महालक्ष्मीति तां विदुः ॥ ३३

स्थापिता पूजिता जप्ता स्तुता वापि स्मृताऽपि वा ।
ददाति परमैश्वर्यं भक्त्याऽनायसतोऽम्बिका ॥ ३४

इति सौभाग्यचिन्तामणौ उत्तरखण्डे एकादशः पटलः ॥

## द्वादशः पटलः

### देवीस्वरूपम्

इदं च परमं रूपं महादेव्याः शृणु प्रिये ।
यद्रूपध्यानमात्रेण सर्वान्कामानवाप्नुयात् ॥ १

उद्यदादित्यसङ्काशां विद्युल्ललितवाससम् ।
सर्वशृङ्गारवेषाढ्या सर्वाभरण भूषिता ॥ २

योनिं लिङ्गं च बिभ्राणा दर्पणं शालिमञ्जरीम् ।
लोकनिर्माणचतुरा सर्वलोकस्य रूपिणी ॥ ३

सेव्यमाना तु पुरुषैः स्वानन्यैः शक्तिभिः सदा ।
स्तूयमाना मुनिवरैः कपिलाद्यैर्महात्मभिः ॥ ४

योऽन्वहं भावयेद्देवीं भक्तियुक्तेन चेतसा ।
निधानमयमेवं स्यात्सुतश्रीयशसां भुवि ॥ ५

इदं प्रकृतिरूपेषु विभक्तेषु च सर्व(सहस्र)शः ।
प्रधानमादिभावत्वान्नाम्ना सा च प्रधानका ॥ ६

इदमन्यत्परं रूपं रहस्यातिरहस्यकम् ।
अनन्यभावाद्विज्ञाता (ख्याता) मायावी(ह्रीः)चिरकालतः॥ ७

सत्वोद्रिक्तमिदं रूपं किञ्चिदन्यगुणान्वितम् ।
यद्रूपान्मन्मथो देवि जगदेकप्रवर्तकः ॥ ८

महत्तत्त्वं प्रशंसन्ति यमनादिगिरोऽम्बिके ।
अन्योन्यमविनाभावादुक्तिमाहुरहंकृतिम् ॥ ९

अर्थिप्रत्यर्थिभावेन प्रवर्तकनिवर्तकम् ।
आश्रमाणां विशेषेण विशेषेण प्रसूचितम् ॥ १०

सुदासमुद्रमध्यस्थरत्नद्वीपसुधान्तरे (पान्तमण्डपे) ।
दिव्यसिंहासनारूढां दिव्यस्त्रीगणसेविताम् ॥ ११

उद्यदादित्यबन्धूक जपादाडिमसन्निभाम् ।
अनौपम्यमहाधार सौन्दर्यामृतसागराम् ॥ १२

उद्यत्कोटिरविप्रख्य किरीटोत्तममण्डिताम् ।
राकाशशाङ्क साहस्र द्योतमानमुखाम्बुजाम् ॥ १३

सर्वाभरणसंयुक्तां पीनवृत्तपृथुस्तनीम् ।
तनुमध्यां पृथुश्रोणीमुद्यद्रविनिभाम्बराम् ॥ १४

कदलीललितस्तम्भ सुकुमाराङ्कुरोरुकाम् ।
गूढगुल्फ पदद्वन्द्व मञ्जुमञ्जीर शोभिताम् ॥ १५

कमनीयमहोदारां पीनो(भीमो)द्भासितमालिकाम् ।
आजानुलम्बिरुचिरभुजाष्टकविभूषिताम् ॥ १६

पाशाङ्कुशेक्षुकोदण्डपञ्चबाणोपशोभिताम् ।
लिङ्गं च योनिमादर्शं शालिस्तबकमेव च ॥ १७

धारयन्तीं सदा देवीं जगदुज्जीवनोन्मुखीम् ।
नित्यामनित्यविभवां सदा षोडशवार्षिकीम् ॥ १८

परानन्दमयाकारां परमार्थाभिधानिकाम् ।
यः स्थापयेत्पूजयेद्वा जपेद्वा चिन्तयेत्तु वा ॥ १९

तत्फलं नैव शक्नोमि वक्तुमाभूतसंप्लवम् ।
स एवाहं हरिश्चैव विधिश्चेन्द्रः सुरास्तथा ॥ २०

स एव सिद्धयो लोके सैव स्यान्नात्र संशयः ।
अष्टादशकलाभानुसंख्यैर्बाहुभिरुज्ज्वलम् ॥ २१

नानायुधधरं रौद्रं महाकाल्यादिकं मतम् ।
राज्ञां तु विजयार्थाय वेदितं सर्वसिद्धिदम् ॥ २२

महाद्रौ विपिनारामनदीसेतुषु संस्थितम् ।
ग्रामादिषु प्रकुर्वीत द्विभुजं वा चतुर्भुजम् ॥ २३

तत्तद्गुणानुगुण्येन विविधं द्विभुजं भवेत् ।
लिङ्गयोनियुतं त्वाद्यं द्विभुजं परिचक्षते ॥ २४

ज्ञानमुद्रायुतं वापि विपञ्चीसहितं तु वा ।
पाशाङ्कुशयुतं वापि त्रिविधं सत्यलक्षणम् ॥ २५

कपालशूल संयुक्तं (वृत्तं) चर्मखड्गयुतं तु वा ।
नृपाणां विजयार्थाय चोदितं सर्वसिद्धिदम् ॥ २६

एवमेतानि रूपाणि प्राधान्येनैव सुन्दरि ।
बहूनि सन्ति चान्यानि मया वक्तुं न शक्यते ॥ २७

प्रधानं सर्वरूपाणां पूर्वमेव समीरितम् ।
यतो भवन्ति रूपाणि सर्वाण्यपि वरानने ॥ २८

चतुर्भुजामुदाराङ्गीं सिन्दूरारुणविग्रहाम् ।
पाशाङ्कुशेक्षुकोदण्डपञ्चबाणलसत्कराम् ॥ २९

सर्वाभिरणसंयुक्तां सर्वावयवसुन्दरीम् ।
निदानभूतां सर्वेषां नित्यतृप्तां निरञ्जनाम् ।। ३०

यः स्थापयेत्पूजयेद्वा स्मरेद्वा परमेश्वरीम् ।
अनेन वपुषा युक्तामध्यात्मा सैष एव सः ।। ३१

इति सौभाग्यचिन्तामणौ उत्तरखण्डे द्वादशः पटलः ।।

## त्रयोदशः पटलः

### दीक्षाविधिः-१

देव्युवाच—

भगवन्केन विधिना पूजिता साधकोत्तमैः ।
मुदिता वाञ्छितान्येषां योजयत्यखिलेश्वरी ।। १

यदनुक्तमिदं पूर्वं अनन्यविदितं तु यत् ।
तदहं श्रोतुमिच्छामि कृपया वक्तुमर्हसि ।। २

ईश्वर उवाच—

शृणु देवि प्रवक्ष्यामि यन्मां त्वां परिपृच्छसि ।
यस्य श्रवणमात्रेण सर्वज्ञः सर्वसिद्धिमान् ।। ३

सर्वेषु देशकालविशेषेषु विशेषतः ।
पूज्यात्मपरयोः सिद्ध्यै पञ्चदीक्षापरायणैः ।। ४

समयश्च विशेषश्च निर्वाणाचार्यपूर्वकाः ।
मन्त्रोपदेशसमयी(ये) विशेषो नवभिर्घटैः ।। ५

सामान्योऽष्टशतैः कुम्भैः आचार्यः षोडशी(शो)भवेत् ।
महाषोढाभिषेकस्तु पूर्णाख्या समुदाहृता ।। ६

समयेन भवेद्देव्याः विशेषेण शतक्रतुः ।
बृहस्पतिः स निर्वाणात् आचार्यो जायते विधिः ॥ ७

पूर्णे(ज्ये)न्दुर्जायिते ब्रह्म यदद्वैतं परं महत् ।
क्रमेणैव तु कर्तव्यं दीक्षापञ्चकमम्बिके ॥ ८

मूर्तिक्रम(क्रम)ग्रहकला त्रिपक्षाः स्युः क्रमादिमाः ।
व्रतं च प्रतिमादीनामादावेव प्रकीर्तितम् ॥ ९

अङ्कुरं चाभ्यनुज्ञा च मौञ्जीकृष्णाजिनादिकम् ।
मण्डलं वेदिस्तम्भाश्च होमकुण्डविधिस्तथा ॥ १०

होमं तु द्विविधं प्रोक्तं पाशाद्यावेष्टिकृत्यपि ।
साधारणाग्निसंस्काराः सर्वकर्मसु सर्वदा ॥ ११

नवादिचैकविंशान्तमरत्नं नामदुत्तमम् ।
पशवो मधुपिष्टोनं(ष्टान्नं)पुरतोवेदि कारयेत् ॥ १२

जगत्प्राणधरो वायुस्तद्वाच्यस्तु यकारकः ।
उकारं तु समाहारे(ये)पकारः पाल(प्लाव)नान्ययोः ॥१३

''अशेषकर्मनिलय सर्वकर्मस्वरूपक ।
रुद्रमूर्ते महायूपकर्मणः फलदो भव ॥'' १४

गन्धपुष्पादिनाभ्यर्च्य नववस्त्रेण वेष्टयेत् ।
सर्वं(व्यं) कृष्णतनुच्छायं रक्तं वा वनसंभवम् ॥ १५

कृष्णं रिपुविनाशाय विद्यायै श्वेतमुच्यते ।
रक्तं सर्वसमृद्ध्यै(द्धिः) स्यात्सर्वं वा सर्वदं भवेत् ॥१६

संस्थाप्य वा मार(न)हित तत्तद्बीजैः समर्चयेत् ।
ततस्तं पाशबीजेन वेष्टयित्वाऽङ्कुशेन तु ॥ १७

तं यूपे बन्धयित्वा तु समसुक्तथश्च वर्मणा ।
ततः कर्ण(ण्ठ)मुपागत्य ध्यात्वा शिवमथाग्रतः ॥ १८

ऐक्यं च शिवगोस्थानं भावयन्प्रजपेदिदम् ।
''शिवोत्कृत्त(त्कृत)मिदं पिण्डमतस्त्वं शिवतां व्रज ॥१९

उद्बुध्यस्व पशो त्वं हि नाशिवस्त्वं शिवो ह्यसि ।
प्राकृतानीह भूतानि मोन्तिकं देहमुच्यते ॥ २०

तदेव प्राकृतं देहं प्रकृतावेव लीयते ।
त्वया एवमिदं चैव सा सृष्टेर्देह वेद सः ॥ २१

अतस्त्वमार्या मां रक्ष देवदेवी महेश्वरी ।
जीवदानमिदं दत्वा आत्मप्रतिनिधिं पशुम् ॥ २२

वर्मणाऽलङ्कृतं कृत्वा प्रोक्ष्यास्त्रेणास्त्रमुज्ज्वलम् ।
देवतायै इदं'' इति छेदयेद्विधिपूर्वकम् ॥ २३

मूलकुण्डात्समाहृत्य वेदिमध्ये निधाय च ।
पुनः संस्कृत्य विधिवत् किञ्चिदाहृत्य चोत्तरे ॥ २४

निधाय चुल्ल्या मध्ये तु ज्वलन्सम्यक् त्रिकेन्धनैः ।
आभिचारे पुरा केचित्सर्वत्र प(व)रतो मया ॥ २५

वापी(वपा)मुत्कृत्य विधिवत् श्रपयित्वाऽग्निमन्त्रतः ।
स्वाहान्तेन तु मूलेन जुहुयाद्देवतां स्मरन् ॥ २६

तदंशमांसान्यादाय तदभिव्यञ्जनादिकम् ।
श्रपयित्वा कटाहे तु संस्कृत्यान्येन वै पुनः ॥ २७

श्रीचक्रन्यासमार्गेण जुहुयादङ्गशः क्रमात् ।
एकमेकं पशव्यं तु चैकाहे तु विधीयते ॥ २८

क्रमेण नवचक्रस्थयोगिनीनां दिने दिने ।
पशुरेकः प्रधानस्य तथैकः परिकथ्यते ॥ २९

नित्यमष्टौ पशून्हन्यात्तथैवाचार्य संज्ञितिः ।
देव्याश्चक्रस्थितानां च विघ्नादीनां च षट् क्रमात् ॥ ३०

पूर्णाख्ये तु कलासंख्याः पशवो नित्यमीरिताः ।
त्रिप्र(प)धानस्य चैकैकमन्ययोः षट्षडीरितम् ॥ ३१

नवैव नवचक्राणां पृथगेव वदन्त्यपि ।
तत्रस्थदेवतानां तु समवाह्या(या)द्वपाहुतीः ॥ ३२

अथ सर्वेषु कुर्वीत दिनेषु प्रातरेव हि ।
ज्वालामालिनिकातृप्त्यै (द्रव्यैः) तप्तान्य(ज्य)क्षीरपाचनम् ॥ ३३

बहिरभ्यर्च्य तन्मन्त्रैः पात्रमासनमन्त्रतः ।
तत्सूक्तेन पुनर्दत्वा मूलमन्त्रेण वापयेत् ॥ ३४

फलैश्च पायसैर्मांसैः दिनेषु क्रमशो हुनेत् ।
प्रातर्मध्याह्न सायाह्न कृतमेवं विशेषतः ॥ (चक्षणः) ३५

आदौ तु नवहेमेन कुर्वीत प्रतिमाद्वयम् ।
चतुर्द्वारयुते रम्ये मण्डपे वेदिकाद्वयम् ॥ ३६

दक्षिणे सप्त धान्यानि उत्तरे मण्डलं भवेत् ।
पश्चिमे वेदिकायां वा पीनस्यां(शान्यां)वा घटान्यसेत् ॥ ३७

कुम्भानां परितः कुर्यान्नव सप्तापि पञ्च वा ।
पश्चिमे सदनं पञ्चासदस्यैः परिशिष्यताम् ॥ ३८

सर्वाभरण संयुक्ता समौञ्जी क्षौमवासिनी ।
अरोगा कर्मकुशला तत्त्वज्ञानार्थदर्शिनी ॥ ३९

भर्तुः प्रियतमा नित्यं पातु सा दीक्षिता भवेत् ।
पतिहीना तु या नारी त्यक्ता वा तस्य दोषतः ॥ ४०

भक्तिश्रद्धायुता सा चेत्तां युंज्यात्समयाध्वना ।
तथाविधं च पुरुषं युंज्यान्निर्वाणमार्गतः ॥ ४१

बाल्यादेव तु या मोहादनुरक्ताऽन्यथा स्त्रियः ।
पश्चाद्विवेकिनौ जातौ यष्टारौ तावुभावपि ॥ ४२

तथैव पतिहीना चेदज्ञातग्राम्यधर्मिणी ।
अनन्यसङ्गता सा चेद्यष्टुमिच्छेत्तया सह ॥ ४३

अद्य नाथ त्वया दत्ता या कन्या यौवनं गता ।
अयुक्ता वाऽपि युक्ता वा स्वयुक्ता द्वादशाब्दकम् ॥ ४४

गन्धर्वोद्वाहवानेषु विवेकी यष्टुमर्हति ।
तथा गौरीशिवाकारौ दीक्षितावन्यतोऽपि वा ॥ ४५

संयुक्तौ योगिनी योगी न दोषः क्रमतोऽपि वा ।
अतो हि मिथुनत्वेन यष्टव्यमुदयार्थिना ॥ ४६

मिथुनत्वेन संपूज्य सहाचार्येण ऋत्विजा ।
सदारान् ब्राह्मणांश्चैव तोषयेद्भोजनादिभिः ॥ ४७

मिथुनीभूय कर्तव्यं प्रदा(दे)यमुदयार्थिभिः ।
व्रतान्ते प्रतिमां दद्यात्तावद्दक्षिणया युताम् ॥ ४८

दीक्षान्ते प्रतिमां दद्यात्तावद्दक्षिणया युताम् ।
दीक्षान्ते प्रतिमां दद्यादाचार्याय द्वितीयकम् ॥ ४९

तां प्र(प्री)ति दक्षिणां दद्यात्स्वयं वा संप्रपूजयेत् ।
वेदपारायणाद्यैस्तु चतुर्दिक्ष्वपि घोषयेत् ॥ ५०

पशुतन्त्रं पुराकृत्वा होमं कृत्वा यथाविधि ।
सप्तधान्यस्थबिम्बस्य पुरतस्तु महागदः(भत) ॥ ५१

महागदा(भिधा)ख्यकुम्भानां अग्रतश्चैव वह्निना ।
(अग्रतो वह्निना तथा) ।
नानामधुरसाद्यैस्तु बहुधा भक्ष्यभोज्यकैः ॥ ५२

नानाविधो(मूलादिनो) पचारैश्च दत्वानीराजनादिकम् ।
आचार्यमृत्विजः सम्यक्सदारान् भोजयेदपि ॥ ५३

सहस्रैर्नामभिस्तस्या यजमानो दृढव्रतः ।
कुर्वीत जागरं रात्रौ पशुतन्त्रं विधाय च ॥ ५४

सौभाग्यहृदयं शक्तिं(क्त्या)तेभ्यो दद्याच्च दक्षिणाम् ।
नित्यमभ्यर्चयेद्देवीं पूजान्ते कुसुमैः शुभैः ॥ ५५

सहस्रैर्नामभिस्तस्या यजमानो दृढव्रतः ।
नैवेद्यं पशुहोमान्ते ततः सोमं(मः) प्रचक्षते ॥ ५६

नालिकेरभवं सौम्यं सोमं वा सोममर्च्यते ।
तदन्ते वारुणेष्टिं च त्वक्त्वा कृष्णाजिनादिकम् ॥ ५७

प्रतिमां गुरवे दत्वा वस्त्रदानं च कारयेत् ।
उपयुक्तानि सर्वाणि दद्याच्छालां च वह्नये ॥ ५८

ततो वारुणसूक्तेन कृत्वाऽवभृतमज्जनम् ।
आचार्यं प्रीणयेद्यत्नात्स्वार्थैर्वा सकलैरपि ॥ ५९

यथोक्तदक्षिणां दद्यादृत्विग्भ्योश्चैव(ऽन्येभ्य) एव च ।
पशुतन्त्रमिदं प्रोक्तं सर्वेषामिष्टसिद्धिदम् ॥ ६०

राज्ञां चैव विशेषेण कर्तव्यं श्रेय इच्छता ।
अन्ये बहुविधाः सन्ति क्रतवोऽस्मिन्मतेऽम्बिके ॥ ६१

ऐकान्तिकमनेकान्तमङ्गं साङ्गमनङ्गकम् ।
अशिष्टं बहुशिष्टं च सशिष्टकमनन्तरम् ।। ६२

अनन्तशिष्टकं चैव भावं च बहुभावकः ।
अभावं भावुकं चैव निर्धारो(नो)धनकौ तथा ।। ६३

धारिकं च युतं चैव नियम्यं च नियामकम् ।
वैद्यपौत्रं च ऋध्यं च ओजसं पौष्टिकं तथा ।। ६४

आग्नेयं चैव वार्ष्णेयं ओषर्धी चाप्यतापनम् ।
आरोग्यं चैव वश्यं च सर्वसंमोहनं तथा ।। ६५

धर्म्यमर्थ्यं च काम्यं च तथा निर्वाणसंज्ञिकम् ।
सामान्यदीक्षासहितं षड्विंशद्भेदमुच्यते ।। ६६

अजो विमृजसारंग पौ(वौ)त्री खड्गमृगो कुरुः ।
शशशल्यकगोछागचटकं कलविङ्कका: ।। ६७

ताम्रं पुटो जलोत्थं च धन्यो बर्हिकपोतकम् ।
वन्यश्च फलिकाकाश्च खड्गमीनं च दण्डकम् ।। ६८

कच्छपो जलहारी च नलमीनो जलेचराः ।
अलर्जोमजप्रियालो हंससद्धीकरं मृदु ।। ६९

ततो मधुरमांसश्च पिप्पलस्वादुकेमृतः ।
आम्लमांसपृथुग्रीवसुग्रीवा दीर्घलोचना ।। ७०

अरोमशो नास्थिकश्च शुद्धमांसाऽप्यचर्मका ।
अरजूकश्चत्तपि(पी)तौ कृष्णो नीलो हरिद्रकः ।। ७१

कृष्णवर्णश्च शकुनी मांसलोऽण्डजवल्लभः ।
शक्तीनां पशवो ह्येते क्रतूनामिह चोदितम् ।। ७२

भेरुण्डोरिगजोष्ट्रश्च व्याघ्रश्च महिषो हयः ।
ऋषभो गवयो गृध्रो वैश्यः क्षत्रियः एव च ॥ ७३

ब्राह्मणश्च क्रमादेते पशवो द्वादश स्मृताः ।
भेरुण्डादि द्विजाताश्च मेधा(षा)द्वादश कीर्तिताः ॥ ७४

गवयाद्या द्विजाताश्च केचिदाहुर्मनीषिणः ।
द्वादशैते महायज्ञाः पराशक्तिमयाः शुभाः ॥ ७५

अष्टौ च चत्वारिंशच्च क्रतवश्च मयोदिताः ।
अष्टाविंशतिसाहस्रैः सप्तसप्ततिसंयुतैः ॥ ७६

क्रतुतन्त्रं मया प्रोक्तं पृथगेव वरानने ।
तस्मादिह विनिस्मृत्य संक्षेपेण मयोदितम् ॥ ७७

क्रतूनामानुगुण्येन फलं तत्रैव शोभितम् ।
पञ्चदीक्षाविधानं च तत्र विस्तरतोदितम् ॥ ७८

सर्वासामङ्गशक्तीनां लक्षणं तत्र चोदितम् ।
इह तु प्रतिमामात्रं तत्प्रसङ्गान्मयोदितम् ॥ ७९

इति सौभाग्यचिन्तामणौ उत्तरखण्डे त्रयोदशः पटलः ॥

## चतुर्दशः पटलः

### दीक्षाविधिः—२

देव्युवाच—

शृण्वन्त्या अपि मे नाथ त्वद्वाक्यं चित्तसंशयम् ।
दुर्बोधादस्य शास्त्रस्य नोद्बुद्धमपि जायते ॥ १

यदनुक्तमिहामुत्र किञ्चिदन्वेति मे मनः ।
सर्वसंशयनाशाय भूयो मे वक्तुमर्हसि ॥ २

ईश्वर उवाच–

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
रहस्यातिरहस्यत्वाद्यन्मया गोपितं पुरा ॥ ३

श्रोत्र(तृ)वक्त्र(क्तृ)समायोगात् ऋजुभावाद्गुरोः सदा ।
लभ्योऽपि देयं शास्त्राणामुपर्युपरि बन्धनात् ॥ ४

द्रष्टव्या सर्वदा देवि विशेषस्तत्र तत्रतः ।
दृष्ट्वाऽपि तत्तत्कालेषु कर्तव्यमिह सूरिभिः ॥ ५

दीक्षाभिषेकं त्रिविधं वर्णानामनुसारतः ।
ब्राह्मणानां नृपाणां च मुख्येनैवाभिषेचयेत् ॥ ६

मध्यमेन तु शूद्रस्य हीनेनान्यमुपाचरेत् ।
अष्टौ च चत्वारिंशच्च यज्ञा यस्मिन्मयोदिताः ॥ ७

स्वपराख्यानि कर्माणि सकुम्भान्येव कारयेत् ।
धारयेत्पश्चिमे कुम्भं छत्रं पाण्डरमुज्ज्वलम् ॥ ८

पार्श्वयोश्चामरे दद्याल्लम्बमानौ यथारुचि ।
रक्तवस्त्रोपहारश्च दद्यादारक्तचन्दनम् ॥ ९

नव रत्नानि निक्षिप्य सप्त बीजानि निक्षिपेत् ।
द्विसप्तान्योषधीनि स्युः महीवृक्षाम्बुजानि च ॥ १०

कुसुमानां त्रयस्त्रिंशत् महावृक्षांशजानि च ।
बहिरभ्यर्चनं कुर्यात् त्रिरात्रादधिकेषु च ॥ ११

सामुद्रनाद्यताटाकनादपौष्करवारिभिः ।
प्रशस्ततीर्थसंभूतैः दूरदेशादुपागतैः ॥ १२

अद्रिपूरा (तिदूरा)त्प्रशस्तेभ्यः तीर्थेभ्यो जलमाहरेत् ।
यावद्दूराद्धृतं तोयं तावत्तस्य प्रशस्तता ॥ १३

सहस्रतोयसम्पूर्णं दीक्षाकुम्भं प्रशस्यते ।
अर्धेन वा तदर्धेन तदर्धार्धेन वा पुनः ॥ १४

शतमष्टोत्तरं वाऽपि तन्न्यूनं न प्रशंसितम् ।
ब्राह्मणः स्नातु सौधाग्रे विशाले मध्यमे नृपः ॥ १५

वैश्यो धरण्यां कुर्वीत शूद्रं निम्ने तु कारयेत् ।
न दीक्षयेद्विशेषाद्यैः सुयुक्तं चापि शूद्रकम् ॥ १६

एककुम्भविधानेन युक्तः शूद्रेऽभिषेचयेत् ।
भक्तियुक्तः स ह भवेत् योक्तव्यः समयाध्वना ॥ १७

मन्त्रोपदेशः कर्तव्यो भक्तियुक्ताय धीमते ।
एकद्विरभिषेकं तु वीरो वेदान्तवित्तमः ॥ १८

योन्यालोभाज्जलमुखं समयाचारवर्जितम् ।
अभूम याजयेद्वाऽपि नारकौ द्वावुभावपि ॥ १९

अभिषेकविधं चैव पूर्वमेव मयोदितम् ।
तत्तन्मन्त्रक्रमादेव मध्वाज्याद्यभिषेचनम् ॥ २०

ऋत्विग्भिरेव जप्यानि वारुणान्यपि सर्वशः ।
प्रियंग्वक्षत भैमर्धिमौषधियुक्तमद्भिस्तथा ॥ २१

दत्वा तदङ्गे(दंशे) संस्नाप्य व्याघ्रत्वचि निधाय च ।
निशि रोचनया युक्त्वा दिव्यगन्धेन लेपयेत् ॥ २२

उपानहौ च वाराहौ दद्यादाचार्यसत्तमः ।
वैश्यस्य चोष्ट्रजौ दद्यादाजौ शूद्रस्य कारयेत् ॥ २३

शूद्रं समयसंपन्नं शूद्राः कुर्वन्ति सेवनम् ।
वैश्यस्य वैश्यशूद्रौ च क्षत्रियं क्षत्रियस्तथा ॥ २४

दिव्यसिंहासनारूढं षडाधारयुतं तु वा ।
आचार्यं कुरुते सेवां छत्रमादाय निर्मलम् ॥ २५

नृपो गृही च तत्पार्श्वे.....दक्षिणतो भवेत् ।
युवराजा च सेनानीः चामरग्राहकावुभौ ॥ २६

तद्ब्रह्मा चैव होता च व्यजनेन समन्वितौ ।
पादुकासहितो भूयादग्निध्रोऽवनिरक्षकम् ॥ २७

ये चान्ये धनयुक्तास्तु हेमदण्डधराः सदा ।
जयशब्दं प्रकुर्वाणाः ऋत्विजश्चाटुकारिणः ॥ २८

ये चान्ये तु महात्मानो दीक्षिता मुनयोऽपि वा ।
नमस्कुर्याच्च ते सर्वे ब्रह्मभूतो हि दीक्षितः ॥ २९

वीणावेणुमृदङ्गादि विविधातोद्यवादनैः ।
तथैव रथमारोप्य सभार्यं दीक्षितं तदा ॥ ३०

गजे वा शिबिकायां वा कुर्याद्ग्रामप्रदक्षिणम् ।
यागशालां च गत्वाऽपि विजयी स्वगृहं विशेत् ॥ ३१

एकद्वित्रिचतुः पञ्च दीक्षा पञ्चसु संख्यया ।
दिनवृद्ध्या निष्कवृद्ध्या गुरवे दक्षिणोदिता ॥ ३२

गुरोरनुगुणा देया होत्रादीनां तु दक्षिणा ।
सदस्येभ्यो यथान्यायं दद्याच्च बहु विस्तृतम् ॥ ३३

वीणावेणुधराश्चान्ये ये चान्ये चानुयायिनः ।
ते सर्वे दक्षिणावन्तः त्रयश्चापि विशेषतः ॥ ३४

एवं यः कुरुते दीक्षां विधिदृष्टेन कर्मणा ।
सर्वान्कामानवाप्नोति सर्वत्र विजयी भवेत् ।
ऐहिकानखिलान्भुक्त्वा देवीसायुज्यमाप्नुयात् ॥ ३५

इति सौभाग्यचिन्तामणौ उत्तरखण्डे चतुर्दशः पटलः ॥

## पञ्चदशः पटलः

### विशेषपूजाविधिः (१)

शृणु देवि प्रवक्ष्यामि काम्यपूजार्चनं परम् ।
यदशेषेण दुःखघ्नं रहस्यमतिगोपितम् ॥ १

पञ्चदीक्षायुतैरेव वीरैः समयवेदिभिः ।
कर्तव्यं भक्तिसंयुक्तैः आत्मनश्च परस्य वा ॥ २

अथवा भक्तिसंयुक्तैः कर्तव्यं ब्राह्मणोत्तमैः ।
पुण्यर्क्षतिथिवारेषु कृत्वा कवचमादितः ॥ ३

अङ्कुरं कौतुकं चैव कुर्यात्पूर्वदिनेऽपि वा ।
रक्तमाल्याम्बरधरः सर्वाभरणभूषितः ॥ ४

कुङ्कुमाद्यवलिप्ताङ्गः प्रविशेदालयं ततः ।
अलङ्कृत्य विधानेन धूपयित्वा सुधूपकैः ॥ ५

तत्र वेदिं समाधाय गोमयेनानुलिप्य च ।
सप्तधान्यैः परिस्तीर्य उपर्युपरि वेदितः ॥ ६

त्रिकोणवृत्तषट्कोणं रचयेत्तत्र मध्यमे ।
हैमं वा राजतं ताम्रं मृण्मयं वा घटं शुभम् ॥ ७

रचितं पञ्चवर्णेन स्थापयेद्वेदिकोपरि ।
एलाद्योषधयः पञ्च चन्दनाद्यैर्द्विधैव च ॥ ८

मूलेन निक्षिपेन्मध्ये मधुपं रमणीयकम् ।
आम्राग्रसूत्रकं रक्तं दर्शनीयं च कारयेत् ॥ ९

विशेषार्घ्यविधानेन घटसंस्कारमाचरेत् ।
सर्वलक्षणसंयुक्तां काञ्चिदादाय कन्यकाम् ॥ १०

अथवा तरुणीं रम्यां रूपयौवनशालिनीम् ।
एका वा द्विचतुर्धा वा नव द्वादश च क्रमात् ॥ ११

एका तु त्रिपुरा तत्र कामेश्वर्यादियुता रुतम् ।
कामेश्वर्यादिसंयुक्ता सैव द्वादशपक्षके ॥ १२

अभ्यज्य तिलतैलेन संस्नाप्य च यथाविधि ।
अलङ्कुर्याद्विधानेन वस्त्राभरण भूषणैः ॥ १३

ग्रामप्रदक्षिणं कुर्याद्रथेनैव गजेन वा ।
यागशालां प्रवेश्यैताः पाद्याद्याचरणान्विताः ॥ १४

महार्हमासनं दत्वा ध्यात्वा देवीं जगन्मयीम् ।
तत्तच्छक्त्यनुसारेण पशून्हन्याद्विधानतः ॥ १५

तत्र वह्निं समाधाय वपाहोमं च कारयेत् ।
श्रपयित्वा पलं पश्चात्तच्चतुर्धा विभज्य च ॥ १६

स्थापयित्वा घटान्ते तु समधूनि घटानि च ।
भक्ष्यभोज्यसमायुक्तं बहुशः परमौदनम् ॥ १७

सुरभीणि च पुष्पाणि गन्धांश्च सुमनोहरान् ।
प्रक्षाल्य पाणिपादौ च आचान्तः शुद्धचेतनः ॥ १८

तद्विधानासनासीनः प्राणानायम्य मूलतः ।
करशुद्ध्यादिकं कृत्वा वशिन्याद्यष्टकं तथा ॥ १९

षडङ्गध्यानसंयुक्तो यथाशक्ति जपेन्मनुम् ।
मण्डूकादि पृथिव्यन्तं अभ्यर्च्य घटमूलतः ॥ २०

योगिनीबीजतो वापि रक्षामात्मनि कारयेत् ।
पुरतो गोमयालिप्ते श्लक्ष्णे भूमितले शुभे ॥ २१

विशालं विलिखेच्चक्रं नवयोन्यात्मकं तु वा ।
ध्यात्वेमां देवताकारां तत्तत्स्थाने निवेश्य च ॥ २२

उपचाराणि कुर्वीत द्वात्रिंशत्संख्यया गुरुः ।
नानामांसासवरसैः बहुभिर्भक्ष्यभोजनैः ॥ २३

भोजयेत्प्रीणयेद्देवीं वस्त्रालङ्कारभूषणैः ।
पूर्वं विभक्तचरुणा पशव्येनाज्यसंयुतम् ॥ २४

मूलेनाष्टशतं हुत्वा दशांशेनाङ्गयोगिनीम् ।
कन्यकायेति मूलेन हुनेदष्टोत्तरं शतम् ॥ २५

तिस्रो न्यासांस्तु होतव्यं हविषाऽऽज्येन वा तथा ।
मूलेन वौषडन्तेन ततः पूर्णाहुतिं हुनेत् ॥ २६

उत्सवं कारयेत्पश्चात्तद्रात्रौ प्रातरेव वा ।
आत्मनो यदि कुर्वीत ब्राह्मणानां तु भोजनम् ॥ २७

आत्मार्थे वा परार्थे वा गुरवे दक्षिणां दिशेत् ।
एवं यः कुरुते पूजां विशेषदिवसे नरः ॥ २८

विद्या च विजयश्चार्थः सुखं चाप्रतिमं भवेत् ।
धर्मार्थकाममोक्षाणां तिष्ठन्तीदं समाश्रिताः ॥ २९

रोगाद्दर्पाद्भयाद्रागाद्बहिष्ठो वर्तते सदा ।
बहुनाऽत्र किमुक्तेन श्रेय इच्छन्ति ये नराः ।
यजेत्त्वन्ये तु तैरेव जायन्ते सुखिनस्तदा ॥ ३०

इति सौभाग्यचिन्तामणौ उत्तरखण्डे पञ्चदशः पटलः ॥

## षोडशः पटलः

### विशेषपूजाविधिः—(२)

इदं च शृणु वक्ष्यामि रहस्यमपि भामिनि ।
यज्ज्ञात्वा मुच्यते मोहाद्दौर्भाग्याद्व्याधिसाध्वसात् ॥ १

दीक्षितो भक्तियुक्तश्च सर्वतन्त्रविशारदः ।
धृतरुद्राक्षवलयः पद्ममालाधरोऽपि वा ॥ २

रुद्राक्षमाला मुक्तिः स्यात्पद्माक्षी पद्मया युता ।
विद्यानिधिस्तु शङ्खाक्षी सर्वं वा सर्वदा भवेत् ॥ ३

गोरोचनायुतेनैव रक्तचन्दनदारुणा ।
गोपीचन्दनतो वाऽपि मृदा वा भस्मनाऽपि वा ॥ ४

द्वीपमाम्रदलाकारं धारयेत्पुण्ड्रमन्वहम् ।
त्र्यश्रं वा धारयेद्देवि तौ हि भोगापवर्गदौ ॥ ५

त्रिपुण्ड्रं भस्मना कुर्यात्तेनान्येनैव कारयेत् ।
सुश्वेतान्तःपरीधानो बहिः कौसुम्भधारकः ॥ ६

रक्तवस्त्रधरो वाऽपि रक्तचन्दनचर्चितः ।
नित्यमर्पिततताम्बूलो धीरो निर्मलचेतनः ॥ ७

तपस्वी सत्यवादी च धार्मिको ऋजुरास्तिकः ।
दीक्षाविशेषसंपन्नो ब्राह्मणो नृपतिस्तु वा ॥ ८

एवं लक्षणसंपन्नः स्वान्परानपि रक्षति ।
नित्यं नैमित्तिकं काम्यं आत्मनश्च परस्य च ॥ ९

कर्तुमर्हन्ति ते सन्तः साक्षाद्देवीमया हि ते ।
नित्ये नैमित्तिके चैव काम्यपूजाविधौ तथा ॥ १०

तत्तत्कर्मानुगुण्येन होमं कुर्याद्विचक्षणः ।
विना होमं न शंसन्ति परार्थं कर्म कर्मठाः ॥ ११

तदेवादौ प्रकुर्वीत यागमण्डपमादितः ।
द्वादशेनैव हस्तेन यागशालां तु सर्वतः ॥ १२

अत्र कर्मगुरुत्वेन द्वात्रिंशद्धस्तमीरितम् ।
बहुवातायनं रम्यं द्वारकूपसमन्वितम् ॥ १३

सरमुक्तरुचाज्वालं वेदित्रितयभूषितम् ।
नवकुण्डेन युक्तं च रत्नस्तम्भान्तयोजितम् ॥ १४

स्तम्भानां तु चतुःषष्ट्या तदर्धो वा ततोऽपि वा ।
चतुर्द्वारसमायुक्तं द्वारं तत्त्वततोरणम् ॥ १५

वितस्तिद्वितयाभासद्वारपार्श्वं मनोहरम् ।
एवं तु मण्टपं कृत्वा कुण्डान्यन्तस्तु कारयेत् ॥ १६

सर्वमध्ये तु कुर्वीत महावेदीं सुशोभनाम् ।
मानाङ्गुलविधानेन षण्णवत्यङ्गुलायताम् ॥ १७

कुण्डं वा मध्यमे कुर्यात्कोणाष्टकविभूषितम् ।
नवत्रिकोणकुण्डं वा नवयोनिविराजितम् ॥ १८

पश्चिमे वाऽपि कुण्डानां महावेदीं तु कारयेत् ।
अन्तरे मण्डलं कुर्यात्तयोर्वा दक्षिणेऽपि वा ॥ १९

अष्टकोणं भवेत्पूर्वे चतुरश्रमथापि वा ।
वृत्तं वा तत्र कुर्वीत महावेदिं (अर्धचन्द्रं) हुताशने ॥ २०

त्रिकोणं वाऽत्र कुर्वीत दक्षिणे च त्रिकोणकम् ।
षट्कोणं नैरृते कुर्यात्पश्चिमे योनिरुच्यते ॥ २१

कुर्यादत्रार्धचन्द्रं वा वायौ तु चतुरश्रकम् ।
वृत्तं वा तत्र कुर्वीत उत्तरे नवकोणकम् ॥ २२

ईशेऽपि वृत्तं कुर्वीत वारुणेऽप्युत्सवादिषु ।
दीक्षां विना न कुर्वीत स्वार्थे कुण्डमनेकधा ॥ २३

स्वस्वकाम्यानुसारेण कुण्डं कुर्याद्यथोदितम् ।
यः पूजयति यां देवीं स तु कुर्यात्तदालये ॥ २४

अन्योत्र यद्यद्यजनं तदीयमपि तत्र तु ।
तत्कुम्भं (कर्तुं) वह्निभाण्डानि शालामपि महेशतः ॥२५

गृहे वा देवतावासे शालायां वा(वापि) दहेत्कचित् ।
प्रायश्चित्तार्थमस्यैव चाग्नेयं निर्वपेच्चरुम् ॥ २६

वाक्सिद्ध्यै योनिकुण्डे तु धवलैः कुसुमैर्हुनेत् ।
भगाङ्के करवीराद्यैस्तथैवाकर्षणे हुनेत् ॥ २७

नवत्रिकोणकुण्डे तु फलैः खेचरतां व्रजेत् ।
शान्तिः स्याच्चतुरश्रे तु तिलैरुत्पलकैश्च वा ॥ २८

पद्माङ्के सर्वसंपत्तिः पद्मैः बिल्वफलैस्तु वा ।
अष्टाश्रे पायसापूपैः यद्यदिष्टं तदाप्नुयात् ॥ २९

अर्धेन्दौ सप्तबीजानि त्रिंशत्सनथापि वा ।
साक्षाद्भवति लक्ष्मीशो मनोभव इवापरः ॥ ३०

त्रिकोणे रिपुणाविष्टो वृक्षादिभिर्हुनेत्ततः ।
षट्कोणकुण्डे होतव्यं भूतशान्त्यै मधूकरैः ॥ ३१

पञ्चकोणे सर्वसिद्ध्यै पक्वैर्बिल्वफलैर्हुनेत् ।
कुर्वीत नित्यहोमार्थे पूर्वोक्तैर्लक्षणैर्युतम् ॥ ३२

पुरो वा यागशालायां आसवत्यामथापि वा ।
गृहस्याग्नेय दिग्भागे होमागारं प्रशस्यते ॥ ३३

आत्मार्थे वा परार्थे वा पूजान्ते होम उच्यते ।
समिदन्नाज्यहोमस्तु सामान्येन विधीयते ॥ ३४

एवं कर्तुमशक्तश्चेत्तण्डुलैर्वा यवेन वा ।
पालाशकुसुमैः सद्यः कौसुम्भैर्वा गुडोदनैः ॥ ३५

पायसैः केवलान्नैर्वा तिलैर्वा नित्यमाचरेत् ।
सर्वमन्योन्यसंबद्धौ पूजाहोमौ सदोदितौ ॥ ३६

विशेषेण परार्थे तु स्वार्थेऽप्यानन्त्यमश्नुते ।
द्विविधो वह्निसंस्कारः इध्मनित्यविभागतः ॥ ३७

मुखान्तमाज्यभागान्तं इत्याहुर्द्विविधं पृथक् ।
आदौ विहितसंस्कारो यो वह्निः कुण्डसंस्थितः ॥ ३८

नाग्निकार्यं पुनः कुर्यात्केवलं होममाचरेत् ।
परिषेकोऽर्चना चैव प्रायश्चित्ताहुतिर्भवेत् ॥ ३९

पूर्णाहुतिस्तु सर्वत्र होमकर्मसु शस्यते ।
चरुहोमे तु कुर्वीत चान्त्यभागं तु लेपनम् ॥ ४०

मुखान्तमन्यद्धोमेषु न लेपमपि कारयेत् ।
वौषडन्तेन मूलेन आत्माष्टाक्षरतोऽपि वा ॥ ४१

हुत्वा पूर्णाहुतिं पश्चाद्दर्वीयुग्माढ्यसर्पिषा ।
फलमे.....चलैर्नैव पूर्णाहुतिमथाचरेत् ॥ ४२

घृतेन कुर्यात्सर्वत्र न चेत्स्विष्टकृतं हुनेत् ।
परिषिच्य समभ्यर्च्य नमस्कृत्य यथा तथा ॥
उद्वास्य देवीं हृदये चाग्निमुक्षेत वोद्वसेत् ॥ ४३

इति सौभाग्यचिन्तामणौ उत्तरखण्डे षोडशः पटलः ॥

## सप्तदशः पटलः

**दीक्षानिर्णयः**

श्रीदेव्युवाच—

कथमेवं विधान्यज्ञान् दुस्तरान्बहुदक्षिणान् ।
अकिञ्चनो हि लोकोऽयं करुणेश करिष्यति ॥ १

द्विविधं कर्म जानीहि दुष्करं सुकरं तथा ।
विधायको भवानेव सर्वेषामपि कर्मणाम् ॥ २

त्वयैवाहमनुग्राह्या सदैव करुणार्णव ।
तस्मात्त्वामेव पृच्छामि वद यत्ते(त्ने)न लभ्यते ॥ ३

तत्कृत्वा तन्मयो जन्तुः जायते परमेश्वर ।
आत्मार्थे च परार्थे च पूज्यपूजकतां व्रजेत् ॥ ४

ईश्वर उवाच—

साधु पृष्टं त्वया देवि सर्वलोकानुकंपया ।
इतः पूर्वं मया नोक्तं रहस्यत्वान्मयोच्यते ॥ ५

दीक्षालक्षणतत्त्वज्ञं स्वाश्रमस्थं तु वार्ध(धि)कम् ।
शिष्यो विनयसंपन्नो गुरुं सेवेत यत्नतः ॥ ६

चन्द्रतारानुकूलेषु कालेष्वभ्यधिकेषु च ।
दीक्षा महानवम्यादौ ग्रहणे वा प्रशस्यते ॥ ७

उपोष्य दिवसे रात्रौ कुर्यादङ्कुरकौतुकौ ।
विधाय कुर्याद्वपनं प्रातरुत्थो जितेन्द्रियः ॥ ८

प्रातर्वा सर्वकार्याणि कुर्वीत द्विजसत्तमः ।
स्नायाद्वा पञ्चगव्येन भक्तिश्रद्धासमन्वितः ॥ ९

कृतपूर्वाह्णिकः पश्चात्संपूज्य च यथा पुरा ।
देव्यास्तु दक्षिणे भागे वेदिं कुर्याद्विचक्षणः ॥ १०

षण्णवत्यङ्गुलायामं सिन्दूरेण मनोहरम् ।
श्रीचक्रं विलिखेत्स्पष्टं समशक्त्यग्निसंयुतम् ॥ ११

अभिन्नाकृतपूतेन सुश्वेतेनाभि(थ)वारिणा ।
ऊरोर(र्व)धो मध्ययोनिं(च)बिन्दुं कृत्वा तदन्ततः ॥ १२

दर्भेणोत्तंभनं कृत्वा तन्मध्ये कलशं न्यसेत् ।
ध्यात्वा षट्कोणगर्भे च वायुबीजं च वामया ॥ १३

अष्टौ च श्वासमापूर्य द्वात्रिंशत्कुम्भके पुनः ।
दक्षया षोडशावृत्त्या रेचयेदिति शोषणम् ॥ १४

त्रिकोणगर्भं संचिन्त्य वह्निबीजं तु पूर्ववत् ।
दक्षया पूर्वमात्राभिः द(दा)हनं संप्रचक्षते ॥ १५

तन्मुखे चन्द्रबीज(मध्य)स्थं सुधाबीजं विचिन्तयेत् ।
पूर्ववत्पूरकं कृत्वा कुम्भकं चापि कारयेत् ॥ १६

द्वादशान्तेन संयोज्य तत्रापि मुनिपञ्चके ।
ठकारं च तकारं च तन्मध्येऽमृतमण्डले ॥ १७

तस्मादधोमुखान्बिन्दून् पञ्चाशद्वर्णरूपिणीम् ।
पञ्चस्थानेषु संस्थाप्य रेचयेदथ मार्गतः ॥ १८

..........................पपातादिकं चरेत् ।
मन्त्रसन्दोहसन्नाहं विदधीत विधानतः ॥ १९

स्थित्वा बीजत्रयेणैव करशुद्ध्यादिकं चरेत् ।
स्वाधो हृदि च कुर्वीत आसां नाम चतुष्टयम् ॥ २०

माया च कामराजं च चन्द्रो मनुविसर्गयुक् ।
देव्यात्मासनमेतत्तु शक्त्या स्वेन च नामतः ॥ २१

शतौषधत्वचा चैव(धानां काथेन)पञ्चाशद्भिरथापि वा ।
तीर्थे वा शतसंभूतैः..........................॥ २२

अथवा पञ्चगव्येन पूरयेन्मूलमन्त्रतः ।
वस्त्रयुग्मेन संवेष्ट्य साम्रकेरफलं न्यसेत् ॥ २३

बीजरत्नानि धातूंश्च तत्तन्मन्त्रैः प्रविन्यसेत् ।
शाययित्वा जले तस्मिन् घटस्थे चक्रमुत्तमम् ॥ २४

नवचक्रेषु विधिवत्पूजयेद्योगिनीगणान् ।
मोह(रेच)नं पूरकं चैव क्षोभणं रक्षणं तथा ॥ २५

रोगघ्नं सिद्धिदं चैव सर्वानन्दमिति स्मृतम् ।
एवं लक्षणतत्त्वज्ञो भूयादाचार्यसत्तमः ॥ २६

दक्षभागेऽथवाऽग्रे वा गन्धपुष्पाक्षताक्यसेत् ।
अभितोदि(द्यु)तिजालानि मालाकारेण विन्यसेत् ॥ २७

सर्वत्र यागशालां च धूपयेदगरुद्रुमैः ।
सामान्यार्घ्यविधानादावर्चयेत्कुसुमादिभिः ।। २८

यजेत्पुष्पत्रयं पश्चाद्बीजत्रितयसंयुतम् ।
शोषदाहप्लवं कुर्याद्वाय्वग्निसलिलाक्षरैः ।। २९

प्राणायामत्रयं कुर्यात्स्मरन्विद्यां हृदा तदा ।
सूर्योक्तमनुभिर्युक्तः सुधाक्रमत्रयोदितम् ।। ३०

नत्यां स्वनाम्ना संयुक्तं अर्धेन्दुपरिभूषितम् ।
व्योमचन्द्राग्निसंयुक्तमर्धेन्दुपरिभूषितम् ।। ३१

तदेव चन्द्रमाराध्यं द्विविधं पू(वं)र्णमुच्यते ।
तदेव चन्द्रवर्णाढ्यं मनुसर्गयुतं प्रिये ।। ३२

सर्वमन्त्रासनायेति नमोऽन्तस्तस्य (नमोऽस्त्विवतिस) मन्त्रकः ।
मायामारौ तथा ब्लें स्थः साध्यसिद्धासनं मतम् ।। ३३

सदाशिवासनं देवि नाम्ना तु परिकीर्त्यते ।
देव्या एव तु कुर्वीत तत्तत्प्रासादपूर्वकम् ।। ३४

आसनानि विधायैव षडङ्गं च यथा पुरा ।
अष्टवर्गस्थमन्त्रस्य वशिन्याद्यष्टकं न्यसेत् ।। ३५

शङ्खं च वामभागे तु प्रतिष्ठाप्य यथाविधि ।
तत्तद्वर्णानुसारेण विशेषार्घ्यविधिं चरेत् ।। ३६

वर्णसंस्कारदोषोऽपि भक्तियुक्तस्य नेष्यते ।
द्रव्यैर्द्रव्यान्तरैर्वापि कुर्यादर्घ्यादिकं गुरुः ।। ३७

प्रक्षालयेत्तु चात्मानं पूजाप्रकरणान्यपि ।
प्राणायामत्रयं कृत्वा ध्यात्वा पूर्वोक्तमार्गतः ।। ३८

सन्तोषयेन्महादेवीं (व्याः) विशेषाद्देशिकोत्तमः ।
ततस्त्रिकोणरेखासु नित्याषोडशकं यजेत् ।। ४०

प्रतिपत्प्रभृतौ देव्याः पौर्णमासान्तिके क्रमात् ।
ततस्तिथिमयीं नित्यां नित्यकर्मसु पूजयेत् ।। ४१

सदाशिवादि(वेष)पूजासु पूजा सर्वत्र नान्यथा ।
आदौ कामेश्वरी नित्या भगमाली द्वितीयका ।। ४२

नित्यक्लिन्ना तृतीया च भेरुण्डा च चतुर्थका ।
पञ्चमी वह्निवासा तु महाविद्येश्वरी परा ।। ४३

सप्तमी शिवदूती च त्वरिता कुलसुन्दरी ।
मोहिनी च(नित्या चैव) ततः पश्चान्महानीलपताकिनी ।। ४४

विजया च ततो देवि ततो वै सर्वमङ्गला ।
ज्वालामाला च चित्रा च षोडशेमाः प्रकीर्तिताः ।। ४५

पृथक्तन्त्रोदितत्वेन नात्र विस्तारितं मया।
अनभिज्ञः स्वनाम्ना च कालयुक्तेन पूजयेत् ।। ४६

मध्यप्रान्तक्र(श्र)मस्यान्तस्थितिनित्यार्चनं पुनः ।
त्रिभङ्ग्या पूजयेन्मन्त्री गुरुपादक्रमावलिम् ।। ४७

पराख्यमपराख्यं च पुराख्यं च त्रिकात्मिका ।
मुनिवेदनागसंख्या सम्यग्ज्ञात्वा गुरून्यजेत् ।। ४८

मायामाराग्रबीजाद्यैः स्वनामभिरथार्चयेत् ।
अभिताग्राप्रतिर्देव्या अग्नीशासुरवायुषु ।। ४९

आदावेव चतुर्दिक्षु यजेद्गन्धादिभिर्बुधः ।
बाह्यचक्रेषु योगिन्याः तदुल्लाससमुद्भवाः ।। ५०

वक्ष्यमाणेन मार्गेण ध्येयास्तु सदृशाऽथ वा ।

प्रकटा च तथा गुप्ता तथा गुप्ततरा परा ॥ ५१

संप्रदाया कुलोत्तीर्णा निगर्भा च रहस्यका ।
अतिपूर्वरहस्याख्या परापररहस्यका ॥ ५२

नवधा नामसंकेताः योगिनीनां विधीयते ।
नवचक्रस्थिता ह्येता योगिन्यः कथिता मया ॥ ५३

त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी ।
श्रीर्मालिनी च सिद्धाम्बा महात्रिपुरसुन्दरी ॥ ५४

अतिगह्वरमेवेदं विद्यासङ्केतसंज्ञितम् ।
सत्सम्प्रदायसंसाध्य भुक्तिमुक्तिफलप्रदम् ॥ ५५

चक्रेश्वरीं यजेत्तत्र तच्चक्रार्चा अथापि वा ।
पूजायां प्रतिचक्रं तु मुद्रां सन्दर्शयेत्क्रमात् ॥ ५६

बाह्याद्यं पूजयेच्चक्रं मध्यं संपूज्य पूर्वतः ।
पूजयेद्गन्धपुष्पाद्यैः चक्रस्थाः सर्वयोगिनीः ॥ ५७

वाङ्मायामारसंयुक्तैः पूजयंश्च स्वनामभिः ।
पूजयन्योगिनीबृन्दं तत्तन्मार्गानुसारतः ॥ ५८

यजेद्बीजत्रयेणैव कामेश्वर्यादिकं तथा ।
दक्षतां च चतुर्दिक्षु षोडशान्तं विलोमतः ॥ ५९

अष्टाब्जे तु महादिक्षु दिग्विदिक्षु क्रमे यजेत् ।
मन्वश्रं तु विलोमेन दशारं च तथा यजेत् ॥ ६०

तदन्तःस्थदशारं च अष्टारं च विलोमतः ।
महादिक्षु क्रमेणैव बाणाद्यायुधपूजनम् ॥ ६१

अग्रे च दक्षोत्तरयोः कामेश्वर्यादिकान्यजेत् ।
मध्यदेशे विशेषेण महादेवीं पुनर्यजेत् ॥ ६२

विधाय वामभागे तु सवृत्तं चतुरश्रकम् ।
पात्रमध्यान्तसलिलं स्थापयेत्तत्र मध्यमे ।। ६३

सर्वविघ्नकरेभ्यस्तु सर्वभूतेभ्य इत्यपि ।
वर्मास्त्रान्तो मनुरयं मायालक्ष्मीसमन्वितः ।। ६४

बलिमन्त्रमिदं प्रोक्तं दिनेनैव बलिं दिशेत् ।
चतुरश्रे च वृत्ते च स्थापनं च तथा बलिम् ।। ६५

बध्वा च खेचरीमुद्रां दण्डवत्प्रणमेद्गुरुः ।
ततस्तु मण्डलं कृत्वा कलशस्य तु वामतः ।। ६६

प्रतिमां हेमरौप्याद्यां मृण्मयीं वात्र विन्यसेत् ।
सम्यक् प्राणान् प्रतिष्ठाप्य पूर्ववत्संप्रपूजयेत् ।। ६७

कलशे तु न्यसेत्पात्रं प्रोक्तद्रव्यसमन्वितम् ।
निवेद्य देव्यै जानुभ्यां स्पृष्ट्वा तु धरणीतलम् ।। ६८

स्वशिरः स्थाप्य गुरवे समुद्धृत्य प्रदापयेत् ।
आदद्यादात्मतत्त्वेन स्वयं तु चुलुकत्रयम् ।। ६९

दद्याच्च पूर्वशिष्येभ्यस्तथैव चुलुकत्रयम् ।
शिष्यं संप्लाव्य शङ्खोदैर्दद्यात्तत्त्वत्रयैस्तथा ।। ७०

दद्यात्तत्रोपशिष्टानां यथावदपि दक्षिणाम् ।
तरुणारुणसंपन्नां तद्बुद्ध्या काञ्चनं ददेत् ।। ७१

हृद्यद्रव्यैः सहोपेतं पात्रमस्यै प्रदापयेत् ।
तच्छेषं च स्वशेषं च दद्याच्छिष्याय देशिकः ।। ७२

ततो बहिर्विनिर्गत्य चतुरश्रे तु मण्डले ।

तत्र देवीं प्रतिष्ठाप्य संस्थाप्यैनां च मध्यतः ॥ ७३

पुनः शङ्खाम्भसाऽभ्युक्ष्य त्रिवारं मूलविद्यया।
न्यासजालानि विन्यस्य ध्यात्वा तन्मयतां गतम् ॥ ७४

अनुद्वासितदेवीकं अभिषिञ्चेद्धटांभसा ।
ततस्त्वेनमलङ्कृत्य दत्वा तु चुलुकत्रयम् ॥ ७५

स्पृष्ट्वा स्ववामहस्तेन शीतपीयूषपाणिना ।
विद्यामष्टशतं कर्णे दक्षिणेऽपि त्रिरुच्चरेत् ॥ ७६

गुरुदेव्यात्मनामैक्यं भावयन्नन्तरात्मना ।
स्वप्रकाशविमर्शाङ्घ्री तत्पादौ शिरसा स्पृशेत् ॥ ७७

जपेदष्टोत्तरशतं मूलविद्यां प्रसन्नधीः ।
स्ववित्तमर्धं पादं वा तदर्धं वा महामतिः ॥ ७८

गुरवे दक्षिणां दद्यादन्येभ्योऽपि यथारुचि ।
मण्डलाग्रमुपागम्य यथावत्संप्रपूज्य च ॥ ७९

सदक्षिणाकं तद्बिम्बं गुरवे दापयेत्सुधीः ।
एवं लब्ध्वा गुरुं मन्त्री विनीतः शुद्धचेतनः ॥ ८०

सङ्कल्पमात्रसंसिद्धः सर्वकार्ये भवेच्च सः ।
अपशल्यामहोमं च दीक्षातन्त्रमिहोदितम् ॥ ८१

पुत्रवद्दीक्षयेत्स्नातं एतत्पुत्राभिषेचनम् ।
अथ पूर्णाभिषेकं च प्रवक्ष्यामि समासतः ॥ ८२

कुम्भाभिषेकपर्यन्तं कुर्यात्पुत्राभिषेकवत् ।
ततः पीठे समावेश्य सुगन्धैः कुसुमैः शुभैः ॥ ८३

शिष्यस्य मस्तके देवीं ध्यात्वा ह्यभ्यर्चयेद्गुरुः ।
प्रागर्चनाविधौ वापि यजेत्पूजाढ्य बिन्दुभिः ॥ ८४

गन्धाद्या दश मुद्राश्च ध्यात्वा देवीं जगन्मयीम् ।
स्थानेषु मातृकायास्तु कल्पितेषु च सर्वशः ॥ ८५

अर्चयेन्मातृकाढ्येन मूलेन कुसुमैः शुभैः ।
तत्त्वत्रयादिकं सर्वं पूर्ववत्परिकल्पयेत् ॥ ८६

उक्तं पूर्णाभिषेकं तु अपसव्यं तु होमकम् ।
पुण्यतीर्थादिषु स्नाप्य पुण्यकालेषु दीयते ॥ ८७

इयं साधकदीक्षा स्यात्सच्छिष्यगुरुयोगतः ।
न वारतिथिताराणामानुकूल्यमपेक्षते ॥ ८८

सद्गुरोरागमप्रोक्तः स्वतन्त्रे सर्वकामधुक् ।
यथापात्रं यथान्याय्यं यथावर्णं यथाऽऽश्रमम् ॥
दीक्षयेन्न तु लभ्येत दीक्षितस्तन्मयो भवेत् ॥ ८९

इति सौभाग्यचिन्तामणौ उत्तरखण्डे सप्तदशः पटलः ॥

## अष्टादशः पटलः

### विशेषदिवसोत्सवविधिः ।

श्रीदेव्युवाच–
भगवन् देवदेवेश सर्वज्ञ करुणार्णव ।
अयं मे वर्तते नाथ दुर्बोधः संशयो महान् ॥ १

त्वयाऽद्य यानि कर्माणि आत्मनश्च परस्य च ।
प्रतिमासहितान्येव चोदितान्यखिलान्यपि ॥ २

सा प्रतिष्ठाविहीना तु प्रोक्ता निष्फलपूजना ।
दुष्करा सा प्रतिष्ठा तु सर्वथा हीनसाधनैः ॥ ३

अपूजिता च दोषाय कर्मलोपेन जायते ।
कथमत्र प्रकर्तव्यं इति स्यात्संशयो मम ॥ ४

ईश्वर उवाच–

त्वमेव ननु सर्वज्ञा कर्तृकर्मकलावती ।
तथाऽपि सर्वलोकानां हितं वै समुदीरितम् ॥ ५

प्रतिष्ठाप्रोक्षणे कार्ये सर्वथा हीनसाधनैः ।
वक्ष्यमाणविधिं कृत्वा तदभावे तु पूजयेत् ॥ ६

त्वमेव मन्त्रभेदेन समाराध्य प्रपूजय ।
मन्त्रभेदं च वक्ष्यामि शृणुष्वाखिलवत्सले ॥ ७

वायुरूपस्थया देव्या जगदेतत्प्रवर्तते ।
स्थूलरूपो हि वायुर्मे जगत्प्राणधरो महान् ॥ ८

तस्यैव मनुना कुर्यादात्मनो रक्षणं बुधः ।
ऋषिरस्य भवेद्ब्रह्मा*.................... ९

अथ वक्ष्यामि देवेशि विशेषदिवसोत्सवम् ।
यद्विधानान्नरो लोके साक्षाद्वैश्रवणायते ॥ १२

उत्सवे स्थापने चैव विषुवायनयोस्तथा ।
पर्वण्यपि च संक्रान्त्यां राज्ञां जन्मदिनेषु च ॥ १३

भृगुवारेऽथ फल्गुन्यां तथा मासोत्सवेषु च ।
निर्वर्त्य देवि पूर्वेद्युः सायं सन्ध्यादिकाः क्रियाः ॥ १४

*इतः परं त्रुटितो भागो नोपलभ्यते द्वित्रिश्लोकात्मकः ।

पूर्वं देवीं तु संपूज्य यागमण्टपमाविशेत् ।
तत्र वेदीं सुसंशोध्य गोमयेनोपलिप्य च ॥ १५

गौरीमण्डपमाकल्प्य सर्वतोभद्रमेव च ।
अग्रे कुम्भं च संस्थाप्य मध्ये देवीं समर्चयेत् ॥ १४

पालिकाः पञ्च सङ्गृह्य यथावल्लक्षणान्विताः ।
अश्वत्थपल्लवान्बध्वा तन्तुभिस्तासु देशिकः ॥ १६

वल्मीकान्मृदमादाय शुद्धदेशात्तथाऽपि वा ।
संप्रोक्ष्य चास्त्रमन्त्रेण पूरयेत्ताः पृथक्पृथक् ॥ १७

प्राणायामत्रयं देवि कृत्वा संकल्प्य पूर्ववत् ।
स्थापयेत्पुरतस्तात्तु मध्ये चेन्द्रादिषु क्रमात् ॥ १८

मध्ये सदाशिवं विद्याद् ब्रह्माणं चैव दक्षिणे ।
पश्चिमे केशवं चैव चोत्तरे रुद्रमेव च ॥ १९

ईश्वरं पुरतः स्थाप्य तत्तन्मन्त्रेण पूजयेत् ।
सद्योजातेति मन्त्रेण पूजयेत्तु सदाशिवम् ॥ २०

ब्रह्मजज्ञानमित्यृग्भ्यां ब्रह्माणमपि पूजयेत् ।
ततो विभ्राजमानानां इत्यृचा मन्त्रमुत्तमम् ॥ २१

यजेद्विष्णुमिदं विष्णुरित्यादिमनुषट्ककैः ।
सर्वो वै रुद्र इत्याद्यैः पूजयेद्रुद्रमम्बिके ॥ २२

यद्वेदादौ च येषां च त्रियम्बकमिति त्रिभिः ।
मनुभिः पूजयेदेतैरीश्वरं परमेश्वरि ॥ २३

एवं देवान्समभ्यर्च्य षोडशैरुपचारकैः ।
अष्टौ याज्ञिकबीजानि क्षीरेणालोड्य तन्त्रवित् ॥ २४

जपेदोषधिसूक्तं च मूलमन्त्रेण वापयेत् ।
पालिकाश्च समादाय कुम्भस्य परितस्तथा ॥ २५

मध्यां दक्षिणतो न्यस्येत् शिष्टाश्चैव यथाक्रमम् ।
ततो होमं प्रकुर्वीत पूर्वोक्तेनैव वर्त्मना ॥ २६

समिदाज्यचरून्लाजान् पृथगष्टोत्तरं शतम् ।
ततः पूर्णाहुतिं हुत्वा नैवेद्यं परिकल्पयेत् ॥ २७

ताम्बूलाद्युपचारांश्च कुर्याद्देशिकसत्तमः ।
समुत्थाप्य ततो देवीमग्नौ दर्भांश्च सर्वतः ॥ २८

नैवेद्यमपि देवेशि चरुमध्ये विनिक्षिपेत् ।
ततो वह्निं च संप्रार्थ्य योजयेत्तच्छिवानले ॥ २९

पुण्याहं वाचयित्वा तु देशिकस्तन्त्रपारगः ।
वक्ष्यमाणेन विधिना कुर्यात्कौतुकबन्धनम् ॥ ३०

देव्यग्रे स्थण्डिलं कृत्वा साष्टद्रोणैस्तु शालिभिः ।
अलाभे च षडङ्गं वा.............बहिरर्चयेत् ॥ ३१

ततो यथावत्संपूज्य विशेषविधिना गुरुः ।
स्नापयेत्कलशाम्भोभिर्मूलमन्त्रैः पृथक्पृथक् ॥ ३२

पञ्चामृतैः पञ्चगव्यैः नारिकेलोदकादिभिः ।
पुनः शुद्धोदकेनैव स्नापयेन्मूलविद्यया ॥ ३३

वस्त्राद्यैः समलंकृत्य दीपान्तमपि पूज्य च ।
अनुज्ञया ततो देव्याः परिवारान् समर्चयेत् ॥ ३४

महानिवेदनं कुर्यात् व्यञ्जनैर्बहुभिर्युतम् ।
स्नपनं च यदा कुर्यान्नैवेद्यं द्विगुणं भवेत् ॥ ३५

चक्राभिषेके त्रिगुणं उत्सवे तु चतुर्गुणम् ।
यागमण्डपमालिप्य पूर्ववद्बलिमर्चयेत् ॥ ३६

अपूपैर्घृतसंमिश्रैर्हुनेदष्टोत्तरं शतम् ।
चरुणाऽष्टशतं हुत्वा तथैव च घृताहुतीः ॥ ३७

पूर्ववत्परिवाराणां तिस्रस्तिस्रो हुनेत्ततः।
पुनर्मूलेन होतव्यं अष्टाविंशतिसंख्यया ॥ ३८

ततः पूर्णाहुतिं हुत्वा परिषिच्य यथाविधि ।
देवीं स्तुत्वा क्षमस्वेति दण्डवत्प्रणमेद्गुरुः ॥ ३९

अथ संपूज्य विघ्नेशं विविधैर्भक्ष्यभोज्यकैः ।
पूजितं गन्धपुष्पाद्यैः अङ्कुशं हेमभूषितम् ॥ ४०

देव्याज्ञाधारकं बिभ्रत्पुरो गच्छेद्बलिप्रदम् ।
चत्वरेषु बलिं दद्याद्घण्टानादपुरःसरम् ॥ ४१

भूता ये विविधाकारा दिविभूम्यन्तरिक्षगाः ।
पातालतलसंस्थाश्च शिवयोगेन भाविताः ॥ ४२

ध्रुवाद्याः सप्त त्वर्धेन तदर्धार्धेन वा पुनः ।
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम् ॥ ४३

काञ्चित्कमलपत्राक्षीं कन्यां सर्वाङ्गभूषणाम् ।
आहूयास्त्रेण संप्रोक्ष्य स्थालीं च(चैव)शिरस्यधि ॥ ४४

तण्डुलैः पूरयेत्पात्रं तच्च संप्रोक्ष्य चांभसा ।
ततः कौतुकमादाय सौवर्णं राजतं तु वा ॥ ४५

कार्पासतन्तुमथवा गन्धपुष्पैः समर्चयेत् ।
वेश्मप्रदक्षिणं कृत्वा गीतनृत्तपुरःसरम् ॥ ४६

निधाय धान्यराशौ तु पद्ममुद्रां प्रदर्शयेत् ।
सोष्णीषः सोत्तरासङ्गः साक्षाद्देवीमयो गुरुः ॥ ४७

सुमुहूर्ते सुलग्ने च गीतवादित्रसंकुले ।
बध्नीयान्मूलमन्त्रेण देव्या वामप्रकोष्ठके ॥ ४८

अङ्कुशस्यापि बध्नीयात्स्वमन्त्रेणैव कौतुकम् ।
उत्सवः कीर्त्यते देवि भेरीं सन्ताड्य निर्गमे ॥ ४९

ततो नीराजनं दत्वा नैवेद्यं पायसं न्यसेत् ।
ताम्बूलं च ददेद्भक्त्या क्षमस्वेति नमेद्गुरुः ॥ ५०

ततः प्रभाते संप्राप्ते कृतपूर्वाह्णिकक्रियः ।
ततः कुम्भं समभ्यर्च्य समुद्धृत्य स्वमूलतः ॥ ५१

देव्याः समीपमानीय प्रोक्षयेन्मूलविद्यया ।
पालिका नवसप्ताहपञ्चाहेष्वथवा प्रिये ॥ ५२

यदा संभूतपत्राः स्युस्तदाऽम्भसि विनिक्षिपेत् ।
देवदेवीं नमस्कृत्य स्वपुनः (स्नपनं) कारयेद्गुरुः ॥ ५३

व्रीहिभिर्मण्डलङ्कृत्वा षण्णवत्यङ्गुलायतम् ।
रेखानवकमालिख्य प्रागग्रं चोदगग्रकम् ॥ ५४

तत्कोष्ठेषु चतुःषष्टिकुम्भान्सम्यङ् निवेशयेत् ।
एतान्संकेतमन्त्रैस्तु प्रोक्षयेच्छङ्खवारिणा ॥ ५५

अभिमन्त्र्य च मूलेन धेनुमुद्रां प्रदर्शयेत् ।
क्षीरभूतं विचिन्त्यैव चेन्द्राद्याशाव्यवस्थिताः ॥ ५६

तृप्यन्तु प्रीतमनसो भूता गृह्णन्त्विमं बलिम् ।
इत्यनेनैव मनुना घण्टानादपुरःसरम् ॥ ५७

चत्वरेषु बलिं दद्याद्देशिकस्तन्त्रपारगः ।
कुक्कुटाण्डप्रमाणेन, जलं प्रस्थार्धमुच्यते ।। ५८

अग्रे प्रस्थद्वयं पीठे जलं शिवमिदं भवेत् ।
एवं बलिं ददेद्देवि सर्वरक्षाकरं भवेत् ।। ५९

नीत्वाऽऽस्थानं ततो देवीं पायसान्नं निवेदयेत् ।
हैमं कटाहमानीय देव्यग्रे स्थण्डिले न्यसेत् ।। ६०

चन्दनागरुकर्पूरश्लक्ष्णपिष्टं सकुङ्कुमम् ।
कटाहे वारिणा योज्य मथित्वा पङ्कवत्ततः ।। ६१

मल्लिकोत्पलपुष्पाणि जाजीपुन्नागचम्पकैः ।
पङ्के निक्षिप्य संपूज्य कामबीजेन मन्त्रवित् ।। ६२

आर्द्रपङ्कं ददेत्कर्तुर्देशिको देव्यनुज्ञया ।
तत्पङ्कं तु जनौघस्य दापयेत्परितस्ततः ।। ६३

सुमुहूर्ते सुलग्ने च स्वस्वसूक्तं समुच्चरन् ।
यानमारोपयेद्देवीं सर्वालङ्कारभूषिताम् ।। ६४

विविधैर्भक्ष्यभोज्याद्यैः नैवेद्यैः षड्रसान्वितैः ।
कदलीनारिकेलाद्यैः परिपक्वफलैरपि ।। ६५

गणेशं विघ्नशान्त्यर्थं पूजयेत्परमेश्वरि ।
देवीं समन्तात्सौवर्णैः रत्नभूषैश्च भूषयेत् ।। ६६

आढ्याभिश्चन्दनरसैः पुष्पमालाकुलैरपि ।
पुष्पवृष्टिं तदूर्ध्वे तु गन्धवारि जने क्षिपेत् ।। ६७

नभश्चराणां प्रीत्यर्थं व्योम्नि पुष्पाञ्जलिं क्षिपेत् ।
भूगतानां तु सर्वेषां तुष्ट्यर्थं हेमवस्त्रकम् ।। ६८

अन्यानपि भवानत्र कारयेत्सादरो नृपः ।
देवीसिद्धान्तमार्गस्थान् तन्मार्गपरिपालकान् ॥ ६९

यथार्हं वस्त्रहेमाद्यैस्तोषयेत्परमेश्वरि ।
उपचारैः सितच्छत्रचामरव्यजनादिभिः ॥ ७०

वीणावेणुमृदङ्गादिविविधातोद्यवादनैः ।
नृत्तगीतविशेषैश्च तोषयित्वा ततस्ततः ॥ ७१

ग्रामप्रदक्षिणं देवि मन्दं मन्दं च कारयेत् ।
ततो द्वारगतां देवीं नीराजनपुरःसरम् ॥ ७२

आस्थानमण्डपं नीत्वा पूजाङ्गं सर्वमाचरेत् ।
एवं यः कुरुते लोके विशेषदिवसोत्सवम् ॥ ७३

ऐहिकानखिलान्भोगान् भुक्त्वा देवीपदं व्रजेत् ।
मुच्यते सर्वपापेभ्यः सिद्धो देवीपदानतः ॥ ७४

इति सौभाग्यचिन्तामणौ उत्तरखण्डे अष्टादशः पटलः ॥

## एकोनविंशः पटलः

### मन्त्रसकलीकरणम्

या तु ब्रह्ममयी देवी मूलप्रकृतिरव्यया ।
योगिनां मुक्तिरूपेण भोगिनां भुक्तिरूपिणी ॥ १

सैव सर्वजगन्माता सकलं तत्प्रतिष्ठितम् ।
रतिस्तु रागिणां देवि विरतिस्तु विरागिणाम् ॥ २

यो यो यथा तु ध्यायीत तं तमेति तथा तथा ।
ये ये पराङ्मुखास्तस्याः संसारे संसरन्ति ते ॥ ३

शरणं ये प्रपद्यन्ते ते यान्ति परमां गतिम् ।
पञ्चशक्तिमयी नित्या मूलशक्तिस्तु सा स्मृता ॥ ४

सा तु प्रकृतिमापन्ना पुरुषस्य सिसृक्षया ।
त्रिगुणानां तु साम्याख्या त्र्यवस्था प्रकृतिस्तु सा ॥ ५

गुणभेदात्त्रिधा भिन्ना ब्रह्मविष्णुशिवात्मिका ।
वसुरुद्रादित्यरूपा पञ्चधा पुनरास्थिता ॥ ६

सरस्वती श्रीगिरिजा चामुण्डाचण्डिकाख्यया ।
येनाभिर्जगदास्थाय कुर्वन्ती लोकसंग्रहम् ॥ ७

धरण्यादिमहाभूतरूपिणी बहुरूपिणी ।
कलाषोडशसंमोदाद्द्वात्रिंशच्छक्तिरूपिणी ॥ ८

एकादशाङ्गिनी देवी चतुराम्नायशक्तिका ।
इच्छादित्रयरूपा च मूलप्रकृतिकारणा ॥ ९

चिदचिद्व्याप्तिकावासा पञ्चकोशमयी परा ।
सर्वभूतेन्द्रियाधारा सर्वभूतेन्द्रियानुगा ॥ १०

स्वशक्त्याऽखिलमादाय जगदापूर्य संस्थिता ।
परादिभिन्नरूपा च पन्नगी प्रणवात्मिका ॥ ११

शक्तिभिश्च स्वभिन्नाभिः याभिस्त्रिभुवनस्थितम् ।
स्वचक्रकोण संख्याभिः करोति स्वात्मना सह ॥ १२

उग्रा रौद्रा स्थिरा वीरा महिषी सर्वमङ्गला ।
अनन्ताऽनन्तविजया ज्वलना ज्वालनात्मिका ॥ १३

दीप्तजिह्वा विश्वरूपा विश्वयोनिर्विभावरी ।
विमला च जया सर्वा विजया सर्वतोमुखी ॥ १४

त्रैलोक्यस्वामिनी (सुन्दरी)भीमा भीषणी श्रीमुखावहा ।
प्रीतिराह्लादिनी लक्ष्मीर्मृतसञ्जीवनी परा ॥ १५

पूर्णा पूर्णामृता कामदायिनी संविदेव च ।
भुवनेषु समस्तेषु चतस्रः शाम्भवादिषु ॥ १६

स्वतेजोभिः समास्थाय कुर्वन्ति जगतां स्थितिम् ।
अतीतिश्च महासत्वा व्यापिनी दीप्तिरुन्नतिः ॥ १७

जनार्दिनी कराला च भद्रा मृत्युप्रणाशिनी ।
अभया भूतिरित्येताः शक्तयः सर्वदेहिषु ॥ १८

इन्द्रियाणि समास्थाय वपुषा सह तद्गुणान् ।
करोत्यन्तःशरीरस्था निर्वृतिं सर्वदेहिनाम् ॥ १९

लक्ष्मीः कीर्ती रतिश्चैव धृतिश्चेमास्तु देहिनाम् ।
पुरुषार्थस्वरूपास्तु विशन्ति स्वात्मनो गुणान् ॥ २०

जीवभूता परा देवी निखिलस्य जनस्य च ।
निष्कला दर्पणाभासं चिद्रूपं धीप्रतिष्ठितम् ॥ २१

पुरत्रयात्मकत्वेन त्रिपुरेति प्रथां गतम् ।
सकलीकरणं पश्चात्प्रवक्ष्यामि समासतः ॥ २२

नित्यौ चिदचितौ देवि व्यक्ताव्यक्तौ सनातनौ ।
तयोर्योगसमुद्भूतजातो नादात्मको मनुः ॥ २३

तदुत्पन्नोऽपि तद्द्रष्टुं न शशाकापि सर्वगः ।
तदेव ध्यायतस्तस्य मनोऽभूद्भूतभावनम् ॥ २४

बभूव मनसो वाञ्छा बभूवास्मात्तपः परम् ।
आवृतिस्तपसो जाता सा वर्णपदरूपिणी ॥ २५

मनसादित्रिभेदेन त्रिपदे मनुरम्बिके ।
ततो मन्त्रात्मको नादो नादो मन्त्रात्मको भवेत् ॥ २६

स्वेन स्वं पश्यतो देवि नादस्य ब्रह्मरूपिणः ।
बभूवाग्रे चिराभ्यासात् स्वस्यैवालोकनस्य च ॥ २७

तेजो गिरिजारमाद्य सर्वशक्तिमयो महान् ।
तन्मध्ये तु महाशक्तिः स्फुरद्विद्युत्प्रभामयी ॥ २८

स्वतोऽप्यनन्यसद्भावस्वरूपां तां ददर्श ह ।
सा तेनाभ्यर्थिता देवि ददौ तस्मै वरं ततः ॥ २९

ममेयमावृतिर्माता नादोऽस्तु जनको मम ।
इत्युक्त्वा तु परा शक्तिस्तत्रैवान्तरधीयत ॥ ३०

अथ शक्तिभवो नादः नादभूता हि शक्तिका ।
तयोरन्योन्यसद्भावः आवयोरिव भामिनि ॥ ३१

केन विज्ञायते देवि कारणं भवतस्तथा ।
अन्योन्यकारणौ देवि चिन्नादौ संप्रकीर्तितौ ॥ ३२

नादात्मनस्तु मन्त्रस्य समावृत्त्या तु चित्कला ।
निर्गुणा गुणभावस्था जगद्रूपा तु केवलम् ॥ ३३

मात्राभिस्तु तदुत्थाभिः व्यक्तान्यङ्गानि भामिनि ।
तन्मन्त्रवर्णभूतानि ज्ञानकर्मगुणानि च ॥ ३४

तद्भावसंभवा देवाः अग्निसोमदिवाकराः ।
भूर्भुवःस्वस्तथा लोकाः ब्रह्मविष्णुमहेश्वराः ॥ ३५

शक्तयश्च तदुद्भूतपाशाद्यखिलहेतवः ।
देवा मनुष्याः पितरो दैत्यरक्षःपिशाचकाः ॥ ३६

जरायुजाण्डजोद्भूताः तरुगुल्मलतास्तथा ।
भूतभव्यभविष्याश्च तथा स्त्रीपुंनपुंसकाः ॥ ३७

इच्छाज्ञानक्रियाख्याश्च सृष्टिस्थितिलयास्तथा ।
बालयौवनवार्धक्य हेतुकर्मफलास्तथा ॥ ३८

मन्त्रदेवसमुद्भूतं त्रिवर्गमखिलं जगत् ।
सैव सर्वजगद्रूपा सदसद्भावभूमिका ॥ ३९

मन्त्रवर्णोऽथ मननात् सर्वस्थायाश्च सर्वतः ।
देहाङ्गकल्पना देवि सकलीकरणं विदुः ॥ ४०

रहस्यानां रहस्यं च सर्वेषामुत्तमोत्तमम् ।
यद्विवित्सावताऽन्यत्र वाञ्छा जातु न जायते ॥ ४१

यत्र स्थिताः सुरगणाः नमस्यन्ति स्तुवन्ति च ।
मन्त्रात्मना सदा देवि भूतैक्यसकलीक्रिया ॥ ४२

समाहितमना भूत्वा तन्निशामय सुन्दरि ।
उपासकाय भक्ताय सर्वभूतदयालवे ॥ ४३

इष्टाय गुरुशिष्याय दद्याद्विद्यामिमां गुरुः ।
आत्मा तु निष्क्रियो नित्यो निर्मलोऽनन्तमेधवान् ॥ ४४

निर्वैरो नित्यसिद्धश्च निराभासो निरञ्जनः ।
इत्यादिलक्षणैर्युक्तः सर्वशक्त्यात्मको मतः ॥ ४५

चराचराणां जगतां सैवात्मा च जगन्मयी ।
साऽहमित्येव विज्ञानं मुक्तिः स्याद्विलयस्तथा ॥ ४६

सैव सर्वेषु भूतेषु देहे च प्रतिबिम्बिता ।
तथैव पञ्चधाऽऽत्मानं अकरोद्विश्वनायिका ॥ ४७

तस्या विलासिकोद्भूताः शक्तयो बह्वः प्रिये ।
शक्तिभिर्व्याप्यते देवि जगत्स्थावरजङ्गमम् ॥ ४८

मन्त्रार्णमातानुवशादिन्द्रियाणि गुणास्तथा ।
ततो देवी जगद्धात्री तस्यां जज्ञे परं महत् ॥ ४९

तस्माच्चित्तमहङ्कारस्ततो ह्यचित्तमेव च ।
आकाशादिमहाभूतपञ्चकं च क्रमेण तु ॥ ५०

ज्ञानेन्द्रियाणि पञ्चैव विषयाणां च पञ्चकम् ।
तस्मात्सर्वं प्रसूतं हि मन्त्रादस्मान्महेश्वरि ॥ ५१

एतन्मन्त्रं जगत्कृत्स्नं चराचरमपि प्रिये ।
आत्मानं सर्वभूतानां त्वामेवेति चिन्तयेत् ॥ ५२

जगद्बीजं जगद्योनिः जगन्माता जगन्मयी ।
सा मूलप्रकृतिः शक्तिस्तस्यां सर्वजगज्जनिः ॥ ५३

सर्वशक्तिमयत्वात्तु शक्तिरित्यभिधीयते ।
सर्वस्मान्मूलभूतत्वान्मूलप्रकृतिरुच्यते ॥ ५४

या च सर्वगता देवि सा शक्तिरिति चिन्तयेत् ।
महाभूतिं ततः प्राहुः सर्वसंभूतिकारणात् ॥ ५५

बिन्दुरित्याहुरेके तु शक्तिं ब्रह्मविदो जनाः ।
क्षेत्रज्ञं प्राहुरपरे ह्यर्थब्रह्मणि संश्रिताः ॥ ५६

सर्वस्य मूलभूतां तु महतीं स्वे नियोजयेत् ।
अहंकारात्तु भूतादेराकाशः समजायत ॥ ५७

सर्वावकाशदाता च आकाशः शब्दलक्षणः ।
ध्यायेच्च सर्वमाकाशं स्वदेहस्थमपि प्रिये ॥ ५८

आकाशाच्छब्दरूपात्तु बभूव पवनो महान् ।
तस्य स्पर्शगुणो ज्ञेयः तच्चात्मनि नियोजयेत् ॥ ५९

वायोस्तेजो गुणो रूपं तच्चात्मनि नियोजयेत् ।
तेजसो जज्ञिरेऽम्भांसि द्रवरूपाणि भामिनि ॥ ६०

तेषां रजो गुणो ज्ञेयः तान्यप्यात्मनि योजयेत् ।
तेभ्यः समभवद्भूमिः अकरोद्गन्धवद्गुणः ॥ ६१

तां च सर्वगतां देवीं शरीरे विनिवेशयेत् ।
श्रोत्रयुग्मं त्वचश्चक्षुः रसना घ्राणमेव च ॥ ६२

ज्ञानेन्द्रियाणि पञ्चाहुः लोकहेतूनि शाम्भवि ।
इमानि सर्वभूतां तां स्वेन्द्रियेषु निवेशयेत् ॥ ६३

वाक्पाणी पादपायू च उपस्थश्चेति पञ्चमम् ।
कर्मेन्द्रियाणां विषयास्तान्यप्यात्मनि योजयेत् ॥ ६४

व्यापकत्वेन विन्यस्य विद्यां पञ्चदशाक्षरीम् ।
सर्वमन्त्रमये स्वस्मिन्स्वदेहे देवतामये ॥ ६५

अक्षरात्मतया कुर्यात्सकलीकरणं परम् ।
दशपञ्चाक्षरा देवि मन्त्रः सर्वार्थसाधकः ॥ ६६

प्रथमं धरणीं प्राहुः द्वितीयं जलमुच्यते ।
तृतीयमग्निमनिलं तुरीयं पञ्चमं नभः ॥ ६७

षष्ठं मनः सप्तमं च बुद्धिरष्टममुच्यते ।
अहङ्कारस्तु नवमं चित्तं दशममुच्यते ॥ ६८

प्रकृत्येकादशं प्रोक्तं पुरुषो द्वादशं तथा ।
आत्मा त्रयोदशः प्रोक्तः परमात्मा चतुर्दशः ॥ ६९

शक्तिः पञ्चदशी ज्ञेया सर्वाण्यात्मनि योजयेत् ।
सङ्कल्पश्च विकल्पश्च मनोवृत्तिपदाभिधौ ॥ ७०

स्थाणुर्वा पुरुषो वाऽयं इति संशयभाजनम् ।
व्यवसायात्मिका बुद्धिः स्थाणुरेवेति निश्चयः ॥ ७१

बुद्धीन्द्रियशरीरेषु योऽहंभावो ह्यनात्मसु ।
जाने पश्यामि जीर्णोऽहं इत्यहङ्कार उच्यते ॥ ७२

यदा नैवंविधो भावः प्रत्यक्षः किं न वाऽप्नुयात् ।
तदा चित्तं विजानीयात्किञ्चिज्ज्ञानं विशेषकम् ॥ ७३

सर्वत्रावस्थितं वस्तु साहमेकेति चिन्तयेत् ।
आप्यमाग्नेयवायव्यौ नाभसं मानसं तथा ॥ ७४

बुद्ध्यहङ्कारयोश्चांशश्चित्तरूपं तथैव च ।
शक्तिश्चैवात्मरूपां च स्वस्मिन्नेव प्रकल्पयेत् ॥ ७५

पादेनापि प्रवक्ष्यामि सकलीकरणं परम् ।
पञ्चभूतात्मकं नाम शरीरं सर्वदेहिनाम् ॥ ७६

देही त्वात्मेति जानीयात् षष्ठः सर्वहृदि स्थितः ।
पञ्चभूतानि चात्मा च जगदन्यत्कथञ्चन ॥ ७७

पार्थिवः प्रथमः पादो द्वितीयश्चाप्य उच्यते ।
पदं तृतीयमाग्नेयं तुरीयः स प्रभञ्जनः ॥ ७८

आकाशभूतं सकलं बीजमात्माऽस्य कथ्यते ।
सकलीकरणं कुर्यात् क्रमेणैव च पूर्ववत् ॥ ७९

सकलीकरणं प्रोक्तं तथैव तव सुव्रते ।
एभिस्त्रिभिर्वा द्वाभ्यां वा चैकेनापि समाचरेत् ॥ ८०

एतन्मन्त्रं जगत्सर्वं चराचरमयं प्रिये ।
आत्मानं सर्वभूतानां स्वात्मैवेति विचिन्तयेत् ।। ८१

चराचरमयी देवी सोऽहमित्येव चिन्तयेत् ।
इति वर्णपदाभ्यासाद्रूपैक्यं मनसो लयात् ।। ८२

साक्षाद्भावो भवेद्देव्याः सोऽपि देवीमयो भवेत् ।
इति ते कथिता देवि मन्त्रस्य सकलीक्रिया ।। ८३

यः करोति सकृद्वाऽपि भावनाभावगर्भितः ।
क्षणेन मुच्यते पापैः सर्वसिद्धिमवाप्नुयात् ।। ८४

इति सौभाग्यचिन्तामणौ उत्तरखण्डे एकोनविंशः पटलः ।।

## विंशः पटलः

### ऋतूत्सवविधिः

पार्वत्युवाच—

देवदेव दयासिन्धो दुष्टदानवमर्दन ।
सर्वज्ञ सर्वलोकेश सर्वभूतहिते रत ।। १

इदानीं श्रोतुमिच्छामि वसन्ताद्युत्सवक्रमम् ।
सर्वर्तुषु महादेव पूज्यते यद्विधानतः ।। २

ईश्वर उवाच—

शृणु देवि महाभागे यन्मां त्वं परिपृच्छसि ।
आश्वयुक्पूर्वफल्गुन्यां तीर्थं कुर्यान्महोत्सवे ।। ३

पूर्वपक्षदशम्यां वा मधुमासेऽपि तद्दिने ।
कर्तव्यः सर्वमासेषु कर्तुर्जन्मदिनं यदि ।। ४

ऋतूनामुत्सवं देवि तत्तदृतुषु कारयेत् ।
ऋतूत्सवेषु सर्वेषु तथा संप्रोक्षणेऽपि ॥ ५

न ध्वजारोपणं कुर्यान्न भेरीमपि ताडयेत्।
चैत्राख्यपूर्वफल्गुन्यां अङ्कुरं चैव कौतुकम् ॥ ६

कृत्वा कुम्भान्प्रविन्यस्य द्वादशैकमथापि वा ।
पूर्ववच्च समभ्यर्च्य मण्डपद्वारपाश्रपान् ॥ ७

दिवैव जुहुयाद्देवि समिदाज्यचरून्शतम् ।
कृत्वा बलिप्रदानं च नातिदूरं परिक्रमेत् ॥ ८

डोलायां न्यस्य काञ्चन्यां नृत्तगीतादि दर्शयेत् ।
नित्यहोमं निशीथे तु कृत्वा नित्यबलिं ददेत् ॥ ९

क्रमवृद्ध्या परिक्रम्य सर्ववीथीं च पर्वणि ।
तीर्थान्तं कर्म चैतत्तु वासन्तमिति कथ्यते ॥ १०

ग्रीष्मेऽप्यनेन मार्गेण कर्म कृत्वा यथाविधि ।
उद्यानचारणं कृत्वा नृत्तगीतादि दर्शनम् ॥ ११

त्रिषट्कनवमाहुस्सु विहरेद्वारिमध्यमे ।
तीर्थकर्म तदेव स्यात्ततो वेश्मप्रधूपनम् ॥ १२

पवित्रारोपणं देवि वर्षर्तौ तु विधीयते ।
स कुम्भस्थापनं कुर्याद्वेदिमध्ये तु मण्डलम् ॥ १३

कृत्वाऽभ्यर्च्य महादेवि पवित्राणि निधाय च ।
पूर्वोक्तेनैव मार्गेण ध्वजभेरीविवर्जितम् ॥ १४

शरत्काले तु कुर्वीत महानवमिसंज्ञितम् ।
कार्तिके मासि पञ्चम्यां विधायाङ्कुरकौतुके ॥ १५

उद्यानेष्वथवा नद्यां बध्वा नावं निवेदयेत्।
पूर्वोक्तेन विधानेन कुर्याद्दीपादि वन्दितः ॥ १६

उषःकाले तु कर्तव्यं हेमन्ते नित्यपूजनम् ।
पूर्वपक्षे तु पञ्चम्यां कुर्यादङ्कुरकौतुकौ ॥ १७

कालागरुरसाद्यैस्तु समालिप्य महेश्वरीम् ।
हेमपञ्जरमध्यस्थां नातिदूरं तु चारयेत् ॥ १८

तैष्यस्य प्रथमाह्ने तु चण्डिकायागमाचरेत् ।
पूर्वपक्षे तु पञ्चम्यां कृत्वा कौतुकबन्धनम् ॥ १९

सर्वदुष्टविनाशाय मृगयात्रां तु कारयेत् ।
गत्वाऽष्टदिक्षु क्रमशो नित्याभिः सहिता तथा ॥ २०

कामेश्वर्यादियुक्ता वा चण्डिकासहिताऽथ वा ।
सर्वाभिरथवैका वा मृगयां तत्र कारयेत् ॥ २१

दिने दिने तु हन्तव्या जन्तवः प्राणिहिंसकाः ।
आसीमान्तं चतुर्दश्यां तत्रापि मृगयां चरेत् ॥ २२

तीर्थान्तं कर्म चैतत्तु कर्तव्यं स्याद्वरानने ।
शिशिरर्तौ च पञ्चम्यां विधायाङ्कुरकौतुकौ ॥ २३

सीमायात्रां च कुर्वीत केदाराणि च दर्शयेत् ।
पशूनां दर्शनं कृत्वा तीर्थान्तं च समाचरेत् ॥ २४

फल्गुन्यां वाऽथ चैत्रे वा विद्याश्रवणमाचरेत्।
पूर्वपक्षतृतीयायां कुर्यादङ्कुरकौतुकौ ॥ २५

आस्थानमण्डपं नीत्वा तत्र सिंहासनोपरि ।
विन्यस्याभ्यर्च्य विधिवन्मुनीनावाहयेत्ततः ॥ २६

अत्रिर्भृगुश्च कुत्सश्च वसिष्ठो गौतमाङ्गिराः ।
भारद्वाजः काश्यपश्च कुम्भजश्च पराशरः ॥ २७

शुको व्यासश्च कपिलः कौशिको रोमशोष्णपौ ।
वत्सो मरीचिवाल्मीकी पुलस्त्यः पुलहः क्रतुः ॥ २८

मार्कण्डेयाणिमाण्डव्यौ दूर्वासा विखनास्तथा ।
नारदो याज्ञवल्क्यश्च वालखिल्यो महातपाः ॥ २९

अन्ये च ये मुनिवारास्तानावाह्य द्विजातिषु ।
अभ्यर्च्य गन्धपुष्पाद्यैर्विद्यां द्वादशधाऽऽचरेत् ॥ ३०

ऋचो यजूंषि सामानि अथर्वाङ्गिरसस्तथा ।
ब्रह्माण्डादीतिहासांश्च कल्पान्गाथास्तथैव च ॥ ३१

नाराशंसीश्च देवेशि तीर्थान्तं वाचयेद्विजैः ।
नित्यं निशासु कर्तव्यं नृत्तगीतादिदर्शनम् ॥ ३२

नित्याग्नौ हवनं कृत्वा वेश्म कुर्यात्प्रदक्षिणम् ।
भृगुवारे सदा कुर्यात् अभ्यङ्गं तूष्णगन्धवत् ।
इति ते कथितं सर्वं ऋतूत्सवविधानकम् ॥ ३३

इति सौभाग्यचिन्तामणौ उत्तरखण्डे विंशः पटलः ॥

*सौभाग्यचिन्तामणौ उत्तरखण्डः समाप्तः*

* * *

# सौभाग्यचिन्तामणिकारिका

## सर्वमुहूर्तकालः

### १. अङ्गदेवतादिप्रतिष्ठाकालः

अथातः संप्रवक्ष्यामि प्रतिष्ठाकालमुत्तमम् ।
अयनं चोत्तरं श्रेष्ठं जघन्यं दक्षिणायनम् ॥ १

स्थापनं ध्रुवबेरस्य मुख्य एव सदेष्टदः ।
जङ्गमस्थापनं मुख्ये जघन्ये चापि वा भवेत् ॥ २

माघमासे भाद्रपदे प्रतिष्ठां मासि वर्जयेत् ।
गुरावस्तं गते शुक्रे व्यतीपाते च वर्जयेत् ॥ ३

संक्रान्तौ दुर्दिने चैव ग्रहणे सोमसूर्ययोः ।
परस्ताच्च पुरस्ताच्च षोडशाहानि वर्जयेत् ॥ ४

अतिचारे तथा मासे पर्वयुग्मयुते तथा ।
अप्रशस्तेषु योगेषु काणस्थूणाजभेषु च ॥ ५

एवमादिषु चान्येषु गर्हितेषु न कल्पयेत् ।
राज्ञो राष्ट्रस्य चान्यस्य ग्रामस्य च गुरोस्तथा ॥ ६

यजमानस्य धिष्ण्यस्य शुभेष्वनुगुणेषु च ।
तिथिनक्षत्रवारेषु मुहूर्तेषु शुभेषु च ॥ ७

प्रथमा च द्वितीया च पञ्चमी च त्रयोदशी ।
तृतीया सप्तमी षष्ठी द्वादश्येकादशी तथा ॥ ८

दशमी पौर्णमासी च शुक्लपक्षे शुभान्विताः ।
कृष्णे च पञ्चमी यावत्तिथयः संप्रकीर्तिताः ॥ ९

त्रिषूत्तरेषु रेवत्यां अश्विन्यां रोहिणीषु च ।
पुष्ये पुनर्वसौ चापि हस्ते च श्रवणे तथा ॥ १०

श्रीदेव्याः स्थापनं कुर्याद्देव्या अभ्युदयावहम् ।
सोमो बृहस्पतिश्चैव भार्गवोऽथ बुधस्तथा ॥ ११

एते सौम्यग्रहाः प्रोक्ताः प्रशस्ताः स्थापनं प्रति ।
सैंहिकेयार्कसौराश्च रक्तो वा स्थापने परे ॥ १२

राशौ तृतीये षष्ठे वा स्थिताश्चेच्छुभशंसिनः ।
द्वितीये तृतीये च तथा पञ्चमषष्ठयोः ॥ १३

सप्तमे नवमे चैव राशौ चैकादशे पुनः ।
स्फीतः सुखकरश्चन्द्रः षट्सप्तदशमस्थितः ॥ १४

भयकृद्भार्गवो ज्ञेयः चन्द्रः क्रूरैर्निरीक्षितः ।
अतिथौ बा(वा)ह्यकालेषु न प्रशस्तश्चतुर्मुख ॥ १५

बहुनाऽत्र किमुक्तेन सह मौहूर्तिकैर्गुरुः ।
कालप्रतीक्षां नो कुर्यात् विधिश्चापि विशेषतः ॥ १६

यदैव भक्तिरुत्पन्ना तदा स्थाप्या महेश्वरी ।
विनाऽपि चन्द्रतारादिबलं नाक्षत्रमेव च ॥ १७

आश्वयुक्शुक्लनवमी प्रशस्ता सर्वकामदा ।
अशक्तश्चेन्नवम्यां तु माघे शुद्धदिनेऽपि वा ॥ १८

चन्द्रतारादिसंपन्ने प्रतिष्ठां कर्तुमर्हति ।
मार्गशीर्षेऽथवा पुष्ये वैशाखे वा समाहितः ॥ १९

प्रतिष्ठा सर्वदा कार्या यथावित्तानुसारतः ।
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने ॥ २०

स्थापयेदम्बिकां देवीं गृहे देव्यालयेऽपि वा ॥
पुण्यर्क्षतिथिवारेषु पुण्यलग्ने शुभे दिने ॥ २१

संपत्तौ सर्वयोगानां प्रतिष्ठोत्सवमाचरेत् ॥

## २. मण्डलनिर्माणकालः

दीक्षायां च प्रतिष्ठायां पवित्रारोपणेऽपि च ॥ २२

उत्सवे नवरात्र्यां च मण्डलं परिकल्पयेत् ॥

### ३. बलिकालः

सायं प्रातश्च देवेशीभक्तिश्रद्धासमन्वितः ॥ २३
तेषु नित्यं बलिं दद्यात् देशिकस्तन्त्रपारगः ॥

### ४. सेवाकालः

सर्वदा त्वर्चनाचक्रं जनानां नैव दर्शयेत् ॥ २४
संपूज्य गन्धपुष्पाद्यैः पूजान्तेष्वेव सेवयेत् ॥
प्रतिमा सर्वदा सेव्या भोगमूर्तिस्तु तल्पगा ॥ २५
घटिकाद्वादशादर्वाक् तल्पमारोपयेत्ततः ॥
उत्सवे नवरात्र्यां च काम्यपूजाविधौ तथा ॥ २६
शान्त्यां संप्रोक्षणे चैव कालदोषो न विद्यते ।

### ५. देशिकाचारकालः

ब्राह्मे मुहूर्ते चोत्थाय ब्रह्मरन्ध्रे सिताम्बुजे ॥ २७
चिच्चन्द्रमण्डलेशानां स्फटिकाभां विभावयेत् ।

### ६. दीक्षाकालः

तन्त्रज्ञो दीक्षितो विद्वान्नित्यं देवीपरायणः ॥ २८
यदा गुरुः समायाति तदा दीक्षां समाचरेत् ॥
दुःखं सुखं पुनरघं बन्धुनाशसमुत्थितम् ॥ २९
क्षयपूजासमृद्धिं च सुखं ज्ञानक्षयं धृतिम् ।
समृद्धिर्मधुमासादिमासेषु च विधीयते ॥ ३०
निन्दितो मलमासः स्याद्वारौ सौरिकुजावपि ।
अश्विनीरोहिणीस्वातीविशाखाहस्तभेषु च ॥ ३१

ज्येष्ठोत्तरत्रयेष्वेव कुर्यान्मन्त्राभिषेचनम् ।
पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा ॥ ३२

त्रयोदशी च दशमी प्रशस्ता सर्वकामदा ।
पञ्चाङ्गशुद्धदिवसे चोदये गुरुशुक्रयोः ॥ ३३

गुरुशुक्रोदये शुद्धे लग्ने द्वादशशोधिते ।
चन्द्रतारानुकूले च कुर्याद्दीक्षाभिषेचनम् ॥ ३४

सूर्यचन्द्रोपरागे तु नान्यदन्वेषणं भवेत् ।

### ७. घण्टानादकालः

कपाटोद्घाटवेलायां समावाहनकर्मणि ॥ ३५

धूपे दीपे च नैवेद्ये नीराजनविधौ तथा ।
तथैवोद्वासनविधौ घण्टानादः प्रशस्यते ॥ ३६

प्रणवोच्चारिणीं घण्टां नादब्रह्मस्वरूपिणीम् ।
अग्रे चक्राङ्कुशयुतां एषु कालेषु नादयेत् ॥ ३७

### ८. प्रच्छादनोद्वासनकालः

धूपे दीपे च नीराजे छत्रचामरकादिषु ।
छादकं पटमुन्मुच्य सेवयेयुर्महेश्वरीम् ॥ ३८

### ९. अङ्गदेवताराधनकालः

पूर्वं वा समकाले वा शिष्येणान्येन कारयेत् ।

### १०. स्नानादिकालः

घटिके द्वे भवेत्स्नानं घटिकैकाऽर्चनं भवेत् ॥ ३९

नीराजनं त्रिपादं स्यान्नैवेद्यं च त्रिपादकम्।
त्रिपादमग्निकार्यं स्यात्सार्धनाडिकमुत्सवम् ॥ ४०

ततः परं त्रिपादं स्यान्नृत्तगीतं वरानने ।
आत्मार्थयजनं कार्यं होमोत्सवबलिं विना ॥ ४१

त्रिकालमेककालं वा पूजयेत्परमेश्वरीम् ।
एवमाराधयेद्देवीं सशिवां वाऽपि केवलम्॥ ४२

घटिकाद्वादशादर्वाक् तल्पमारोप्य देशिकः ।

## ११. अङ्कुरार्पणकालः

मुनिभूतगुणाहेषु पूर्वं वा सद्य एव वा ॥ ४३

प्रभूताङ्कुरकं श्रेष्ठं दृष्टमात्रं तु मध्यमम् ।
सद्यस्कमधमं प्रोक्तं विना मासोत्सवं चरेत् ॥ ४४

षष्ठी चतुर्थी नवमी दर्शश्चैव चतुर्दशी ।
अजालिसिंहचापेषु न कुर्यादङ्कुरार्पणम् ॥ ४५

यमाश्लेषाग्निरौद्रेषु ज्येष्ठापूर्वासु नेष्यते ।
सद्यस्के सर्वदा कुर्यादन्यथा दोषवान्भवेत्॥ ४६

पात्रेषु तण्डुलान्पूर्य पुष्पेणैवाङ्कुरार्पणम् ।

## १२. चूर्णोत्सवकालः

उत्सवे स्थापने चैव तथा संप्रोक्षणे विधौ ॥ ४७

अङ्कुरस्यार्पणं कुर्यादन्यत्सर्वं सकौतुकम् ।
पर्वण्यपि च संक्रान्त्यां राज्ञां जन्मदिनेषु च ॥ ४८

अयने विषुवे चैव फल्गुन्यां भृगुवासरे ।
चन्द्रसूर्योपरागे च सद्यः कृत्वा तुकौतुकम्॥ ४९

विशेषस्नपनं यत्र तत्र चूर्णोत्सवं चरेत् ।

## १३. विशेषोत्सवकालः ।

चैत्रे दमनके कुर्यात्समूलैर्वाऽपि गुच्छकैः ॥ ५०

तस्मिन्मासि च पूर्णायां वसन्तोत्सवमाचरेत्।
वैशाखे मासि पूर्णायां पूजयेद्धेमपुष्करैः ॥ ५१

अथवा चन्द्रकस्तूरीचन्दनैः शिशिरोदकैः ।
ज्येष्ठे मासि च पूर्णायां कदलीपनसाम्रजैः ॥ ५२

फलैस्तु पूजयेद्देवीं विधिवत्सर्वसिद्धये ।
आषाढे मासि पूर्णायां चन्दनैः कुङ्कुमान्वितैः ॥ ५३

एलालवङ्गजातीभिरुपेतैः पूजयेच्छिवाम् ।
श्रावणे मासि पूर्णायां पवित्रैः पूजयेच्छिवाम् ॥ ५४

नभोमासि च पूर्णायां प्रसूनैः केतकोद्भवैः ।
आश्वयुज्यां चरेत्पूजां नवरात्र्युक्तवर्त्मना ॥ ५५

तस्मिन्मासि च पूर्णायां ओदनेन समर्चयेत्।
कार्तिके मासि पूर्णायां कुङ्कुमेन समर्चयेत् ॥ ५६

मार्गशीर्षेऽथ पूर्णायां नालिकेराम्बु चन्द्रवत् ।
निवेद्याभ्यर्चयेन्माषपिष्टापूपैर्यथाविधि ॥ ५७

उषस्यभ्यर्चनं कुर्यात्तस्मिन्मासि दिने दिने ।
पुष्ये मासि च पूर्णायां शर्कराभिर्गुलेन वा ॥ ५८

पूजयेदिष्टसिद्धिः स्याद् गव्यं दुग्धं निवेदयेत् ।
तस्मिन्मासि च पूर्णायां आग्रायणमथाचरेत् ॥ ५९

आग्रायणदिनात्पूर्वं तृतीये पञ्चमेऽपि वा।
पञ्चाङ्ग शुद्धदिवसे गुरुशुक्रबलान्विते ॥ ६०

लग्नमेकं विनिश्चित्य कृत्वा स्नपनकर्म च ।
माघे मासि च पूर्णायां तिलैः शुभ्रैस्तथेतरैः ॥ ६१

पूजयेदुग्धनैवेद्यैः सिताऽपूपादिभिः सह ।
फाल्गुने मासि पूर्णायां चम्पकैः स्वर्णपुष्पकैः ॥ ६२

तस्मिन्मास्येव पूर्णायां कन्यापूजनमाचरेत् ।

## १४. डोलोत्सवकालः

वसन्ते वाऽथ ग्रीष्मे वा अथवा मार्गशीर्षके ॥ ६३

पर्वान्तं भृगुवारान्तं फल्गुन्यन्तमथाऽपि वा।
यजमानस्य जन्मर्क्षवशाद्वा देशिकस्य च ॥ ६४

यदा फल्गुनिनक्षत्रे तस्मिंस्तीर्थं समाचरेत्।

## १५. जलक्रीडाकालः

वैशाखे मासि वा ज्येष्ठे चैत्रे वा मासि फाल्गुने ॥ ६५

पूर्णा च पञ्चमी चैव त्रयोदश्यष्टमी तथा ।
भृगुवारयुता या स्यात् अम्बुक्रीडां समाचरेत् ॥ ६६

मध्यं दिने तु संप्राप्ते तटाकं वाऽपि पुष्करम् ।
शोभिते जलमध्ये तु विहरेत्प्रमदाजनैः ॥ ६७

यामं वाप्यर्धयामं वा सर्वातोद्यसमन्वितम् ।
विहृत्योत्तीर्य तत्तीरे स्थापयेत्परमेश्वरीम् ॥ ६८

## १६. पवित्रोत्सवकालः

श्रावणे मासि पूर्णायां पवित्रैः पूजयेच्छिवाम् ।
तस्मिन्मास्येव पूर्णायां कुङ्कुमैश्चन्दनान्वितैः ॥ ६९

एलालवङ्गजातीभिः उपेतैः पूजयेच्छिवाम् ।
नभो मासोत्तमः प्रोक्तः नभस्यश्चैव मध्यमः ॥ ७०

इषोमासोऽधमो ज्ञेयः तस्मादेतन्न लङ्घयेत् ।
न करोति च यो मोहात् इष्टापूर्ते न विद्येते ॥ ७१

## १७. नवरात्रारम्भः

सर्वाङ्ग शक्तिसंयुक्तं शुक्लप्रतिपदादितः ।
पूजयेद्विधिवद्देवीं पूर्ववत् श्रद्धयान्वितः ॥ ७२

अष्टयामार्चनं वाऽपि चतुर्यामार्चनं तु वा ।
दिवा वाऽप्यथवा रात्रौ नवम्यां पूजयेच्छुचिः ॥ ७३

यथाबलं यथाकालं व्रतं कुर्यादतन्द्रितः ।
दिवाऽधिका तिथिर्ग्राह्या नवमी तु परार्थके ॥ ७४

निशाऽधिकाऽत्मयजने प्रशस्ता सर्वकामदा ।
समे पूर्वा तिथिर्ग्राह्या मध्याह्नव्यापिनी यदि ॥ ७५

उभयोरपि मध्याह्ने व्यापिनी त्वधिका मता ।
नवमी दशमी चैव मध्याह्नव्यापिनी यदि ॥ ७६

तयोस्तु नवमी श्लाघ्या मध्याह्ने पूर्वगामिनी ।
दशमी चैव मध्याह्नव्यापिनी त्वथवा नवा ॥ ७७

दशम्यां मध्यगे सूर्ये सायं वा तीर्थमाचरेत् ।
वृद्धावेकादशाह्ने तु तीर्थं शंसन्ति केचन ॥ ७८

नवाह्ने तीर्थमिच्छन्ति विनाऽन्ये नवमीदिनात् ।
इदं व्यामोहतः किन्तु विशेषोऽस्ति परार्थके ॥ ७९

वृद्धा वा क्षयिणी वाऽपि तीर्थं स्याद्दशमेऽहनि ।
तीर्थप्रधानमेषा स्यात्परार्थे नवमी तिथिः ॥ ८०

न्यूनं वाऽप्यधिकं वाऽपि पुनस्तीर्थे च कल्पयेत् ।
तस्माद्दश दिनान्येव नवम्युत्सवमाचरेत् ॥ ८१

पुनर्वक्ष्ये विशेषोऽस्ति सावधानमनाः शृणु ।
आरम्भकाले प्रतिपत् आत्मार्थेऽपि परार्थके ॥ ८२

मध्याह्नव्यापिनी ग्राह्या न निशास्पृक्कदाचन ।
मध्याह्नेऽप्युभयोर्न स्यादमायुक्ता प्रशस्यते ॥ ८३

तिथीनां संकटे जाते निशास्पृगथवा भवेत् ।

## १८. विद्याश्रवणकालः

इषे मासि दशम्यां वा तृतीयायां तु फाल्गुने ॥ ८४

चैत्रे मासि च तस्यां वा विद्याश्रवणमाचरेत् ।
एवं द्वादशरात्रं तु पर्वणि स्नपनं चरेत् ॥ ८५

## १९. कृत्तिकादीपकालः

कृत्तिकायुक्तपौर्णम्यां कृत्तिकायामथापि वा।
प्रदीपारोपणं कुर्यात् रवावस्तं गते सति ॥ ८६

सप्ताहमुत्सवं चैव त्रिदिनं वा दिनं तु वा ।
भूपतिः कारयेदेवं भक्तिनम्रस्त्वकल्मषः ॥ ८७

## २०. महोत्सवकालः

मार्गशीर्षेऽथ वा पुष्ये माघे वा फाल्गुनेऽपि वा ।
चैत्रादि फाल्गुनान्तेषु मासेष्वेव यथारुचि ॥ ८८

सचूर्णोत्सवमेकाहं साङ्कुरं त्रिदिनं भवेत् ।
पञ्चसप्ताहतो यागमत ऊर्ध्वं ध्वजान्वितम् ॥ ८९

आरभ्य त्रिदिनादेव सर्वं तीर्थान्तमीरितम्।
यत्र तीर्थं समुद्दिष्टं तत्र मौनं बलिर्भवेत् ॥ ९०

अर्वाक्सप्तदिनादेव सचूर्णाङ्कुरकौतुकम् ।
अन्यद्भेरीध्वजारोह तालमौन बलीयुतम् ॥ ९१

आदौ तु चण्डिकायागमुभयत्रापि लक्ष्यते ।
प्रथमे वृषवाहः स्यात् प्रातः सायं मृगस्तथा ॥ ९२

द्वितीये मकरः प्रोक्तः प्रातः, सायं शशिप्रभा ।
तृतीये केसरी प्रातः, सायं वारणपुङ्गवः ॥ ९३

रविप्रभा चतुर्थेऽह्नि प्रातः सायं मरालिका ।
पञ्चमे शिबिका प्रातः सायं शेषस्तु वाहनः ॥ ९४

षष्ठे गन्धोत्सवं कुर्यात्सायं द्वे सालभञ्जिके ।
सप्तमे रथवाहः स्यात्सायंकालानुसारतः ॥ ९५

अष्टमे भद्रपीठं स्यात्प्रातः सायं हयोत्तमः ।
नवमे चतुरन्तं स्याद्यानं रात्रौ विमानकम् ॥ ९६

दशमे शरभः प्रातः सायं पुष्परथः स्मृतः ।

## २१. तीर्थप्रदानकालः

तीर्थं कुर्यात्तु मासर्क्षे पर्वण्यपि विचक्षणः ॥ ९७

द्वितीयांशे तृतीये वा तीर्थं कर्म समाचरेत् ।
नक्षत्रस्य चतुर्थांशे नाचरेत्तीर्थमुत्तमम् ॥ ९८

तीर्थर्क्षद्वितये प्राप्ते द्वितीये तीर्थमाचरेत् ।
संक्रमे राहुविद्धे च पूर्वस्मिन्नेव कारयेत् ॥ ९९

यत्र सायं भवेदृक्षं तस्मिंस्तीर्थं तु कारयेत् ।
समे निशायुते कुर्यादथवा मध्यगे रवौ ॥ १००

सायं कुर्वीत देवानां बलिपूजाविसर्जनम् ।
सायं कालार्चनात्पूर्वं कुर्यात्कुम्भाभिषेचनम् ॥ १०१

२२. राज्यसंकटे उत्सव कालः

उत्सवस्य च मध्ये तु राष्ट्रक्षोभो भवेद्यदि ।
चतुःस्थानगतां देवीं मन्त्रेणावाह्य कौतुके ॥ १०२

मत्वाऽनपायं राष्ट्रं तु शान्तिहोमं समाचरेत् ।
शेषोत्सवं दिनात्कुर्यात् ध्वजतालविहीनकम् ॥ १०३

२३. गुरुसङ्कटकालः

सङ्कटे दीक्षितस्यापि ज्ञातीसुतमृतादिभिः ।
तीर्थान्तमाचरेत्कर्म ततः सूतकमृच्छति ॥ १०४

ज्वरादिव्याधिपीडासु कुर्यादन्यस्तदाज्ञया ।
तद्बद्धकौतुकं वाऽपि गृहीत्वाऽन्यस्य बन्धयेत् ॥ १०५

तेनैव सर्वकर्माणि कारयेच्छान्तिपूर्वकम् ।

२४. प्रायश्चित्तकालः

अथ वक्ष्यामि देवेशि प्रायश्चिविधिं परम् ॥ १०६

तद्रात्रावपरेद्युर्वा देशिकस्तु समाचरेत् ।
प्रतिष्ठाप्रोक्षणादीनां मन्त्रतन्त्रविलोपनात् ॥ १०७

यदरिष्टं भवेत्तस्य दोषशान्तिं समाचरेत् ।
मन्त्रतन्त्रक्रियालोपदोषशान्त्यै तु कर्मणाम् ॥ १०८

ज्वरग्रहादिदोषाणां शान्त्यै वा शान्तिरुच्यते ।

### २५. महासंप्रोक्षणकालः

पूर्वस्थापितबिम्बस्य न पुनः स्थापितं क्वचित् ॥ १०९

तस्य संप्रोक्षणं कुर्यादन्यथा दोषभाग्भवेत् ।
अङ्गभङ्गादिसन्धाने पुनः स्थापनमीरितम् ॥ ११०

चक्रे वा भगमुद्रायां नवयोन्यामथापि वा।
छिन्ने जीर्णेऽग्निदाहे वा पुनः स्थापनमाचरेत् ॥ १११

नाम्बुवासं पुनः कुर्यान्नियनोन्मीलनं तथा ।
खनने जलनिक्षिप्ते चिराल्लुप्ते च पूजने ॥ ११२

चण्डालसूतिकोदक्यशवपातकदूषिते ।
विण्मूत्रजलसंस्पर्शे चोरश्वापददूषिते ॥ ११३

अशुचौ वा महत्यां तु तस्याः संप्रोक्षणं चरेत् ।
अन्यथा निष्फला पूजा महान्दोषश्च जायते ॥ ११४

सद्यः कृत्वा निमित्ते तु पूजा कर्म समाचरेत् ।
एककालार्चनाहीने द्विगुणं तत्र पूजयेत् ॥ ११५

चतुर्गुणं द्विकाले तु कलशैः पञ्चभिस्त्रिषु ।
आपक्षं नवभिः कुर्यात्सद्यः कृत्वाऽङ्कुरार्पणम् ॥ ११६

मासात्कौतुकबद्धं च कलशानां च षोडश ।
जुहुयान्नित्यकुण्डेषु मासादर्वाङ् महेश्वरीम् ॥ ११७

अत ऊर्ध्वं बुधः कुर्यात् कुण्ड मण्टपकल्पनम् ।
मासद्वये तु षट्त्रिंशत्कलशैः स्नपनं चरेत् ॥ ११८

त्रिमासेषु चतुःषष्ट्या कुम्भस्थापनसंयुतम् ।
चतुर्मासे मण्डलं च श्रीचक्रस्नपनं चरेत् ॥ ११९

पञ्चमे मासि च तथा श्रीचक्रस्नपनक्रमम् ।
पुनः प्रतिष्ठा कर्तव्या षष्ठे मासि महेश्वरि ॥ १२०

प्रायश्चित्तेषु सर्वेषु प्रतिष्ठा परमा मता ।

### २६. सहस्रकलशार्चन कालः

प्रतिष्ठाप्रोक्षणान्तेषु शान्त्यामुत्सवकर्मणि ॥ १२१

विशेषदिवसे देवि भूकम्पोत्पातकेषु च ।
महामारीभये चैव सदावग्रहपीडने ॥ १२२

महाग्रहोपघातेषु चोरशत्रुभयेषु च ।
अवग्रहादिदुःखेषु आपत्कालेषु शाम्भवि ॥ १२३

इति सर्वमुहूर्तकालविधिः ।

# अथ प्रयोगाः

## (१) शालानिर्माणविधिः

अत्र प्रतिष्ठाकालं विधाय शालानिर्माणं कुर्यात् । यथा - प्रासादस्याग्रे द्वादश - दश - नव - अष्टहस्तं वा समचतुरश्रं क्षेत्रं गृहीत्वा, तस्मिन् षोडशस्तम्भयुतं चतुर्द्वाराङ्कितं मण्टपं वा अथवा प्रपां वा कृत्वा, तस्मिन् मध्यमाङ्क माश्रित्य, तावद्विशालयुतां अरत्निमात्रोन्नतां अभितोदस्त प्रादेशमानमेखलान्वितां वेदिकां कारयित्वा, तस्याः परितः मध्यान्वितनवसन्धिं वा मध्यान्वितदिक्पञ्चकं वा मध्यान्वितपार्श्वत्रयं वा वह्नौ वा योन्याकारकुण्डं परिकल्पयेत्।

तत्कल्पने प्रमाणमाह - सार्धचतुरङ्गुलोन्नतं तत्तदङ्कणमध्यभागे यथाविशालं वेदीमुखं दीर्घचतुरश्रवेदीं कृत्वा , श्वासनं विना तिर्यगूर्ध्वं कुण्डगभार्थं खनेत् । तत्प्रान्ताभ्यां सार्धचतुरङ्गुलमानेन उन्नतान्तराले द्वादशाङ्गुलमानेन विशालान्तरालमाह । सममानेन मेखलात्रयं कुर्यात् । अग्रमेखलायां प्रान्ताभ्यां पादाङ्गुलविस्तीर्ण तदर्धाङ्गुलोन्नतमानेन वा कोष्ठं कुर्यात् ।

अश्रारम्भे चतुरङ्गुलविस्तीर्ण एकाङ्गुलोन्नतं कर्णिकं कुर्यात् । एवं ऊर्ध्वाधोभागयोश्च नवकुण्ड विधाने पूर्णमानं,; पञ्चकुण्डविधाने एवं त्रिपादमानं, एवं त्रिकुण्डविधाने अर्धमानं, एवं एककुण्डविधाने तृतीयभागोपरि एकाङ्गुलाधिका । तस्मात् तत्पक्षे तत्पूर्णमानं संगृह्य कुण्डं परिकल्पयेत् ।

नवाग्नौ यागाग्निसन्धाने प्रागुक्तमेव । नूतनाग्निसन्धानविषये विदिक्षु अब्जकुण्डाग्निं कल्पयेत् । तस्मात् यथोक्तकुण्डानि

कल्पयित्वा, वज्रं, शक्तिं, मुसलं, खड्गं, पाशं, अङ्कुशं, गदां, त्रिशूलं, चक्रं, अक्षमालां, इत्येवं दशायुधफलकान् कल्पयित्वा, स्वस्तिकं, पद्मं, चामरं, पूर्णकुम्भं, वृषभं, शङ्खं, चक्रं, श्रीवत्सं इत्येवं फलकाष्टकांश्च कल्पयित्वा तद्विषये तत्सन्धानमाश्रित्य प्रतिष्ठादिक्रियां कुर्यात् ।

## (२) वास्तुशान्तिविधिः

अथात्र शालां निर्माय वास्तुशान्तिं कुर्यात् । यथाशक्ति स्थानं गत्वा, षडङ्गुलोन्नतां अरत्निविशालां द्विहस्तदीर्घां वेदिं कृत्वा, तस्मिन् द्विद्रोणमानेन तदर्धार्धमानेन तण्डुलतिलैश्च स्थण्डिलं कृत्वा, पूर्वाग्रं षड्रेखाभिः, उत्तराग्रं चतुर्दशरेखाभिः कोष्ठानि विरच्य, पूर्वाग्रे मध्यपङ्क्तिं त्यक्त्वा, तं अर्धचन्द्ररेखया पञ्चदशस्थानं विरच्य, ऊर्ध्वे सर्पफणाकारं, अधस्तु तत्पुच्छाकारं विलिख्य, मध्ये पञ्चदशस्थानेषु मूलं पञ्चदशार्णं विलिख्य, पूजयेत् ।

भुजङ्गे - ‘‘ओं ह्रीं आं ब्रह्मणे नमः ।’’ पश्चात् ऐशान्यादि निर्ऋत्यन्तं, पठनक्रमे प्रतिपदेषु ‘‘ओं ह्रीं अर्यम्णे नमः । ओं ह्रीं विवस्वते नमः । ओं ह्रीं मित्राय नमः । ओं ह्रीं महीधराय नमः । ओं ह्रीं सावित्र्यै नमः । ओं ह्रीं सवित्रे नमः । ओं ह्रीं शक्राय नमः । ओं ह्रीं इन्द्रजिते नमः । ओं ह्रीं रुद्राय नमः । ओं ह्रीं रुद्रजयाय नमः । ओं ह्रीं अद्भ्यो नमः । ओं ह्रीं आपवत्साय (अघवन्त्याय) नमः । ओं ह्रीं शर्वाय नमः । ओं ह्रीं गणपतये नमः । ओं ह्रीं जम्भकाय नमः । ओं ह्रीं लिपिपिञ्छकाय नमः । ओं ह्रीं शरक्त्याय (शरक्याय) नमः । ओं ह्रीं विदार्याय नमः ।

ओं ह्रीं पूतनाय नमः । ओं ह्रीं अग्नये नमः । ओं ह्रीं विष्णवे नमः । ओं ह्रीं वितथाय नमः । ओं ह्रीं यमाय नमः । ओं ह्रीं ग्रहरक्षकाय नमः । ओं ह्रीं गन्धर्वाय नमः । ओं ह्रीं भृङ्गराजाय नमः । ओं ह्रीं मृगराजाय नमः । ओं ह्रीं ईशानाय नमः । ओं ह्रीं पर्जन्याय नमः । ओं ह्रीं जयन्ताय नमः । ओं ह्रीं शुक्राय नमः । ओं ह्रीं भास्कराय नमः । ओं ह्रीं सत्याकाय नमः । ओं ह्रीं विभृशाय नमः । ओं ह्रीं अन्तरिक्षाय नमः । ओं ह्रीं निर्ऋतये नमः । ओं ह्रीं दौवारिकाय नमः । ओं ह्रीं सुग्रीवाय नमः । ओं ह्रीं वरुणाय नमः । ओं ह्रीं पुष्पदन्ताय नमः । ओं ह्रीं असुराय नमः । ओं ह्रीं रोषाय नमः । ओं ह्रीं रोगाय नमः । ओं ह्रीं वायवे नमः । ओं ह्रीं नागाय नमः । ओं ह्रीं सुमुखाय नमः । ओं ह्रीं सोमाय नमः । ओं ह्रीं भल्लाटकाय नमः । ओं ह्रीं अर्गलाय (ऋगाय) नमः । ओं ह्रीं दित्यै नमः । ओं ह्रीं अदित्यै नमः ।'' इति संपूज्य, मूलेन सप्तधा अभिमृश्य, गन्धाद्युपचारान्विधाय, तस्य वामपार्श्वे स्थण्डिलोपरि कुम्भद्वयं विन्यस्य, तस्मिन्, ''ओं ह्रीं आं ब्रह्मणे नमः । ओं ह्रीं भां भारत्यै नमः'' इति संपूज्य, मूलेन सप्तधा अभिमृश्य, गन्धाद्युपचारान् विधाय, तस्याग्रे स्थण्डिलोपरि तृणसमिद्भिः निर्मितं वास्तुपुरुषं द्विबाहुकं विन्यस्य ध्यायेत्–

''वास्तुदेव महाकाय रक्तनेत्र भुजद्वय ।
राक्षसेश महाघोर सान्निध्यं कुरु दुर्मुख ।।'' इति ।

''ओं ह्रीं वां वास्तुपुरुषाय नमः'' इति संपूज्य, मूलेन सप्तधाऽभिमृश्य, गन्धाद्युपचारान् विधाय, तस्य दक्षिणे स्थण्डिले

अग्निं संस्कृत्य, मधुघृतकूष्माण्डखण्डभरितपायसान्नैश्च, तत्र आवाहिताखिलदेवतानां पृथक्त्वेन एकैकामाहुतिं हुत्वा, तेनैव यन्त्रपदेषु नामान्ते "गृह्ण गृह्ण स्वाहा" इति बलिं दत्वा, यन्त्रब्रह्मघटेषु वास्तुविग्रहान्तः तत्तदुत्पादितक्रमेण आवाह्य वास्तुशिरः अग्नौ प्रज्वाल्य, कंचिद्विप्रमाहूय तं तोषयित्वा, तेन हस्तेन, अनुक्रमेण शान्तिस्थानं परिभ्राम्य, तत्स्थलाद्बहिः दक्षिणे विसर्जयित्वा, अनन्तरं गोमयीकरणं (गोमयलेपनं) कृत्वा पश्चात् पुण्याहं वाचयित्वा भारत्यम्भसा अब्वृष्टिं कुर्यात्। इति सनत्कुमारतन्त्रतो वास्तु शान्तिः ।

### ३. सामान्यार्घ्यविधिः

अथ वास्तु शान्तिं विधाय सामान्यार्घ्यं कुर्यात्। यथा स्वपुरतः चन्दनेन चतुरश्रान्तः त्रिकोणं विलिख्य, मूलेनाभ्यर्च्य, आधारमेकं विन्यस्य, "ओं ऐं धर्मप्रददशकलात्मने वह्निमण्डलाय नमः" इति संपूज्य, तदुपरि अस्त्रक्षालितपात्रमेकं विन्यस्य, तस्मिन् "ओं क्लीं अर्थप्रदद्वादशकलात्मने सूर्यमण्डलाय नमः" इति संपूज्य, तदन्तः गन्धोदकमापूर्य, तस्मिन् "ओं सौः कामप्रद षोडशकलात्मने चन्द्रमण्डलाय नमः"इति संपूज्य, हस्तेन स्पृशन्–

"ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे ।

तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥"

इति अङ्कुशमुद्रया तीर्थान्याकृष्य, "गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ इत्यभिमृश्य, "ओं ह्रीं ऐं क्लीं सौः सर्वमण्डलाने सर्वकलाशक्तिरूपे पापान्सर्वान् दमय; तीर्थशक्ते 'एह्येहि

स्वाहा'', इत्यावाह्य,'' ओं ह्रीं नमो भगवति अम्बे अम्बालिके अम्बिके महामालिनि एह्येहि भगवति अशेषतीर्थालिवाले ह्रीं श्रीं ह्रीं शिवजटाधृते (धरि) इडे गङ्गेऽम्बिके स्वाहा ''इति गन्धाक्षतपुष्पपत्राणि निक्षिप्य ''आपो वा इदं सर्वं - आप ओं'' ''हंसः शुचिषत् - ऋतं बृहत्'' इति जपित्वा, मूलेन सप्तवारमभिमन्त्र्य, धेनु-योनि-कौलिनी -गरुड - चक्रमुद्राः प्रदर्श्य, पूजोपकरणानि आत्मानं च प्रोक्षयेत्। इति सामान्यार्घ्यविधिः।

## ४. मृत्सङ्ग्रहणविधिः

पूर्वस्यां उत्तरस्यां वा दिशि वनं प्रविश्य, स्वपुरः सामान्यार्घ्योदकेन भूतलं प्रोक्ष्य कुशाकूर्चाङ्कितकुद्दालिं ''ओं क्रों अस्त्रराजाय नमः'' इति संपूज्य, ''स्योना पृथिवी - सप्रथाः'' इति मन्त्रेण मृदं खात्वा, तां दर्भास्तरे चतुरश्रं न्यस्य, बिन्द्वष्टदल राशिनक्षत्राख्य कोष्ठान् तद्बहिः क्रमेण विलिख्य, ईशान्यभागे पदपत्रयोरन्तराले ''वास्तोष्पते प्रतिजानीहि - सदानः इति मन्त्रेण ''ओं ह्रीं सर्वाधिपतये शाक्ताय ईशानपुरुषाय नमः'' इति संपूज्य, पश्चात् (अष्टदलेषु) ''लं इन्द्राय नमः, रं अग्नये, ठं यमाय, क्षं निरृतये, वं वरुणाय, यं वायवे, सं सोमाय, शं ईशानाय, (इन्द्रेशानयोर्मध्ये) आं ब्रह्मणे, (निरृति वरुणयोर्मध्ये) ह्रीं अनन्ताय, (विं विष्णवे) नमः इति, (द्वादशपदेषु) अं आं इं ईं मेषाय, उंऊं वृषभाय, ऋं ॠं लृं ॡं मिथुनाय, एं ऐं कटकाय, ओं औं सिंहाय, शं षं सं हं कन्यायै, कं खं गं घं ङं तुलायै, चं छं जं झं ञं वृश्चिकाय, टं ठं डं ढं णं चापाय, तं थं दं धं नं मकराय, पं फं बं भं मं कुम्भाय, यं रं लं वं

क्षं मीनाय, (अष्टाविंशतिपदेषु) अं आं अश्विन्यै, इं ईं भरण्यै, उं ऊं कृत्तिकायै, ऋं ॠं लृं ॡं रोहिण्यै, एं मृगशिरसे, ऐं आर्द्रायै, ओं औं पुनर्वसवे, कं पुष्याय, खं आश्लेषायै, गं घं ङं मखाय, चं पूर्वफल्गुन्यै, छं जं उत्तरफल्गुन्यै, झं ञं हस्ताय, टं ठं चित्रायै, डं स्वात्यै, ढं णं विशाखायै, तं थं अनुराधायै, दं धं ज्येष्ठायै, नं पं फं मूलाय, बं पूर्वाषाढायै, भं उत्तराषाढायै, ह्रीं अभिजिते। मं श्रवणाय, यं रं श्रविष्ठायै, लं शतभिषजे, वं शं पूर्वभाद्राय, षं सं हं उत्तरभाद्राय, ळं क्षं अं अः रेवत्यै नमः'' इति संपूजयेत्।

कर्णिकामध्ये ''भूमिर्भूम्ना + अन्नाद्यायादधे'' इति मन्त्रेण भूमिमावाह्य ध्यायेत्—

''हेमवर्णां द्विनयनां द्विभुजां रक्तभूषणाम्।
सव्यहस्ते धृताम्भोजां शुकमन्ये स्मरे धृताम्॥''

इति ध्यात्वा ''लं श्रीं क्लीं वसुन्धरामूर्तये विष्णुपत्न्यै नमः'' इति संपूज्य मूलेन सप्तधा अभिमृश्य, गन्धाद्युपचारान् विधाय ''स्योना पृथिवि + सप्रथाः'' इति मन्त्रेण मृदं गृहीत्वा, तत्र आवाहितदेवान् उद्वास्य, मङ्गलघोषान्वितं यागशालां प्रविशेत्। इति मृत्संग्रहण विधिः॥

## ५. अङ्कुरार्पणविधिः

यथा-स्वपुरतः षडङ्गुलोन्नतं द्विहस्तविस्तीर्णवेदिं कल्पयित्वा, तस्मिन् चतुर्द्रोण संख्यया स्थण्डिलं कृत्वा, तिर्यगूर्ध्वं षड्रेखया कोष्ठान् विलिख्य मध्य षोडशकोष्ठानि एकीकृत्य, तं सकर्णिकं अष्टदलाम्बुजं विलिख्य यथोक्त पालिकानवकं अम्लक्षालितं

कुशपत्राङ्कितं सुगन्धितं विन्यस्य, अश्वत्थोपनिषन्मन्त्रेण कुशकवलानि बध्वा "मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम्। मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमन्त्रिता। मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम्। मृत्तिके प्रतिष्ठिते सर्वं तन्मे निर्णुद मृत्तिके। तया हतेन पापेन गच्छामि परमां गतिम्।" इति मन्त्रेण पूर्वमानीतमृद्भिरापूरयेत्।

"नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमः। ईशानः सर्वविद्यानां + सदाशिवों इति मन्त्रेण सशक्तिकाय ईशानमूर्तये सदाशिवाय नमः" इति मध्यपालिकां संपूज्य, पश्चात् पूर्वादिक्रमेण अष्टपालिकासु "तत्पुरुषाय विद्महे" इति मन्त्रेण "सशक्तिकाय तत्पुरुषाय भवाय नमः। सर्वो वै रुद्रः पशुपतिः" इति मन्त्रेण सशक्तिकाय रुद्राय शर्वाय नमः। अघोरेभ्य इति मन्त्रेण सशक्तिकाय अघोरमूर्तये ईशानाय नमः। येषामीशो पशुपतिः पशूनामिति मन्त्रेण सशक्तिकाय पशुपतिमूर्तये (पशुपतये) नमः। क्ष्रौं कौलिनीवाग्देवतायै नमः इति संपूजयेत्।

वामदेवायेति मन्त्रेण सशक्तिकाय वामदेवाय रुद्राय नमः। त्र्यम्बकं यजामहे इति मन्त्रेण सशक्तिकाय त्र्यम्बकमूर्तये उग्राय नमः। सद्योजातमिति मन्त्रेण सशक्तिकाय सद्योजातमूर्तये सोमाय नमः। यो वेदादौ स्वरः प्रोक्तः इति मन्त्रेण सशक्तिकाय परमेश्वराय नमः। इति संपूज्य जयेत्।

अधस्तात् विंशतिकोष्ठेषु कोणचतुष्टये, कोष्ठत्रयक्रमेण अं आं इं ईं मेषाय नमः। उं ऊं वृषभाय नमः। ऋं ॠं लृं ॡं मिथुनाय नमः। एं ऐं कटकाय नमः। ओं औं सिंहाय

नमः । अं अः शं षं सं हं कन्यायै नमः । कंखं गं घं ङं तुलायै नमः । चं छं जं झं ञं वृश्चिकाय नमः । टं ठं डं ढं णं चापाय नमः । तं थं दं धं नं मकराय नमः । पं फं बं भं मं कुम्भाय नमः । यं रं लं वंक्षं मीनाय नमः इति ।

अन्यकोष्ठाष्टके पूर्वादिक्रमेण अं आं + अं अः (१५) ब्लूं वशिनी वाग्देवतायै नमः । कं खं गं घं ङं कल्ह्रीं कामेश्वरी वाग्देवतायै नमः । चं छं जं झं ञं न्व्लीं मोदिनीवाग्देवतायै नमः । टं ठं डं ढं णं य्लूं विमलावाग्देवतायै नमः । तं थं दं धं नं ज्म्रीं अरुणावाग्देवतायै नमः । पं फं बं भं मं ह्स्ल्व्यूं जयिनीवाग्देवतायै नमः । यं रं लं वं ङ् ज् म् र् यूं सर्वेश्वरीवाग्देवतायै नमः । क्ष्म्रीं कौलिनीवाग्देवतायै नमः । इति संपूजयेत् । (सर्वत्र प्रणवत्रितारीयोजनं सांप्रदायिकम् ।)

मूलेन सप्तधाऽभिमृश्य, गन्धाद्युपचारान् विधाय, तस्योत्तरभागे स्थण्डिलोपरि कुम्भमेकं विन्यस्य, मं क्लीं सोमाय नम इति संपूज्य सोमो धेनुं इति मन्त्रेणाभिमन्त्र्य, मूलेन सप्तधा अभिमृश्य, गन्धाद्युपचारान् विधाय, स्थण्डिले अग्निं संस्कृत्य, अप्यायस्व समेतु ते इति मन्त्रेण अष्टोत्तरशतं हुत्वा, तथा मूलेन कुर्यात् । अन्ते पूर्णाहुतिं हुत्वा क्षीरप्लुताष्टबीजेन, पालिकां निर्वापयेत् । एकाह्नविधाने पुष्पेण तथा कुर्यात् ।। इति अङ्कुरार्पणविधिः ।

## ६. नयनोन्मीलन विधिः

अङ्कुरार्पणं कृत्वा नयनोन्मीलनं कुर्यात् । स्वपुरः द्रोणसंख्यया स्थण्डिलं कृत्वा, वस्त्रमेकं विन्यस्य तस्मिन् समदृष्टिं प्रसन्नास्यां

सुरूपां शुभलक्षणां यथोक्तलक्षणान्वितमूर्तिं गृहीत्वा, पूर्वशिर- ऊर्ध्ववक्त्रेण बिम्बं शाययित्वा, शिल्पिहस्तात् नयनद्वयरेखां रेखयित्वा, बिम्बं गहीत्वा, तत्र निर्माल्य वस्तूनि शिल्पिने दत्वा, तं तोषयेत्। पूर्वमुखात् मूलेन बिम्बं प्रार्थयेत्। देवी विषये–

नमस्तेऽर्चे सुकेशानि पूजिते विश्वकर्मणा।
प्रभाविताऽशेषजगद्धात्रि तुभ्यं नमो नमः ॥

त्वय्येव पूजयाम्यम्ब त्रिपुरां परमेश्वरीम्।
रहिता द्रव्यदोषैस्तु प्रीतियुक्ता सदा भव ॥

इति प्राथ्य, मृत्तोयैश्चाब्लिङ्गैः पावमानीभिश्चाभिषिच्य, तत्तत्सृष्टिक्रमेण तत्त्वानि विचिन्त्य मूलेनाभिमृशेत्। इति नयनोन्मीलनविधिः।

## ७. मन्त्रोन्मीलनविधिः

अथ स्वपुरः शिवत्रयसंख्यया स्थण्डिलं कृत्वा, वस्त्रयुग्मं विन्यस्य, तदुपरि पूर्ववद्बिम्बं भद्रं कर्णेभिरिति मन्त्रेण शाययित्वा, कुशबद्धसुवर्णशलाकया पुनः पुनः जले च घृते चैव नीत्वा, चित्रं देवेति दक्षिणनेत्रं, तच्चक्षुरिति वामनेत्रं, भद्रं कर्णेभिरिति कर्णद्वयं, वयः सुपर्णा इति पुनः सर्वं लेखयित्वा उद्वयं तमसस्परि इति बिम्बं उत्थाप्य - घृतपात्रं, कन्यां, गां, घृतदीपं, सुवासिनीं, पालिकां, दर्पणं, धान्यं च मूलेन दर्शयित्वा, सर्वभूषणैश्चालङ्कृत्य, मूलेन सप्तधा अभिमृश्य, गन्धपुष्पाद्युपचारान् विधाय, ग्रामं वेश्म वा

प्रदक्षिणीकृत्य, नीराजनपूर्वकं पीठमध्ये निवेशयेत् । इति मन्त्रोन्मीलनविधिः ।

## ८. जलाधिवासविधिः

मन्त्रोन्मीलनं विधाय जलाधिवासं कुर्यात् । यथा - चतुर्द्वारान्वित प्रपां कल्पयित्वा, मध्ये धान्यराशौ आकरमेकं विन्यस्य, तस्मिन्बिम्बकण्ठप्रमाणं जलं घृतं क्षीरं वाऽऽपूर्य, बिम्बं घृतं मिमिक्षिरे इति मन्त्रेण घृतेनाप्लाव्य, पञ्चपल्लवैः कुशैः सह बध्वा, नूतनवाससाऽऽच्छाद्य, तस्मिन् शाययित्वा, कुशकूर्चादिकमलंकृत्य, मूलेन सप्तधाऽभिमन्त्र्य, गन्धाद्युपचारान् विधाय, जलं सुधार्णवत्वेन ध्यायेत् । एवं महाबेरविधाने दर्पण - प्रभासांकिततत्फलीकां तत् घृते वा क्षीरे वा जले वा कारयित्वा, प्रान्ताभ्यां स्थण्डिलोपरि वसुकुम्भान् विन्यस्य, दिक्पतीन् यष्ट्वा गन्धाद्युपचारान् विदध्यात् । ततः जागरणान्वितवेदघोषपूर्वकं यावत् दिनान्तं तत्र द्विरात्रं त्रिरात्रं एकरात्रं वा यामयामार्धं वा अधिवासयेत् । ततः प्रभातसमये तत्वकलशस्नपनं कुर्यात् । तेनैवाभिषिच्य बिम्बशुद्धिं कृत्वा, सर्वभूषणैश्च अलङ्कृत्य, मूलेन सप्तधा अभिमन्त्र्य गन्धाद्युपचारान्विधाय, अर्चायां कौतुकं बध्वा ग्रामं वेश्म वा प्रदक्षिणीकृत्य यागागारं प्रवेशयेत् । इति जलाधिवासन विधिः ।

## ९. शयनविधिः

अथ जलाधिवासं विधाय यागागारे शयनं कुर्यात् । यथा - वेद्याः नैर्ऋति दिग्भागे अरत्निमानोन्नतं द्विहस्तविस्तारं वेदिं कल्पयेत् ।

पञ्चासनं वा अथवा वस्त्रपञ्चकं वा विन्यस्य, तत्र मङ्गलाष्टकं यथोक्तविधानेन विन्यस्य संपूज्य, तद्वेदिकाधस्तात् उपर्युपरि, ओं लं पृथिवीं, ओं वं जलं, ओं रं तेजः, ओं यं वायुं, ओं हं आकाशं, पूजयामीति संपूज्य, उपरि ओं आं बलिं इं ईं ज्ञानशक्तिं, उं ऊं क्रियाशक्तिं, ऋं ॠं वार्णीं, ऌं ॡं वागीशां, एं ऐं ज्वालिनीं ओं औं वामां, अं अः ज्येष्ठां इन्द्रादिक्रमेण संपूजयेत् । मध्ये अर्चादिव्यपीठार्चनपूर्वकं पूर्ववत् बिम्बं शाययित्वा मूलेन सप्तधा अभिमन्त्र्य, गन्धाद्युपचारान् विधाय, तदग्रे कुम्भद्वयं विन्यस्य, ओं क्लीं शिव, अष्टबन्धनकाले मुक्तिसत् ब्रह्मणेति मन्त्रेण दक्षिणकर्णे शतं बोधयित्वा, उद्वयं तमसस्परि इति मन्त्रेण उत्थाप्य, नीराजनपूर्वकं प्रतिष्ठास्थाने विन्यसेत् । महाबेरविधाने एवं दर्पणे यावद्विधि । इति शयनविधिः ।

## १०. देशिकालङ्कारविधिः

अथ शयनं विधाय, देशिकोपचरणपूजां कुर्यात् । यथा - वपनमाश्रित्य यथोक्तविधिना स्नात्वा आचम्य, चतुर्विधसंस्कार पूर्वकं देहशुद्धिं विधाय, स्वपुरः द्रोणसंख्यया स्थण्डिलं कृत्वा,चतुर्दलाम्बुजं विलिख्य मध्यादिक्रमेण देवीशासनं, ऊर्ध्वपुण्ड्र-त्रिपुण्ड्रद्रव्यं यज्ञोपवीतं शिरोमौलिकवचकुण्डला-भरणादिपवित्रादीन्, नूतनवस्त्रद्वयं च तदुपरि विन्यस्य तथैव, मूलं त्रिपुरायै नमः - शासने । ह्रीं मायायै नमः - पुण्ड्र द्रव्ये । ओं गायत्र्यै नमः - उपवीते । श्रीं लक्ष्म्यै नमः भूषणे । क्लीं मोहिन्यै नमः - वस्त्रद्वये इति संपूज्य मूलेन सप्तधा अभिमन्त्र्य, गन्धाद्युपचारान् विधाय, सर्वं संहारक्रमेण धारयेत् । इति देशिकालङ्कारविधिः ।

## ११. कौतुकबन्धनविधिः ।

अथ देशिकालङ्कारं विधाय, कौतुकबन्धः । यथास्वपुरतः अष्टद्रोणसंख्यया स्थण्डिलं कृत्वा, अष्टदलाम्बुजं विलिख्य, मध्यादिक्रमेण, अं अनन्ताय नमः । वां वासुकये नमः । तं तक्षकाय नमः । कां कार्कोटकाय नमः । पं पद्माय नमः । मं महापद्माय नमः । शं शंखपालाय नमः । गुं गुलिकाय नमः । सुं सुबलाय नमः । इति संपूज्य, तदुपरि शिवप्रमाणान्वित तण्डुलपूरित पात्रमेकं विन्यस्य, तस्मिन् अष्टदलाम्बुजं विलिख्य, मध्यादिक्रमेण, मं महामेरुपर्वताय नमः । हिमवत्पर्वताय नमः । निषधपर्वताय नमः । विन्ध्यपर्वताय नमः । माल्यवत्पर्वताय नमः । पारियात्रपर्वताय नमः । गन्धमादनपर्वताय नमः । हेमकूटपर्वताय नमः। श्री शैलपर्वताय नमः । इति संपूज्य, तदुपरि त्रिदलान्विताश्वत्थाग्रं विन्यस्य, मध्ये दक्षिणोत्तरे स्थानत्रयक्रमेण सूत्रभस्मचन्दनं विन्यस्य, तथैव, हिरण्यगर्भः समवर्तताग्रे इति मन्त्रेण सशक्तिकाय ब्रह्मणे नमः । यो रुद्रो अग्नौ इति मन्त्रेण सशक्तिकाय रुद्राय नमः । सहस्रशीर्षा पुरुष इति मन्त्रेण सशक्तिकाय विष्णवे नमः । इति पूजयेत् । गन्धादिभिरभ्यर्च्य, मूलेन सप्तधाऽभिमन्त्र्य, तस्योत्तरपार्श्वे स्थण्डिलोपरि कुम्भमेकं विन्यस्य इमं मे वरुण इति मन्त्रेण वरुणाय नमः इति संपूज्य, मूलेन सप्तधाऽभिमन्त्र्य गन्धाद्युपचारान् विधाय, ब्राह्मणैः सह कुशाग्रसहितं ऋग्जपं कुर्यात् ।

अब्लिङ्गानि, पावमान्यः, रक्षोघ्नत्रयं, जातवेदसे इति पञ्चकं, त्र्यम्बकं, श्रीसूक्तं, देवीसूक्तं, सद्योजातादि पञ्चकं, शान्तिपञ्चकं, घोषशान्तिः, पुरुषसूक्तं, यो रुद्रो अग्नौ,

गौरीमिमाय, ब्रह्मजज्ञानं, देवीं वाचमजनयन्त देवाः, इदं विष्णुर्विचक्रमे, भूमिर्भूम्ना, आ सत्येन, गणानां त्वा, आपो वा इदं सर्वं, हंसः शुचिषत्, आपो हिष्ठा, दधिक्राव्णो। इमं मे वरुण श्रुधी हवं, वेदादि चतुष्टयं, वास्तोष्पते, भद्रं कर्णेभिः। सह नाववतु, इति मन्त्रान् जपेत्।

मूलेन सप्तधा अभिमृश्य, गन्धाद्युपचारान् विधाय, कुशकूर्चेन सूत्रमभ्यर्च्य, ब्राह्मणान् तोषयित्वा, तत्पश्चात् दक्षिणहस्ते सूत्रं गृहीत्वा, वामहस्ते निधाय, ब्रह्मरुद्राभ्यां नमः इति भस्मना सूत्रं संमार्ज्य, ब्रह्मविष्णुभ्यां नमः इति चन्दनेन समर्च्य, गायत्र्यादि षोडशवारं जपित्वा - यथा -पात्रे निधाय गन्धपुष्पाद्युपचारान्विधाय, तत्कर्मोपयुक्त मूलदेव्यादिदेवीनां अन्यदेवतानां देशिकानां च धारयेत्। मूलस्मरण पूर्वकम्। अत्र देव्या विषयेनमस्ते वासुदेवाय कल्याणगुणशालिने। नमो लक्ष्मीनिवासाय रक्ष रक्ष जगत्पते॥ इति मन्त्रेण ध्यात्वा, बृहत्साम इति मन्त्रेण तद्भस्मरक्षां कुर्यात् इति कौतुकबन्धन-विधिः।

## १२. द्वारपूजाविधिः

अथ द्वारपूजां कुर्यात्। वेदिकापूर्वस्थघटे सूर्यं सूर्याष्टाक्षर मन्त्रेण आराध्य, वेदिकापश्चिमस्थघटे नारायणाष्टाक्षरमन्त्रेण विष्णुं आराध्य, गन्धाद्युपचारान् विधाय, गुरुः यथास्थाने स्वासने समुपवेश्य, सामान्यार्घ्यं विधाय, तज्जलेन पूर्वादितोरणान् अस्त्रेण प्रोक्ष्य, कवचेनावकुण्ठ्य, पूर्वद्वारे शान्तितोरणाय नमः इति द्वारं संपूज्य, ऊर्ध्वे ऋग्वेदाय नमः। कृतयुगाय नमः। त्रिशूले पूष्णे नमः। धात्रे नमः। विधात्रे नमः।

शाखामूलस्थघटयोः नन्दिने नमः । महाकालाय नमः । प्रशान्ताय नमः । शिशिराय नमः । इन्द्राय नमः । अग्नये नमः । द्वारघटे गं गणपतये नमः । ऊर्ध्वोदुम्बरे गं गणपतये नमः । सरस्वत्यै नमः । महालक्ष्म्यै नमः । शाखयोः हेतुकाय नमः । त्रिपुरारये नमः । इति धूपदीपनीराजनान्तानुपचारान्दद्यात् ।

ततः दक्षिणद्वारं गत्वा, सामान्यार्घ्यजलेन अस्त्रेण प्रोक्ष्य, कवचेनावकुण्ठ्य, भूतितोरणाय नमः इति द्वारं संपूज्य, ऊर्ध्वे यजुर्वेदाय नमः, त्रेतायुगाय नमः, त्रिशूले भवाय नमः । पर्जन्याय नमः । इन्द्राय नमः । शाखामूलस्थघटयोः भृङ्गिणे नमः । विनायकाय नमः । पर्जन्याय नमः। अशोकाय नमः । यमाय नमः । निरृतये नमः । द्वारघटे वटुकाय नमः । ऊर्ध्वोदुम्बरे गणपतये नमः । सरस्वत्यै नमः । महालक्ष्म्यै नमः । शाखयोः वेतालाय नमः । अग्निजिह्वाय नमः । इति संपूज्य, अर्घ्यं दत्वा धूपदीपनीराजनान्तान् उपचारान् दद्यात् ।

ततः पश्चिमद्वारं गत्वा, सामान्यार्घ्यजलेन अस्त्रेण प्रोक्ष्य, कवचेन अवकुण्ठ्य, बलतोरणाय नमः इति द्वारं संपूज्य, ऊर्ध्वे सामवेदाय नमः, द्वापरयुगाय नमः । त्रिशूले अर्यम्णे नमः । मित्राय नमः । त्वष्ट्रे नमः । शाखामूलस्थघटयोः वृषभाय नमः । स्कन्दाय नमः । भूतसञ्जीवनाय नमः । अमात्याय (अमृताय) नमः । वरुणाय नमः । वायवे नमः । द्वारघटे दुर्गायै नमः । ऊर्ध्वे गणपतये नमः । सरस्वत्यै नमः । महालक्ष्म्यै नमः । शाखयोः, काल्यै नमः । कराल्यै नमः इति संपूज्य अर्पयित्वा धूपदीप नीराजनान्तानुपचारान् दद्यात् ।

ततः उत्तरद्वारं गत्वा, सामान्यार्घ्यजलेन अस्त्रेण प्रोक्ष्य, कवचेनावकुण्ठ्य, आरोग्यतोरणाय नमः इति द्वारं संपूज्य, ऊर्ध्वे अथर्वण वेदाय नमः । कलियुगाय नमः । त्रिशूले विष्णवे नमः । सवित्रे नमः । सावित्रे नमः । शाखामूलस्थघटयोः, देव्यै नमः । चण्डाय नमः। चण्डिकायै नमः । कुबेराय नमः । ईशानाय नमः। इन्द्राय नमः । द्वारघटे क्षेत्रपालकाय नमः । ऊर्ध्वे गणपतये नमः। सरस्वत्यै नमः । महालक्ष्म्यै नमः । शाखयोः भीमाय नमः । एकपादाय नमः इति संपूज्य, अर्पयित्वा, धूपदीपनीराजनान्तान् उपचारान् दद्यात् ।

भवद्भिः याज्ञिकत्वेन स्थातव्यमिह सादरैः इति (ऋत्विजः) विज्ञाप्य देव्याः पूर्वादिदिक्षु, सशक्तिकाय कामदेवाय नमः । सशक्तिकाय वसन्ताय नमः, सरस्वत्यै नमः । ब्रह्मणे नमः । (सरस्वती सहिताय ब्रह्मणे नमः ।) गौर्यै नमः। शिवाय नमः । (गौरीसहिताय शिवाय नमः ।) इति संपूज्य, आग्नेयादि चतुर्दिक्षु, निवृत्तिकलायै नमः । प्रतिष्ठाकलायै नमः। विद्याकलायै नमः। शान्तिकलायै नमः । इति संपूज्य, ततः इन्द्रादिदिक्स्थितकलशेषु लं इन्द्राय नमः । रं अग्नये नमः । टं यमाय नमः । क्षं निर्ऋतये नमः। वं वरुणाय नमः । यं वायवे नमः । सं सोमाय नमः । हं ईशानाय नमः । इन्द्रे शानयोर्मध्ये ब्रह्मणे नमः । निर्ऋति वरुणयोर्मध्ये, ह्रीं अनन्ताय नमः इति संपूजयेत् ।

पुनः इन्द्रादिदिक्षु वज्राय हुं फट् नमः । शक्तये हुं फण्णमः । दण्डाय हुं फण्णमः । खड्गाय हुं फण्णमः । पाशाय हुं फण्णमः । अंकुशाय हुं फण्णमः । गदायै हुं फण्णमः ।

शूलाय हुं फण्णमः । पद्माय हुं फण्ण नमः । चक्राय हुं फण्णमः, इति संपूजयेत् ।

ततो मध्ये पताकायां, अघोरास्त्राय नमः । पूर्वाद्यष्टध्वजेषु औं कौं कुमुदाय नमः । ओं कौं कुमुदाक्षाय नमः । औं पौं पुण्डरीकाक्षाय नमः । ओं वौं वामनाय नमः । ओं शौं शङ्कुकर्णाय नमः । ओं सौं सर्वनेत्राय नमः । ओं सौं सुमुखाय नमः । ओं सौं सुप्रतिष्ठाय नमः । इत्यभ्यर्च्य, पाताले, अचलाय नमः । अन्तरिक्षे, अश्वोदराय नमः । मण्डपोर्ध्वस्थित काष्ठेषु, ओं ह्रीं पृथिवीतत्त्वाय नमः । तृणे(णी)षु (त्रिकोणेषु), ओं ह्रीं अप्तत्त्वाय नमः । बन्धेषु, ओं ह्रूं तेजस्तत्त्वाय नमः । वंशेषु, ओं ह्रीं वायुतत्त्वाय नमः । स्थूणासु, ओं ह्रीं आकाशतत्त्वाय नमः । विताने ओं ह्रीं चन्द्रमसे नमः । दर्भेषु, ओं ह्रीं वासुकये नमः इत्यभ्यर्च्य गुरुः दर्पणाद्यष्टमङ्गलानि यजेत् । यथा - वेदिकायाः पूर्वभागे दर्पणे, स्कन्दाय नमः । पूर्णकुम्भे, गजाननाय नमः । दक्षिणे वृषभे वीरभद्राय नमः । चामरयुग्मे गङ्गायै नमः । श्रीवत्से लक्ष्म्यै नमः । स्वस्तिके, सरस्वत्यै नमः । उत्तरे पद्मे गौर्यै नमः । शङ्खे, दुर्गायै नमः । इति संपूज्य अष्टमङ्गलधारणदेवतां पूजयेत् । ऊर्वश्यै नमः । मेनकायै नमः । रम्भायै नमः । तिलोत्तमायै नमः । सुमुख्यै नमः । सुन्दर्यै नमः । कामुक्यै नमः । कामवर्धिन्यै नमः । इति द्वारपूजाविधिः ।

## १३. पञ्चगव्यस्थापनविधिः

यथा-स्वपुरतः द्रोण संख्यया स्थण्डिलं कृत्वा पञ्चाश्रं विलिख्य, मध्यादिक्रमेण कुशोदक-गोमय-घृत-क्षीर-दधि- गोमूत्राणि विन्यस्य, तत्क्रमेण गां गङ्गायै नमः । सां सन्ध्यायै नमः ।

सां सावित्र्यै नमः । गां गायत्र्यै नमः । सां सरस्वत्यै नमः । तुर्यायै नमः । इति संपूज्य, तत्क्रमेण ओं भूर्भुवस्सुवः, तत्सवितुर्वरेणियम् । (१६) दधिक्राव्ण्णो अकारिषम् । (१६) आप्यायस्व समेतु ते । (१६) शुक्रमसि (१६) । गन्धद्वारां (१६) इति जपित्वा गन्धाद्युपचारान् विधाय, देवीमुद्रास्य, कुशपात्रमेकीकृत्य, मूलमन्त्रमष्टोत्तरशतं जपित्वा, तत्त्वत्रयेणात्मनं व्याहृत्य बहिः प्रोक्षणं कुर्यात् । इति पञ्चगव्यस्थापनविधिः ।

## १४. कारणकलशस्थापनविधिः ।

यथा - ललाटे कण्ठपादान्तभागेषु, ओं हां शिवतत्त्वाय नमः । ओं हां रुद्रतत्त्वाय नमः । ओं हां विद्यातत्त्वाय नमः । ओं हां विष्णुतत्त्वाय नमः । ओं हां आत्मतत्त्वाय नमः । ओं हां ब्रह्मणे नमः । इति विन्यस्य, स्वासनं ब्रह्माङ्गं शिवं व्यापकत्वेन विन्यस्य, शिवहस्तं कृत्वा, ततो दक्षिणहस्ततले वामाङ्गुष्ठेन गन्धलेपितेन आसनमूर्तिं विन्यस्य, अङ्गुष्ठादि ईशानपञ्चकं विन्यस्य, विद्यादेहं मूर्तिनेत्र न्यासं विधाय, शिवमावाह्य, अङ्गानि कनिष्ठादिषु विन्यस्य परमित्या स्वशिरस्यधिरोप्य, ब्रह्मरन्ध्र प्रविष्टेन तेजसा बाह्याभ्यन्तरं तमःपटलमाधूय, प्रद्योतितं दिगन्तरं विभाव्य, मूर्ध्नि, इच्छाशक्त्यै नमः । मुखे, ज्ञानशक्त्यै नमः । हृदये क्रियाशक्त्यै नमः इति विन्यस्य, ततः आत्मानं मूर्तिपांश्च स्रग्वस्त्रमकुटादिभिः अलंकृत्य, सोऽहमिति विभाव्य, पञ्चगव्यार्घ्यतोयाभ्यां मण्डपाभ्यन्तरं प्रोक्ष्य, मण्डपं वीक्षणादि च चतुर्भिः संस्कारैः संस्कृत्य, दशाङ्गागरुधूपैः मण्डपं धूपयित्वा, ज्ञानखड्गं गृहीत्वा नैरृत्याभिमुखं लाज-चन्दन-

सिद्धार्थ - भस्म-दूर्वा - कुशाक्षतात्मकान् अस्त्रमन्त्रेण सप्तधाऽभिमन्त्रितान् विका(कि)रान्मण्डपाभ्यन्तरे विकिरेत्।

अस्त्राभिमन्त्रितेन कुशमुष्टिना तान् विकारान् संमार्ज्य, एकीकृत्य, ऐशान्यां वर्धन्यासनाय नमः इति विन्यस्य, वेद्याः समीपे, स्वासनस्थानं प्राग्वत्संशोध्य, अत्र स्वासनमास्तीर्य, प्राग्वत् संपूज्य, तत्र प्राग्दिङ्मुखः पद्मासने उपविशेत्।

मौनी विजितेन्द्रियः, प्राग्वत् पूजाद्रव्याण्यासाद्य, तानि तथैव स्वीकृत्य, गुर्वादिवन्दनं कृत्वा, करशुद्ध्यादि मानसपूजान्तं प्राग्वत् विधाय, मूलविद्यामष्टोत्तरशतं जपित्वा, जपं देव्यै समर्पयेत्। प्राग्वत् अर्घ्यस्थापनादि मानसपूजान्तं विधाय मूलविद्यां अष्टोत्तरशतं जपित्वा, जपं देव्यै समर्पयेत्।

वेद्यां कुशकूर्चानि कुम्भस्थापनेषु विन्यस्य,वेद्यां नवयोन्यात्मकं चक्रं विलिख्य तदुपरि भार संख्यैः शालिभिः, तदर्धतण्डुलैः, तदर्धतिलैश्च समचतुरश्रमण्डलं विधाय, तदुपरि सप्तविंशति दर्भानेकीकृत्य, गन्धाक्षतदूर्वायुतं तत्कूर्चं शालिपुञ्जोपरि निधाय, तत्प्रागुक्त योगपीठपूजां विधाय, सुवर्णादिरचितं कुम्भं अव्रणमतिशोभनाकृतिं, अस्त्रेण क्षालितं चन्दना-गरुधूपिताभ्यन्तरं त्रिगुणीकृततन्तुना वेष्टितं अच्छिद्रं गन्धपुष्पादिभिरलङ्कृतं कुम्भं कुशाक्षतसमन्वितं पुष्परागनील - वैदूर्य - विद्रुम - मौक्तिक - मरकत -वज्र - गोमोदपद्मरागाख्य-नवरत्नोदरं शालिपुञ्जोपरि प्रणवमुच्चरन् संस्थापयेत्।

प्रागर्चितयोगपीठस्य कुम्भस्य चैक्यं विभावयेत्। इत्थं आवरणकुम्भान् विन्यस्य, प्रधान कुम्भं वामकरेण प्रणवमुच्चरन्

स्पृष्ट्वा, दक्षिणहस्तेन गन्धपुष्पकर्पूरसुवासिततीर्थजलेन, मूलविद्यां जपन्, देवताधिया कुम्भमापूर्य, प्रागुक्त सामान्यार्घ्य विधिना शङ्खं संस्थाप्य, कुम्भतोयं सजातीय जलेन आपूर्य, तत्र चन्दनागरु कर्पूरगोरोचनाकाश्मीरचोरक जटामांसी सिंहिकाख्य - अष्टगन्धपङ्कं निक्षिप्य तस्मिन् शङ्खजले प्रागुक्ता वह्नेः दश कलाः, सूर्यस्य द्वादश कलाः, सोमस्य षोडशकलाः, सृष्ट्यादिपञ्चाशत्कलाश्च आवाहयेत्।

प्राग्वत् संपूज्य, तासां प्राणप्रतिष्ठां च विधाय, प्रतिलोमं मूलविद्यां त्रिः सकृद्वा शङ्खं स्पृशन् जपेत्। हृदये देवीं ध्यात्वा, तच्छंखस्थजलं कुम्भजले निक्षिप्य, अश्वत्थ-वट-सालौदुम्बर - पलाशपल्लवानि शतक्रतुलतया समाबध्य, कल्पद्रुमधिया कुम्भवक्त्रे निधाय, तदुपरि कुम्भं सजातीय तण्डुलपूर्णं नालिकेर फलान्वितं चषकं संस्थाप्य, तत्फलं कल्पवृक्षफलं ध्यायन् आरब(क्त)पट्टवस्त्रयुग्मेन तं कुम्भं संवेष्टयेत्। इति कारण कलशविधिः।

## १८. विशेषार्घ्यविधिः

यथा - स्वपुरतः चन्दनेन बिन्दु - त्रिकोण - षट्कोण - वृत्त - चतुरश्रं विलिख्य, मूलेन बिन्दौ, तत्त्रिखण्डैश्च त्रिकोणे, तद्द्विरावृत्त्य, षट्कोणे, तेनैव चतुरश्रे, वह्नीशासुरवायुमध्ये चतुर्दिक्षु संपूज्य, अस्त्रक्षालितं आधारमेकं विन्यस्य, प्रादक्षिण्य क्रमेण, यं धूम्रार्चिःकलायै नमः। रं ऊष्माकलायै नमः। लं ज्वलिनीकलायै नमः। वं ज्वालिनीकलायै नमः। शं विस्फुलिङ्गिनी कलायै नमः। षं सुश्रीकलायै नमः। सं सुरूपाकलायै नमः। हं कपिलाकलायै नमः। ळं हव्यवाहकलायै नमः। क्षं कव्यवाहकलायै नमः।

तदुपरि अस्त्रक्षालितपात्रमेकं विन्यस्य, प्रादक्षिण्यक्रमेण, कं भं तपिनी कलायै नमः । खं बं तापिनी कलायै नमः । गं फं धूम्राकलायै नमः । घं पं मरीचिकलायै नमः । ङं नं ज्वालिनी कलायै नमः । चं धं रुचिकलायै नमः । छं दं सुषुम्नाकलायै नमः । जं थं भोगदाकलायै नमः । झं तं विश्वाकलायै नमः । ञं णं बोधिनी कलायै नमः । टं ढं धारिणी कलायै नमः । ठं डं क्षमाकलायै नमः । इति संपूजयेत्।

तदन्तः सुगन्धोदकमापूर्य, तस्मिन् प्रादक्षिण्य क्रमेण अं अमृताकलायै नमः । आं मानदा कलायै नमः । इं पूषाकलायै नमः । ईं तुष्टिकलायै नमः । उं पुष्टिकलायै नमः । ऊं रतिकलायै नमः । ऋं धृतिकलायै नमः । ॠं शशिनी कलायै नमः । ऌं चन्द्रिका कलायै नमः । ॡं कान्ति कलायै नमः । एं ज्योत्स्ना कलायै नमः । ऐं श्रीकलायै नमः । औं प्रीतिकलायै नमः । ओं अङ्गदाकलायै नमः । अं पूर्णाकलायै नमः । अः पूर्णामृता कलायै नमः । इति संपूजयेत् ।

तस्मिन् अकथादि अष्टाचत्वारिंशदक्षराणि त्रिकोणे विलिख्य, तदन्तः पूर्वादिक्रमेण कोणत्रयेषु हं ऐं, लं क्लीं ,क्षं सौः इति विलिख्य, मध्ये मूलं, तत्पार्श्वयोः हं सं विलिख्य, तस्मिन्प्रादक्षिण्यक्रमेण कं सृष्टि कलायै नमः । खं ऋद्धिकलायै नमः । गं स्मृतिकलायै नमः घं मेधाकलायै नमः ।, ङं कान्तिकलायै नमः । चं लक्ष्मीकलायै नमः । छं द्युति कलायै नमः । जं स्थिरा कलायै नमः । झं स्थितिकलायै नमः । ञं सिद्धिकलायै नमः । (इति ब्रह्मकला दश) टं जराकलायै नमः । ठं पलिनी कलायै नमः । डं शान्तिकलायै नमः । ढं ईश्वरी कलायै नमः । णं रतिकलायै नमः । तं कामिनी

कलायै नमः । थं वरदाकलायै नमः । दं ह्लादिनी कलायै नमः । धं प्रीतिकलायै नमः । नं दीर्घकलायै नमः । (इति विष्णुकलाः दश) पं तीक्ष्णाकलायै नमः । फं रौद्रीकलायै नमः । बं भयाकलायै नमः । भं निद्राकलायै नमः । मं तन्द्रीकलायै नमः । यं क्षुधाकलायै नमः । रं क्रोधिनीकलायै नमः । वं उद्गारी कलायै नमः । शं मृत्युकलायै नमः । (इति रुद्रकलाः दश) षं पीताकलायै नमः । सं श्वेता कलायै नमः । हं अरुणाकलायै नमः । ळं असिता कलायै नमः । क्षं चित्राकलायै नमः । (इति ईश्वर कलाः-५) अं निवृत्तिकलायै नमः । आं प्रतिष्ठा कलायै नमः । इं विद्याकलायै नमः । ईं शान्ति कलायै नमः । ॐ इन्धिका (इन्दिरा) कलायै नमः । ॐ दीपिकाकलायै नमः । ऋं रेचिकाकलायै नमः । ॠं पूरका (मोचिका) कलायै नमः । लृं पराकलायै नमः । ॡं सूक्ष्मकलायै नमः । एं सूक्ष्मामृताकलायै नमः । ऐं ज्ञानामृताकलायै नमः । ओं आप्यायिनी कलायै नमः । औं व्यापिनी कलायै नमः । अं व्योमरूपाकलायै नमः । अः ज्ञानरूपाकलायै नमः । (ऐं ज्ञानाकलायै । ओं ज्ञानामृतायै । औं आप्यायिन्यै । अं व्यापिन्यै । अः व्योमरूपाय) । इति सदाशिव कलाः-१६) इति संपूजयेत् ।

श्रुति चतुष्टयं, घटिकाद्वयावसानं व्यापयित्वा, धेनु - योनि - गालिनी - गरुड - शङ्ख - चक्रमुद्राः प्रदर्श्य, मूलेन सप्तधाऽभिमृश्य, गन्धाद्युपचारान् विधाय, पूजोपकरणानि यागोपकरणानि आत्मानं च प्रोक्षयेत् । इति विशेषार्घ्य विधिः ।

## १६. पाद्यादिपात्रस्थापनाविधिः

स्वपुरतः स्थण्डिलोपरि, त्रिपदीं संस्थाप्य, अस्त्रक्षालित

पात्रत्रयं विन्यस्य, पाद्यपात्रे दूर्वाश्यामाकतण्डुलानि निक्षिप्य, श्रीमातृरूपिणीपाद्यपात्राय नमः । गायत्रीमूलमन्त्राभ्यां अभिमृश्य, धेनुमुद्रां कुर्यात् । अर्घ्यपात्रे दूर्वागन्धाक्षतान् निक्षिप्य, श्रीमातृरूपिणी-अर्घ्यपात्राय नमः । गायत्री मूलमन्त्राभ्यां अभिमृश्य धेनुमुद्रां कुर्यात् । आचमनपात्रे जातीफललवङ्गतकोलान् निक्षिप्य, श्रीमातृरूपिण्याचमन पात्राय नमः । गायत्री मूलमन्त्राभ्यां अभिमृश्य धेनुमुद्रां कुर्यात् । उपचारकाले पाद्यं पादयोः, अर्घ्यं शिरसि, आचमनं मुखे दद्यात् । इति पाद्यादिपात्र स्थापनविधिः ।

## १७. दिव्ययोगपीठार्चनाविधिः

अर्घ्योदकेन कुम्भमभ्युक्ष्य, स्वान्तःपीठोपरि श्री अमुकानन्दनाथ श्रीपादुकां पूजयामीति गुरुं संपूज्य दक्षिणभागे, गं गणपतिश्रीपादुकां पूजयामि इति संपूज्य, सर्वाधस्तादारभ्य उपर्युपरि, मण्डूकाय नमः । कालाग्निरुद्राय नमः । मूलप्रकृत्यै नमः । आधार शक्त्यै नमः ।कूर्माय नमः । अनन्ताय नमः । वराहाय नमः । पृथिव्यै नमः । तस्यां इक्षुरस-मदिराघृत-दुग्धपूर्णं समुद्रचतुष्टयं पश्चिम-दक्षिण-पूर्वोत्तरदिक्षु ध्यात्वा (इक्षुसमुद्राय नमः । मदिरासमुद्राय नमः । घृतसमुद्राय नमः । दुग्धसमुद्राय नमः ।) तन्मध्ये अं आं क्षं नवखण्डविराजिताय नमः । नवरत्नमयद्वीपाय नमः । ततः पश्चिमादि सव्यान्तं अप्रादक्षिण्यक्रमेण मध्ये च, अं आं इं ईं उं ऊं ऋं पुष्यरागरत्नाय नमः । ॠं एं ऐं ओं औं अं अः नीलरत्नाय नमः । कं खं गं घं ङं वैदूर्यरत्नाय नमः। चं छं जं झं ञं विद्रुमरत्नाय नमः । टं ठं डं ढं णं मौक्तिकरत्नाय नमः । तं थं दं धं नं मरकतरत्नाय नमः । प फं बं भं मं वज्ररत्नाय नमः । यं रं

लं वं शं गोमेदरत्नाय नमः । षं सं हं लं क्षं पद्मरागरत्नाय नमः इति पद्मरागं मध्ये पूजयित्वा पद्मरागोपरि स्वर्णपर्वताय नमः । तदुपरि नन्दनोद्यानाय नमः । कल्पकवृक्षेभ्यो नमः । वसन्तादिषड्तुभ्यो नमः । उद्यानस्य पश्चिमे, इन्द्रियाश्वेभ्यो नमः । उद्यानस्य पूर्वे इन्द्रियार्थगजेभ्यो नमः । मध्ये, विचित्ररत्नभूम्यै नमः ।

तस्यां पश्चिमादिविलोमेन मध्यान्तं कालचक्रेश्वरी पादुकां पूजयामि । मुद्राचक्रेश्वरी पादुकां पूजयामि । मातृचक्रेश्वरी पादुकां पूजयामि । देशचक्रेश्वरी पादुकां पूजयामि । रत्नचक्रेश्वरी पादुकां पूजयामि । श्री गुरुचक्रेश्वरीपादुकां पूजयामि । तत्वचक्रेश्वरीपादुकां पूजयामि । गृहचक्रेश्वरी पादुकां पूजयामि । श्रीचक्रेश्वरी पादुकां पूजयामि । मूर्ति चक्रेश्वरी पादुकां पूजयामि । इति । सप्ताक्ष (सप्तमकक्ष)र्यां संपूज्य, तस्यां अरुणतोय वा(प)रिधये नमः, तदन्तः स्वर्णप्राकाराय नमः । तदन्तः मणिमण्टपाय नमः । तस्य निर्ऋत्यादिकोण चतुष्टये वामतः कालरूपिणी - देशरूपिणी - आकाशरूपिणी - शब्दरूपिणी शक्ति श्री पादुकाः पूजयेत् । मध्ये संगीतयोगिनी श्रीपादुकां पूजयामि । समस्त गुप्तप्रकटसिद्धयोगिनी शक्ति श्री पादुकां पूजयामि । मणिमयवेदिका श्री पादुकां पूजयामि । श्वेतच्छत्र श्रीपादुकां पूजयामि । तदधः रत्नसिंहासनाय नमः । श्री पादुकां पूजयामि । श्री चक्राधारपीठं रत्नसिंहासनाय नमः श्री पादुकां पूजयामि । श्री चक्राधार पीठं रत्नसिंहासनत्वेन परिकल्पयेत् । तत् सिंहासनं पञ्चप्रेतमयं ध्यात्वा तस्य वायव्यादि कोणगतपाद चतुष्टयत्वेन स्थितान् ब्रह्म-विष्णु-रुद्र-ईश्वरान् पीत - श्याम - सितार्कप्रभान् ।

चतुर्भुजानुपविष्टान्, तेषां स्कन्धेषु संलग्नं उत्तानशायिनं उदक्शीर्षं सदाशिवं इन्दुप्रभं ध्यायेत् पूजयेत् ।

यथा - वायव्ये, लं पृथिव्यधिपतये ब्रह्मणे नमः। ब्रह्मप्रेतासन श्रीपादुकां पूजयामि । ईशाने - वं अपां अधिपतये विष्णवे नमः । विष्णुप्रेतासन श्री पादुकां पूजयामि । आग्नेय्यां रं वह्न्यधिपतये रुद्राय नमः । रुद्र श्री पादुकां पूजयामि । निर्ऋतौ, यं वाय्वधिपतये ईश्वराय नमः । ईश्वर प्रेतासन श्री पादुकां पूजयामि। मध्ये हं वियदधिपतये सदाशिवाय नमः । सदाशिवमहाप्रेतासन श्री पादुकां पूजयामि । इति ।

तस्य आसनस्य वायव्यादिकोण चतुष्टये धर्माय नमः । ज्ञानाय नमः । वैराग्याय नमः । ऐश्वर्याय नमः । इति प्रादक्षिण्येन संपूज्य, पश्चिमादिषु अज्ञानाय नमः । अधर्माय नमः (अधर्माय नमः । अज्ञानाय नमः) अवैराग्याय नमः । अनैश्वर्याय नमः । इति प्रादक्षिण्येन संपूजयेत् ।

तन्मध्ये मायाविद्ये पट्टसूत्रमयपट्टिकारूपेण लौकिकमञ्चवत् ओतप्रोतरूपेण ग्रथिते स्थिते ध्यात्वा, मायायै नमः । विद्यायै नमः । इति संपूज्य तदुपरि पञ्चदशफण विराजिताय अनन्ताय नमः इति तल्पाकारं अनन्तं पूजयेत्। तन्मध्य फणायां अष्टदलकमलं कामेश्वरी पीठं ध्यायेत् ।

पद्माय नमः । आनन्दकन्दाय नमः । संविन्नालाय नमः । प्रकृतिमयपत्रेभ्यो नमः । विकृतिमयकेसरेभ्यो नमः । पञ्चाशद्वर्ण बीजाढ्य सर्वतत्त्वरूपायै नमः । कर्णिकायै नमः । तस्यामेव, अं अर्कमण्डलाय नमः । उं सोममण्डलाय नमः । मं वह्निमण्डलाय नमः । सं संबोधात्मने सत्वाय नमः । रं

प्रकृत्यात्मने रजसे नमः। तं मोहात्मने तमसे नमः । आं आत्मने नमः । अं अन्तरात्मने नमः । पं परमात्मने नमः। ह्रीं ज्ञानात्मने नमः ।

कर्णिकायां चतुर्दिक्षु मध्ये च - ज्ञानतत्त्वात्मने नमः । मायातत्त्वात्मने नमः । कलातत्त्वात्मने नमः । विद्यातत्त्वात्मने नमः । परतत्त्वात्मने नमः इति पश्चिमादिप्रादक्षिण्येन संपूज्य, तद्दलकेसरे मध्ये च, स्वाग्रादि प्रादक्षिण्येन, मोहिनी श्री पादुकां पूजयामि । क्षोभिनी श्री पादुकां पूजयामि । वशिनी श्री पादुकां पूजयामि । स्तम्भिनी श्री पादुकां पूजयामि । आकर्षिणी श्री पादुकां पूजयामि । द्राविणी श्री पादुकां पूजयामि । ह्लादिनी श्री पादुकां पूजयामि । क्लिन्ना श्री पादुकां पूजयामि । क्लेदिनी श्री पादुकां पूजयामि । क्लीं सर्वशक्तिकमलासनाय नमः इति संपूजयेत्। इति दिव्यपीठार्चन विधिः ।

## १८. आवाहनविधिः

मूलेन प्राणायामत्रयं कृत्वा, मूलविद्यया ऋष्यादिकर-षडङ्गन्यासान् विधाय ततः तदुपरि प्रसूनतूलिकां कल्पयामि, इति मध्ये पुष्पाञ्जलिं निक्षिप्य, तदुपरि श्री महात्रिपुरसुन्दर्याः सकल चैतन्यानन्दमयीं कामेश्वरकामेश्वरी मूर्तिं कल्पयामि इति मध्ये पुष्पादि प्रक्षेपेण ध्यानोक्तां मूर्तिं भावयेत् । शक्त्युत्थापनमुद्रां प्रदर्श्य, मूलमुच्चार्य, परस्यै कामेश्वर कामेश्वरीमूर्त्यै नम इति कल्पित मूर्तिं पूजयेत् । इति योगपीठपूजा ।

कराभ्यां पुष्पाञ्जलिमादाय, मातृकाम्भोजत्वेन कल्पयित्वा, त्रिखण्डमुद्रां बध्वा, हृदि चक्रराजदेवीं यथोक्तरूपां सपरिवारां ध्यात्वा, तेजोरूपतां आपाद्य, तन्मुद्राप्रयोगेण मूलाधारात् कुण्डलिनीमुत्थाप्य, तया सह षट्चक्रभेदक्रमेण हृदयान्तः स्फुरन्तीं तां तेजेमयीं सुषुम्नामार्गेण ब्रह्मरन्ध्रं नीत्वा, परतेजःसंगमेन आवृत(अमृत) महाम्बुधौ क्षणं विश्राम्य, शिवशक्ति सामरस्य सुखमनुभवेत् ।

महापद्मवनान्तस्थकारणानन्दविग्रहे ।
सर्वभूतहिते मातः एह्येहि परमेश्वरि ॥

एह्येहि देवदेवेशि त्रिपुरे देवपूजिते ।
परामृतप्रिये शीघ्रं सान्निध्यं कुरु सर्वदा ॥
देवेशि भक्तसुलभे सर्वावरणसंवृते ।
यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भव ॥

इत्यावाहनमन्त्रमुच्चार्य वहन् नासापुटाध्वना त्रिखण्डमुद्रामुद्रितकरस्थपुष्पाञ्जलौ तत्तेजः समानीय, श्री पीठान्तः कल्पितमूर्तेः शिरसि ब्रह्मरन्ध्रस्थाने सन्निवेश्य, ब्रह्मरन्ध्रमार्गेण मूर्तेरन्तः प्रविश्य, देवीरूपेण परिणतं (आत्मानं) मत्वा, तां देवीं कामेश्वराङ्कस्थां सावरणां महात्रिपुरसुन्दरीं सर्वावयवभावेन ध्यायेत् ।

मूलतृतीयकूटं उच्चार्य, श्री महात्रिपुरसुन्दरि इह तिष्ठ तिष्ठ इति सन्निधापिन्या मुद्रया संस्थाप्य, तथैवोच्चार्य, इह सन्निधेहि इति सन्निधापिन्या सन्निधान विन्यासं निधाय, पुनरुच्चार्य, सन्निरुध्यस्व इति सन्निरोधिन्या संनिरुध्य, तथैव संमुखीभव इति संमुखीकरण्या संमुखीकृत्य, तथैव अवकुण्ठिता भव इति

अवकुण्ठिन्या अवकुण्ठ्य, देव्यङ्गे षडङ्गन्यासेन सकलीकृत्य, तथैव धेनुमुद्रया अमृतधारया अभिषिञ्चन् अमृतीकृत्य, तथैव महामुद्रया परमीकुर्यात् । आवाहनादि नवमुद्राः प्रदर्श्य, मूलेन अर्घ्यजलेन देवीं त्रिः प्रोक्ष्य प्राण प्रतिष्ठां कुर्यात् । इति आवाहन विधिः ।

## १९. प्राणप्रतिष्ठाविधिः

अथ कुम्भे आवाहनं विधाय प्राणप्रतिष्ठां कुर्यात् । (शिरसि) ब्रह्मविष्णु रुद्रर्षिभ्यो नमः । (मुखे) ऋग्यजुः सामच्छन्दोभ्यो नमः । (हृदये) पराप्राण शक्त्यै देवतायै नमः । (गुह्ये) आं बीजाय नमः । (पादयोः) ह्रीं शक्तये नमः । (नाभौ) क्रों कीलकाय नमः । इति विन्यस्य, श्री देवता प्राणप्रतिष्ठार्थे विनियोगः । इति कृताञ्जलिरुक्त्वा, (बीजशक्तिकीलकानि दक्षस्तने वामस्तने हृदये वा) ओं आं ह्रीं क्रों अं कं खं गं घं ङं आं आकाश वाय्वग्निसलिल पृथिव्यात्मने हृदयाय नमः । ओं आं ह्रीं क्रों इं चं छं जं झं ञं ईं शब्दस्पर्शरूप रसगन्धात्मने शिरसे स्वाहा । ओं आं ह्रीं क्रों उं टं ठं डं ढं णं ऊं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने शिखायै वषट् । ओं आं ह्रीं क्रों एं तं थं दं धं नं ऐं वाक्पाणिपाद पायूपस्थात्मने कवचाय हुं । ओं आं ह्रीं क्रों ओं पं फं बं भं मं औं वचनादानगमनविसर्गा नन्दात्मने नेत्रत्रयाय वौषट् । ओं आं ह्रीं क्रों अं यं रं लं वं शं अः मनोबुद्ध्यहङ्कारचित्तात्मने अस्त्राय फट् । (मन्त्रान् अङ्गुष्ठादि तलान्तं करयोर्विन्यस्य) नाभ्यादि पादान्तं आं नमः । हृदयादि नाभ्यन्तं ह्रीं नमः । मूर्धादि हृदयान्तं क्रों नमः । इति विन्यस्य, बिन्दुमध्ये, यं त्वगात्मने नमः । पूर्वदले रं असृगात्मने नमः । पश्चिमदले, लं मांसात्मने नमः ।

आग्नेये, वं मेद आत्मने नमः । वायव्ये, शं अस्थ्यात्मने नमः । ईशाने रं शं षं मज्जात्मने नमः । नैर्ऋते सं शक्त्यात्मने नमः । उत्तर दले, हं प्राणात्मने नमः । दक्षिणदले ळं जीवात्मने नमः । पुनः कर्णिकायां क्षं परमात्मने नमः इति विन्यस्य, ध्यायेत् ।

रक्ताब्धिपोतारुणपद्मसंस्थां पाशाङ्कुशाविक्षुशरासबाणान् ।
शूलं कपालं दधतीं कराब्जैः रक्तां त्रिणेत्रां प्रणमामि देवीम् ॥

इति ध्यात्वा, हृदि हस्तं निधाय, ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हं हंसः सोऽहं श्रीमहात्रिपुरसुन्दर्याः प्राण इह प्राणः । जीव इह स्थितः सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्र जिह्वाघ्राणा इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा । इति देवी हृदयं स्पृशन् मन्त्रं त्रिः सकृद्वा जपेत् । इति प्राणप्रतिष्ठाविधिः ।

## २०. प्रतिष्ठावरणपूजाविधिः

कामेश्वर्यादीनां वशिन्याद्यानां अष्टानां सिद्धीनां आवाहनं कुर्यात् पूजयेत् । देव्या दक्षिणतः सहस्रशीर्षा पुरुष इति परमात्मानमावाह्य, आवाहनादिमुद्राः प्रदर्श्य, उपचर्य, व्याहृत्या पूर्वादिकुम्भेषु; यत इन्द्र भयामहे इति मन्त्रेण इन्द्राय नमः । अग्निं दूतं वृणीमहे इति अग्नये नमः । योऽस्य कोष्ठ्या इति यमाय नमः । यत्ते देवीति निर्ऋतये नमः । इमं मे वरुणेति वरुणाय नमः । कामः प्रवृद्ध्यतां इति वायवे नमः । राजाधिराजायेति कुबेराय नमः । ईशानः सर्वविद्यानामिति ईशानाय नमः इति संपूज्य पृथक् गन्धाद्युपचारान् विधाय प्रतिष्ठान्तं रक्षकत्वं प्रार्थयेत् । षोडशोप चारैः संपूज्य देवीं तोषयेत् । इति प्रतिष्ठावरणपूजा विधिः ।

## २१. अग्निसन्धानविधिः

कुण्डसमीपे प्राग्वदासनं संपूज्य, प्राङ्मुख उपविश्य, गोमयोपलिप्तं कुण्डं, मूलमन्त्रं सञ्जपन् दिव्यदृष्ट्या निरीक्ष्य, अस्त्रमन्त्रेण कुशसलिलैः उत्तानहस्ताग्रेण प्रोक्ष्य, अस्त्रमन्त्रेणैव कुशैः सन्ताड्य, कवचमन्त्रेण कुशसलिलैः विरलमुष्टिना अभ्युक्ष्य, कुण्डमध्य भूमौ, कुशमूलेन दक्षिणे मध्ये उत्तरे पश्चिमादि प्रागग्रास्तिस्रो रेखाः हृदयमन्त्रेण विलिख्य, पुनः पश्चिम मध्ये पूर्वेषु दक्षिणादुत्तराग्राः तिस्रो रेखाः तथैव विलिख्य, वाचया, ऐं इति वाग्बीजेन कुशसलिलैः प्रोक्ष्य, प्रागग्ररेखासु ओं विष्णवे नमः, मध्यरेखायां ओं ईश्वराय नमः । उत्तररेखायां ओं इन्द्राय नमः । उदग्ररेखासु पश्चिमरेखायां ब्रह्मणे नमः । मध्यमरेखायां यमाय नमः । पूर्वरेखायां सोमाय नमः । इति रेखाधिदेवताः संपूज्य,तत्र त्रिकोणगर्भं चतुर्द्वारयुतं चतुरश्रद्वयवेष्टितं अष्टदलकमलं कामेश्वरीपीठं विरच्य, विभाव्य, तत्र ओं मण्डूकाय नमः । कालाग्नि रुद्राय नमः । मूलप्रकृत्यै नमः । आधार शक्त्यै नमः । कूर्माय नमः । अनन्ताय नमः। वराहाय नमः । भूम्यै नमः । सुधार्णवाय नमः । रत्नद्वीपाय नमः । महाकल्पकोद्यानाय नमः । स्वर्णप्रकाराय नमः । कदम्बवनाय नमः । मणिमण्डपाय नमः । कल्पकवृक्षाय नमः । स्वर्णवेदिकायै नमः । रत्नसिंहासनाय नमः । इति संपूजयेत् ।

चतुरश्रसिंहासनत्वेन परिकल्प्य, तत्र आग्नेय्यादि चतुर्विदिक्षु धर्मज्ञानवैराग्यैश्वर्येभ्यो नमः । स्वाग्रादिचतुर्दिक्षु अधर्माज्ञाना-वैराग्यानैश्वर्येभ्यो नमः । इति, मध्ये मायायै नमः । विद्यायै नमः । अनन्तायै नमः । पद्माय नमः । आनन्दकन्दाय नमः ।

संविन्नालाय नमः । प्रकृतिमयपत्रेभ्यो नमः । विकृतिमय-केसरेभ्यो नमः । पञ्चाशद्वर्णबीजाढ्य तत्त्वरूपकर्णिकायै नमः। अं अर्कमण्डलाय नमः। उं सोममण्डलाय नमः । मं वह्निमण्डलाय नमः । सं सत्वाय नमः । रं रजसे नमः । तं तमसे नमः । आं आत्मने नमः । अं अन्तरात्मने नमः । पं परमात्मने नमः । ह्रीं ज्ञानात्मने नमः । स्वाग्रादि चतुर्दिक्षु मध्ये च, ज्ञानतत्त्वात्मने नमः । मायातत्त्वात्मने नमः । कलातत्त्वात्मने नमः । विद्यातत्त्वात्मने नमः । परतत्त्वात्मने नमः इति संपूजयेत् ।

अष्टदलकेसरेषु, स्वाग्रमारभ्य मोहिन्यै नमः । क्षोभिण्यै नमः । वशिन्यै नमः । स्तम्भिन्यै नमः । आकर्षिण्यै नमः । द्राविण्यै नमः । आह्लादिन्यै नमः । क्लिन्नायै नमः । (मध्ये) क्लेदिन्यै नमः । इति पीठशक्तीः संपूज्य, क्लीं सर्वशक्ति कमलासनाय नमः इति समस्तपीठं संपूजयेत् ।

पुनः क्लीमिति कामबीजं उच्चार्य, कामेश्वरकामेश्वरीमूर्तिं परिकल्प्य, पुनः कामबीजमुच्चार्य कामेश्वर कामेश्वरी मूर्तिभ्यां नमः इति संपूज्य, कामबीजेन प्राणायामत्रयं कृत्वा शिरसि, संमोहन ऋषये नमः । मुखे, गायत्रीच्छन्दसे नमः । हृदये श्री कामेश्वरीदेवतायै नमः । गुह्ये क्लीं बीजाय नमः । पादयोः ईं शक्तये नमः। नाभौ लं कीलकाय नमः । मम सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः इति कृताञ्जलिर्वदेत् ।

ततः क्लामित्यादि षडङ्गमन्त्रान् अङ्गुष्ठादितलान्तं करयोः हृदयादिषडङ्गेष्वपि विन्यस्य ध्यायेत्—

जपाकुसुमसंकाशां धनुर्बाणधरां स्मरेत् (भजे) ।
नानालङ्कारसुभगां मोहयन्तीं जगत्त्रयम् ॥

इति हृदये ध्यात्वा मानसपूजां कृत्वा कराभ्यां पुष्पाञ्जलिमादाय हृदयकमलमध्ये, तेजोरूपां भगवतीं करस्थपुष्पाञ्जलौ सुषुम्नावर्त्मना वहन् नासापुटद्वारेण निःसार्य कुण्डमध्ये, स्वयन्त्रमध्य कलितमूर्तौ, प्राग्वदावाह्य, आवाहनादिपरमीकरणान्तं तत्तन्मुद्रा विधाय, प्राणप्रतिष्ठान्ते धनुर्बाणयोनिमुद्राः प्रदर्श्य, प्रागुक्तरूपां स्वसमानवर्णायुध-भूषणादियुतकामेश्वरयुतां ऋतुमतीं सकामां ग्राम्यधर्माभिरितां ध्यात्वा प्राग्वदासनादिपुष्पान्तैः उपचारैः देवदेव्यौ पृथक्पृथक् संपूज्य, अष्टदलकेसरेषु अग्नीशाय नमः । मुखाय नमः । देव्यग्रे स्वाग्रादि चतुर्दिक्षु च, क्लां हृदयाय नमः । क्लीं शिरसे नमः । क्लूं शिखायै नमः । क्लैं कवचाय नमः । क्लौं नेत्रत्रयाय नमः । इति संपूज्य, कर्णिकायां त्रिकोणान्तः स्वाग्रादिचतुर्दिक्षु प्रादक्षिण्येन, देव्यग्रे च, द्रां द्राविण्यै नमः । द्रीं क्षोभिण्यै नमः । क्लीं वशङ्करिण्यै नमः । ब्लूं आकर्षिण्यै नमः । सं संमोहिन्यै नमः । इति संपूज्य, अष्टदलेषु देव्यग्रादि, अनङ्गरूपिण्यै नमः । अनङ्गमदनायै नमः । अनङ्गमन्मथायै नमः । अनङ्गकुसुमायै नमः । अनङ्गमदनातुरायै नमः । अनङ्गशिशिरायै नमः । अनङ्गमेखलायै नमः । अनङ्गदीपिकायै नमः इति प्रादक्षिण्येन संपूजयेत् ।

चतुरश्रे प्राग्वत् लोकपालान् तदस्त्राणि च संपूज्य, धूपदीप-नैवेद्य ताम्बूलान्तानुपचारान् परिकल्प्य, स्वर्णरजतताम्रनूतन मृण्मयान्यतमपात्रे अरणिसंभवं, सूर्यकान्तादिमण्युद्भवं लोहपाषाणाद्युद्भवं श्रोत्रियद्विजगृहादाहृतं, अस्त्रेण अग्निमादाय,

कवचमन्त्रेण सजातीयपात्रान्तरेण पिधाय अग्निमानीय अस्त्रमन्त्रेण तन्मध्यात् एकमङ्गारं नैरृत्यकोणे क्रव्यादांशं परित्यज्य, देवांशं स्वपुरः कृत्वा, स्वपात्रं मूलविद्यया संस्थाप्य, मूलमन्त्रेण वीक्ष्य, अस्त्रेण प्रोक्ष्य, अस्त्रेणैव कुशैः सन्ताड्य कवचेन अभ्युक्ष्य, प्रणवेन अभिमन्त्र्य, धेनुमुद्रया अमृतीकृत्य, अस्त्रमन्त्रेण संरक्ष्य, कवचेन अवकुण्ठ्य, जानुभ्यां अवनीं गत्वा, तत्पात्रं कराभ्यामादाय, कुण्डस्योपरि प्रदक्षिणं त्रिः परिभ्राम्य, प्रणवमुच्चरन्, कामेश्वर्याः योनौ कामेश्वरस्य बीजं इति ध्यायन्, स्वाभिमुखं कुण्ड मध्ये अग्निं प्रक्षिपेत्।

कामेश्वरी - कामेश्वरयोः आचमनं दत्वा, स्वनाभिमण्डले जठराग्निं संचिन्त्य, सुषुम्नावर्त्मना ब्रह्मरन्ध्रस्थे अग्नीषोमात्मके महाबिन्दुमध्यगत बैन्दवाग्नौ जठराग्निं संयोज्य, तौ पुनः वहन्, नासाध्वना निस्सार्य कुण्डमध्यस्थपार्थिवाग्नौ संयोजयेत्। कामेश्वरीगर्भे वक्ष्यमाण ध्यानोक्त रूपां वह्निमूर्तिं संचिन्त्य, मूलविद्यान्ते, आं सोहं वह्निचैतन्याय नमः इति तस्यां मूर्तौ वह्निचैतन्यं संयोज्य, क्लीं वह्निमूर्तये नमः इति वह्निं संपूज्य, तदुपरि कुशान्, काष्ठशकलानि च निक्षिप्य, चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा इति मन्त्रेण मुखेन फूत्कृत्य, अग्निं प्रज्वाल्य,

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्।
सुवर्णवर्णमनलं समिद्धं विश्वतो मुखम्॥

इति ज्वलितमग्निं उपतिष्ठेत्। ततो वक्ष्यमाण वह्निमन्त्रेण प्राणायामत्रयं कुर्यात्।

अग्निमन्त्रः- (शिरसि) भृगु ऋषये नमः। (मुखे) गायत्री छन्दसे नमः। (हृदये) अग्नये नमः। होमार्थे विनियोगः

इति कृताञ्जलिर्वदेत्। सहस्रार्चिषे हृदयाय नमः । स्वस्ति पूर्णाय शिरसे स्वाहा । उत्तिष्ठ पुरुषाय शिखायै वषट् । धूमव्यापिने कवचाय हुं। सप्तजिह्वाय नेत्रत्रयाय वौषट् । धनुर्धराय अस्त्राय फट्। इति षडङ्गमन्त्रान् अङ्गुष्ठादि तलान्तं करयोः, हृदयादि षडङ्गेष्वपि (यथायोगं) विन्यस्य, लिङ्गे, स्यूं हिरण्यायै नमः ।, पायौ, क्ष्म्र्यूं कनकायै नमः । शिरसि, श्य्रूं रक्तायै नमः । मुखे, ब्र्यूं कृष्णायै नमः । नासिकायां, ल्र्यूं सुप्रभायै नमः । नेत्रयोः, य्र्यूं अतिरक्तायै नमः । सर्वाङ्गे - क्रूं बहुरूपायै नमः । इति सप्तजिह्वाः विन्यसेत् ।

मूर्ध्नि, अग्नये नमः । जातवेदसे नमः । वामांसे, सप्तजिह्वाय नमः । वामपार्श्वे हव्यवाहनाय नमः । वामकट्यां, अश्वोदराय नमः । लिङ्गे, वैश्वानराय नमः । दक्षिण कट्यां कौमारतेजसे नमः । दक्षिणपार्श्वे विश्वतोमुखाय नमः । दक्षिणांसे अग्नये देवमुखाय नमः । इति वह्नेः अष्टमूर्तीः विन्यस्य, सप्तजिह्वामुद्रां बध्वा, वक्ष्यमाणवह्निरूपं स्वाभेदेन ध्यात्वा, वह्निमन्त्रेण प्रागुक्तसामान्यार्घ्य विधिना अर्घ्यपात्रं संस्थाप्य प्रागुक्तविधानेनैव पाद्याचमनीय मधुपर्कप्रोक्षणीपात्राणि च संस्थाप्य स्रुक्स्रुवाज्य स्थालीः चरुस्थालीं प्रणीतापात्रं बहुमात्रदीर्घं अक्लिष्टवत् अव्रणं आर्द्रं अङ्गुष्ठमात्रस्थूलं परिधित्रयं पलाश - वैकंकत - काश्मर्य - बैल्वाद्यन्यतमं परिधिसजातीयं प्रादेशमात्रदीर्घं कनिष्ठाङ्गुलिस्थूलं आर्द्रसमित्पञ्चकं कुशान् पवित्रत्रयं कृतं पूजाद्रव्याणि दध्यक्षतादिबलिद्रव्याणि यागोपकरणानि च संपाद्य, कुण्डस्योत्तरभागे कुशास्तरे निधाय, स्रुगादिषट्पात्राणि अधोमुखानि संस्थाप्य, अन्यानि द्रव्याणि यथायथं निधाय, प्रोक्षणीपात्रं प्रक्षाल्य, स्वपुरतः कुशास्तरे

निधाय, शुद्धोदकेन आपूर्य, वक्ष्यमाण प्रकारेण पवित्रेण उत्प्लवनं कृत्वा स्वदक्षिणभागे निधाय, प्रणीतापात्रं प्रक्षाल्य स्वपुरतः कुशास्तरे निधाय शुद्धोदकेनापूर्य गन्धाक्षतान् निक्षिप्य, तत्र पवित्रं उत्तराग्रं निधाय, उत्तानहस्तद्वयेन अङ्गुष्ठानामिकाभ्यां पवित्राग्रमूले विधृत्य, अधोमुखौ हस्तौ कृत्वा, अस्त्रमन्त्रेण तज्जलबिन्दुं पवित्रमध्येन भूमौ त्रिः निक्षिप्य, तत्र घृतबिन्दुं दक्षिणकुण्डस्योत्तरे कुशास्तरे तत्पात्रं संस्थाप्य, तदुपरि कुशान् निक्षिपेत्।

प्रणीता प्रणयनं विधाय, अधोमुखानि पात्राणि उत्तानीकृत्य, प्रोक्षणीजलेन प्रोक्ष्य, ततः प्राक् स्थापितप्रोक्षणी-जलेन वह्निमेखलोपरि परिषिच्य, मध्यमेखले वा गर्भरहितैः चतुर्भिश्चतुर्भिः दर्भैः ईशानादीशानान्तं प्रादक्षिण्येन आग्नेये दक्षिणपरिस्तरणाग्रेण पूर्वपरिस्तरणस्य मूलमाच्छादयन्, नैर्ऋत्ये दक्षिणपरिस्तरणस्य मूलेन पश्चिमपरिस्तरणस्य च मूलमाच्छादयन्, उत्तरपरिस्तरणाग्रेण पूर्वपरिस्तरणा-ग्रमाच्छादयन् परिस्तीर्य, पश्चिमदक्षिणोत्तरदिक्षु ज्येष्ठमध्यम-कनिष्ठक्रमेण पूर्वाग्रमुत्तराग्रं परिधिं निक्षिप्य तेषु पश्चिमपरिधौ ब्रह्मणे नमः । दक्षिणे विष्णवे नमः । उत्तरे रुद्राय नमः इति संपूजयेत्।

अत्र परिस्तरणपरिधिप्रक्षेपौ-पश्चिममेखलायां योनि-नालोर्ध्वमेखलयोः मध्यमे कार्यौ नालमेखलयोर्मध्ये, परिधेः स्थापनस्य च रन्ध्रं कुर्यात्। तथा - विद्वान्, मेखलोपरीति सारसंग्रहवचनात् तत्र रन्ध्रस्य विद्यमानत्वात् । ततः अमुकांगहोमकर्मणि कृताकृतावेक्षणाय ब्रह्मत्वेन त्वां वृणे इति वस्त्रालङ्कारादिभिः प्रणुयात् कंचन । ततस्तं गन्धादिभिः

पूजयेत्। ब्राह्मणालाभे कुशवटुं वा संप्रार्थयेत्।

कुण्डमध्ये कामेश्वरीगर्भस्थं वह्निं ध्यायेत्। यथा–

ततो वैश्वानरं गर्भे त्रिणेत्रमरुणप्रभम्।
शुक्लाम्बरधरं रत्नभूषणं पद्मसंस्थितम्॥

वरं शक्तिं स्वस्तिकं चाभीतिं हस्तैस्तु बिभ्रतम्।
अनेकहेममालाभिरङ्कितं संस्मरेत् प्रियम्॥

इति, त्रिकोणषट्कोणगर्भित कर्णिकाचतुर्द्वारयुत चतुरश्रद्वय वेष्टिताष्टदलात्मकवह्निपीठ मध्यस्थं ध्यात्वा, मण्डूकादि ज्ञानात्मान्तं प्राग्वत् योगपीठं संपूज्य, अष्टदल केसरेषु मध्ये च स्वाग्रादिप्रादक्षिण्येन ओं पीतायै नमः। श्वेतायै नमः। अरुणायै नमः। कृष्णायै नमः। धूम्रायै नमः। तीव्रायै नमः। स्फुलिङ्गिन्यै नमः। रुचिरायै नमः। ज्वालिन्यै नमः इति शक्तिनवकं पूजयेत्।

रं सर्वशक्तिकमलासनाय नमः इति समस्तं पीठं संपूज्य तन्मध्यस्थं यथोक्तरूपं वह्निं ध्यायेत्। स्थापनादि परमीकरणान्तं तत्तन्मुद्रया विधाय, सप्तजिह्वामुद्रां प्रदर्श्य वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा इति मन्त्रेण आसनादिपुष्पान्तैः उपचारैः वह्निं पूजयेत्।

अत्र वह्निपूजायां अर्घ्यादिकं वह्नेः, तदङ्गशुद्ध्या कुण्डाद्बहिः पात्रान्तरे दद्यात्। चन्दनादीनि वह्नावेव दद्यात्। ततो वह्निमुखे षट्कोणं विभाव्य, बहिःस्थषट्कोणे वा ईशानकोणे स्र्यूं हिरण्यायै नमः। क्ष्म्र्यं कनकायै नमः। श्र्यूं रक्तायै नमः। क्र्यूं कृष्णायै नमः। क्ष्म्र्यूं सुप्रभायै नमः। य्रूं अतिरक्तायै नमः। मध्ये ॠं बहुरूपायै नमः। इति जिह्वाः संपूजयेत्।

अष्टदलकेसरेषु आग्नेये सहस्रार्चिषे हृदयाय नमः । ईशाने स्वस्तिपूर्णाय शिरसे नमः । नैर्ऋते, उत्तिष्ठपुरुषाय शिखायै नमः । वायव्ये धूमव्यापिने कवचाय नमः । आग्नेये सप्तजिह्वाय नेत्रत्रयाय नमः । स्वाग्रादिचतुर्दिक्षु धनुर्धराय अस्त्राय नमः । इति षडङ्गानि संपूज्य, अष्टदलेषु स्वाग्रादिप्रदक्षिण्येन, अग्नये जातवेदसे नमः । अग्नये सप्तजिह्वाय नमः । अग्नये हव्यवाहनाय नमः । अग्नये अश्वोदराय नमः । अग्नये वैश्वानराय नमः । अग्नये कौमारतेजसे नमः । अग्नये विश्वतोमुखाय नमः । अग्नये देवमुखाय नमः इति मूर्तिं संपूज्य, अष्टदलाग्रेषु, आं ब्राह्म्यै नमः । ईं माहेश्वर्यै नमः । ऊं कौमार्यै नमः । ॠं वैष्णव्यै नमः । ॡं वाराह्यै नमः । ऐं इन्द्राण्यै नमः । औं चामुण्डायै नमः । अः महालक्ष्म्यै नमः । इति प्रादक्षिण्येन संपूज्य, चतुरश्रे लोकपालान्, तदस्त्राणि च प्राग्वत्संपूज्य, वह्निमन्त्रेण वह्निं संपूज्य, धूपदीपादि ताम्बूलान्तं परिकल्प्य, वह्निं प्रणमेत् । इति अग्निसन्धानविधिः ।

## २२. स्रुक्स्रुवसंस्कारविधिः

वह्निमन्त्रेण वह्निं संपूज्य आज्यस्थालीं अस्त्रेण प्रक्षाल्य, स्वपुरतः कुशास्तरे निधाय, तस्यां उत्तराग्रं पवित्रं निधाय, वीक्षणादि चतुर्भिः संस्कारैः संस्कृतं सुगन्धि सुशोधितं गव्यं घृतमापूर्य, मूलविद्यया त्रिरभिमन्त्र्य, तत्र स्वेष्टदेवतां संचिन्त्य, धेनुमुद्रां प्रदर्श्य, कुण्डादङ्गारान् उद्धृत्य, कुण्डस्य वायव्यकोणे कच्चित्पात्रे वा भूमौ वा निक्षिप्य, तदुपरि हृन्मन्त्रेण आज्यस्थालीं निधाय, दर्भयुगलमग्नौ सन्दीप्य दग्धांशं आज्ये हृदा निक्षिप्य अवशिष्टमग्नौ प्रक्षिपेत्, पुनर्दर्भयुगलं

संदीप्य, कवचेन आज्योपरि त्रिः भ्रामयित्वा अग्नौ दर्भशेषं प्रक्षिप्य, पुनर्दर्भान् प्रज्वाल्य आज्ये हृन्मन्त्रेण प्रदर्श्य, दग्धशेषं अग्नौ प्रक्षिप्य। आज्यस्थालीं अङ्गारेभ्यः उत्तरस्यामुत्तीर्य, अङ्गारान् अग्नौ निक्षिप्य, अप उपस्पृश्य, स्वपुरतो दर्भेषु आज्यस्थालीं निधाय, प्राग्वत् अस्त्रमन्त्रेण पवित्रमध्येन घृते त्रिः उत्प्लावनं विधाय, हृन्मन्त्रेण स्वाभिमुखं पवित्रमध्येन त्रिः संप्लावनं कुर्यात्। तापन - पवित्रीकरण - अभिद्योतन - उत्प्लवन - संप्लवनाख्य संस्कारान् कृत्वा, कराभ्यां स्रुक् स्रुवौ ऊर्ध्वमुखौ प्रताप्य, कुशमूलैः तयोर्मूलं, कुशमध्यैः तयोर्मध्यं, कुशाग्रैः तयोरग्रं त्रिः परिमृज्य, वामहस्ते निधाय, दक्षिणहस्तेन तौ प्रोक्ष्य, पुनः प्रताप्य, दर्भानद्भिः संस्पृश्य, अग्नौ प्रक्षिपेत्।

तयोरधो वामकरं कृत्वा ऊर्ध्वमुखौ तौ, मूलविद्यया अन्ते बालाविद्यया त्रिरभिमन्त्र्य, तयोर्मूले, ऐं आत्मतत्त्वाय नमः। मध्ये क्लीं विद्यातत्त्वाय नमः। अग्रे सौः शिवतत्त्वाय नमः। इति पृथग्विन्यस्य, पुनस्तयोर्मूले ह्रां इच्छाशक्त्यै नमः। तयोर्मध्ये ह्रीं ज्ञानशक्त्यै नमः। तयोरग्रे ह्रूं क्रियाशक्त्यै नमः। इति शक्तित्रयं विन्यस्येत्।

स्रुचि ह्रीं नमः। स्रुवे ह्रौं नमः। हृन्मन्त्रेण तयोः कर्णदेशे त्रितन्तुरूपेण सूत्रेण पृथक् पृथक् त्रिः प्रदक्षिणं संवेष्ट्य गन्धादिभिः संपूज्य, स्वदक्षिणभागे कुशास्तरे स्थापयेत्। इति स्रुक्स्रुवसंस्कारविधिः।

## १३. उपकर्मधारणविधिः

आज्यस्थाल्यां पवित्रं प्रागग्रं कृत्वा, द्वौ भागौ कृत्वा

दक्षिणभागं शुक्लपक्षं, वामभागं कृष्णपक्षं च सञ्चिन्त्य, वामभागे इडां, दक्षिणे पिङ्गलां, मध्ये सुषुम्नां च विभाव्य, हृन्मन्त्रेण दक्षिणभागात् स्रुवेणाज्यं आदाय, अग्नये स्वाहा इति अग्नेः दक्षिणनेत्रे हुत्वा, अग्नये इदं न मम इत्युक्त्वा, पुनः वामभागात् तथैव आज्यमादाय, सोमाय स्वाहा इति वह्नेः वामलोचने हुत्वा, सोमाय इदं न मम इत्युक्त्वा पुनः मध्यात् हृदा आज्यमादाय, अग्नीषोमाभ्यां स्वाहा इति वह्नेः मुखे जुहुयात्। अग्नीषोमाभ्यां इदं न ममेति उद्देशत्यागं कुर्यात्। इति वह्नेः वक्त्रोद्घाटनं विदध्यात्। ततः ओं भूः स्वाहा इति व्याहृति चतुष्टयेन हुत्वा अग्नये सोमाय अग्नये प्रजापतये च आहुति चतुष्टयं हुत्वा, वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा इत्यग्निमन्त्रेण आहुतित्रयं जुहुयात्।

ऐं अग्नये गर्भाधानं संपादयामि स्वाहा । ऐं अग्नये पुंसवनं संपादयामि स्वाहा । ऐं अग्नये सीमन्तोन्नयनं संपादयामि स्वाहा इति प्रतिकर्म आज्याहुत्यष्टकं हुत्वा, कामेश्वरीगर्भजातं प्रागुक्तरूपं वह्निं ध्यात्वा, ऐं जातकर्म संपादयामि स्वाहा । इत्यष्टौ आज्याहुतीर्जुहुयात्। वह्नेः नालच्छेदं कृत्वा सूतकं संशोध्य, वह्नेः नामकरणं संपादयामि स्वाहा इति अष्टौ आज्याहुतीः हुत्वा, कामाग्निः इति नाम परिकल्प्य, कामेश्वरं कामेश्वरीं च संपूज्य, विसर्ज्य, अग्नेः उपनिष्क्रामणं संपादयामि स्वाहा । ऐं अग्नये चौलं संपादयामि स्वाहा । ऐं अग्नेः उपनयनं संपादयामि स्वाहा । ऐं अग्नये महानाम्न्यं संपादयामि स्वाहा । ऐं अग्नेर्महाव्रतं संपादयामि स्वाहा । ऐं अग्नेः उपनिषदं संपादयामि स्वाहा । ऐं अग्नेः गोदानं संपादयामि स्वाहा। ऐं अग्नेः समावर्तनं संपादयामि स्वाहा । ऐं अग्नेः विवाहं

संपादयामि स्वाहा । इति प्रतिकर्म अष्टौ अष्टौ आहुतीः जुहुयात्। गर्भाधानादि विवाहान्तान् पञ्चदश संस्कारान् कुर्यात्।

ततो मूलाग्रघृतप्लुतं समित्पञ्चकं तूष्णीं वह्नौ निक्षिप्य, ह्र्यूं हिरण्यायै स्वाहा । घ्र्यूं कनकायै स्वाहा । श्र्यूं रक्तायै स्वाहा । क्ष्र्यूं कृष्णायै स्वाहा । ल्र्यूं सुप्रभायै स्वाहा । य्रूँ अतिरक्तायै स्वाहा । ग्र्यूं बहुरूपायै स्वाहा । सहस्रार्चिषे हृदयाय स्वाहा । स्वस्तिपूर्णाय शिरसे स्वाहा । उत्तिष्ठपुरुषाय शिखायै स्वाहा । धूमव्यापिने कवचाय स्वाहा । सप्तजिह्वाय नेत्रत्रयाय स्वाहा । धनुर्धराय अस्त्राय स्वाहा । अग्नये जातवेदसे स्वाहा । अग्नये सप्तजिह्वाय स्वाहा । अग्नये हव्यवाहनाय स्वाहा । ओं अग्नये अश्वोदराय स्वाहा । ओं अग्नये वैश्वानराय स्वाहा । ओं अग्नये कौमारतेजसे स्वाहा । ओं अग्नये विश्वमुखाय स्वाहा । आं ब्राह्म्यै स्वाहा । ईं माहेश्वर्यै स्वाहा । ऊं कौमार्यै स्वाहा । ऋं वैष्णव्यै स्वाहा । लॄं वाराह्यै स्वाहा । ओं चामुण्डायै स्वाहा । अः महालक्ष्म्यै स्वाहा । लं इन्द्राय स्वाहा । रं अग्नये स्वाहा । टं यमाय स्वाहा । क्षं निरृतये स्वाहा । वं वरुणाय स्वाहा । यं वायवे स्वाहा । सं सोमाय स्वाहा । शं ईशानाय स्वाहा । ओं ब्रह्मणे स्वाहा । ह्रीं अनन्ताय स्वाहा । ओं वज्राय स्वाहा । ओं शक्त्यै स्वाहा । ओं दण्डाय स्वाहा । ओं खड्गाय स्वाहा । ओं पाशाय स्वाहा । ओं अङ्कुशाय स्वाहा । ओं गदायै स्वाहा । ओं त्रिशूलाय स्वाहा । ओं पद्माय स्वाहा । ओं चक्राय स्वाहा । एवं वह्नेः जिह्वाऽङ्गप्रत्यङ्गदेवतानां एकैकामाज्याहुतिं जुहुयात् ।

स्रुवेण चतुर्वारं स्रुचि घृतमापूर्य अधोमुखं स्रुवं स्रुचि निधाय, उत्थाय, प्रागुक्तवह्निमन्त्रान्ते वौषट् इति वह्नौ हुत्वा, उपविश्य, पुनः स्रुवेण, ओं स्वाहा । ओं श्रीं स्वाहा । ओं श्रीं ह्रीं स्वाहा । ओं श्रीं ह्रीं क्लीं स्वाहा । ओं श्रीं ह्रीं क्लीं ग्लौं स्वाहा । ओं श्रीं क्लीं ग्लौं गं स्वाहा । ओं श्रीं क्लीं ग्लौं गं गणपतये स्वाहा । ओं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद स्वाहा । ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे स्वाहा । ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा । इति दशधा विभक्तेन महागणपतिमन्त्रेण दशाहुतीर्हुत्वा, समस्तेन महागणपतिमन्त्रेण आहुतिचतुष्टयं जुहुयात् । इति महागणपतिहोमः ।

चरुः – ततस्ताम्रादिनिर्मितां चरुस्थालीं अस्त्रेण प्रक्षाल्य, तत्र सुशुद्धान् शालितण्डुलान् मूलविद्यया अष्टधाऽभिमन्त्रितान् पञ्चदशप्रसृतिमितान् अस्त्रमन्त्रं जपन् निक्षिपेत् । तत्र यथामानं गोक्षीरं निक्षिप्य, कवचमन्त्रेण पात्रान्तरेण तत्पात्रमुखं पिधाय, गुरुः प्राग्दिङ्मुखः मूलविद्यां जपन्, इध्मजातीयेन अवदानयोश्च स्थूलाग्रेण वृत्ताकार घटितेन, मेक्षणेन प्रादक्षिण्येन ऊर्ध्वमवटं घट्टयन्, सुस्विन्नं अदग्धं नातिक्लिन्नं नातिशिथिलं चरुं श्रपयेत् । स्रुवं आज्येनाभिपूर्य, मूलविद्यया स्विन्ने तस्मिन् चरौ, सप्ताभिघारित स्रुवमाज्यं निक्षिप्य, तत्पात्रं कवचेनोत्तार्य, कुण्डस्य उत्तरभागे कुशास्तरे निधाय, प्राग्वदासनं संपूज्य, तत्र प्राङ्मुखः उपविश्य, मूलविद्यया प्राणायामत्रयं ऋष्यादि करषडङ्ग न्यासांश्च विधाय, करशुद्धि - षडासन - षडङ्गयुवति - वशिन्याद्यष्टक - चतुष्पीठ - चतुस्तत्वाख्य न्यासषट्कं विधाय, ध्यानासन पूजान्ते, प्राग्वत्

अर्घ्यादि स्थापनं कृत्वा, आत्मपूजां विधाय, वह्निमुखे श्रीचक्रं ध्यात्वा, प्राग्वत् योगपीठं पूजयित्वा, मूर्तिं कल्पयित्वा, देवीं आवाह्य सर्वोपचारैः संपूज्य, प्राग्वत् तिथिनित्यादि समस्तदेवताबृन्दं संपूज्य, वह्निरूपां भगवतीं ध्यायेत् ।

मूलविद्यया घृतैः पञ्चविंशत्याहुतीः हुत्वा, पत्रैकीकरणं विधाय पुनः वह्निदेवतयोः स्वात्मना सह ऐक्यं विभावयन्, नाडीसन्धार्थे एकादश आहुतीः मूलविद्यया कुर्यात् । अङ्गादिसमस्त प्रतिदेवतानां तत्तन्नामान्ते श्री पादुकायै स्वाहा इत्यादि तत्तन्नाममन्त्रैः प्रत्येकं एकैकां आज्याहुतिं हुत्वा, प्रागादिषु कुण्डेषु ऋत्विग्भिः प्रागुक्तविधिना संस्तुतेषु आचार्यः स्वकुण्डादग्निं उद्धृत्य वितरेत् । ततः ऋत्विजः स्वे स्वे कुण्डे वह्निं प्रज्वाल्य, स्व स्व कुण्डाग्रे स्वस्वासनानि प्रागुक्तविधिना संपूज्य, उपविश्य, गुर्वादिवन्दन पूर्वकं भूतशुद्ध्यादि यथाशक्ति न्यासजालं विधाय, प्रागुक्तविधिना अर्घ्यादिस्थापनपूर्वकं वह्निमुखे श्रीचक्रं ध्यात्वा, पीठपूजापुरःसरं देवीमावाह्य, सांगां सावरणां सर्वोपचारैः संपूजयेयुः । संस्तुतघृतेन पञ्चविंशत्याहुतीः मूलेन स्वस्वकुण्डेषु जुहुयुः । इति उपकर्मधारणविधिः ।

## १४. नित्ययजनविधिः

कालविधिना अनुष्ठिततत्तत्कालाह्निकक्रियः देशिकः ऋत्विग्भिः सह प्रत्यहं प्रातः प्रभाते उत्थाय अमुक क्रियान्तं प्रत्यहं सामान्यार्घ्य-द्वारपूजा - पाद्यादिस्थापन - आवाहनप्राणप्रतिष्ठा - आराधन - आवरणपूजाः विधाय, कुण्डं गत्वा, स्वासने समुपविश्य, मेखलात्रितयेषु बालाबीजैः संपूज्य, वह्नौ कामाग्नये

नमः इति संपूज्य, स्रुक्स्रुवसंस्कारं विधाय, सहस्रोनं न कर्तव्यमिति वचनात् मूलेन जुहुयात्,

शिवाय स्वाहा (२८) । इन्द्राय स्वाहा (२८) । अग्नये स्वाहा (२८) । यमाय स्वाहा (२८) । निरृतये स्वाहा (२८) । वरुणाय स्वाहा (२८) । वायवे स्वाहा (२८) । कुबेराय स्वाहा (२८) । ईशानाय स्वाहा (२८) । घृणिः सूर्य इति (२८) ओं नमो नारायणाय (२८) ।

पूर्वद्वारे श्रियै स्वाहा । शान्ति तोरायणाय स्वाहा । ऋग्वेदाय स्वाहा । कृतयुगाय स्वाहा । पूष्णे स्वाहा । धात्रे स्वाहा । विधात्रे स्वाहा । नन्दिने स्वाहा । महाकालाय स्वाहा । प्रशान्ताय स्वाहा । शिशिराय स्वाहा । इन्द्राय स्वाहा । अग्नये स्वाहा । गणपतये स्वाहा । सरस्वत्यै स्वाहा । महालक्ष्म्यै स्वाहा ।

त्रिपुरारये (त्रिपुरायै) स्वाहा । भद्रतोरणाय स्वाहा । यजुर्वेदाय स्वाहा । त्रेतायुगाय स्वाहा । भवाय स्वाहा । पर्जन्याय स्वाहा । इन्द्राय स्वाहा । भृङ्गिणे स्वाहा ।

पर्जन्याय स्वाहा । अशोकाय स्वाहा । यमाय स्वाहा । निरृतये स्वाहा । वटुकाय स्वाहा । गणपतये स्वाहा । सरस्वत्यै स्वाहा । महालक्ष्म्यै स्वाहा । वेतालाय स्वाहा ।

अग्निजिह्वाय स्वाहा । बलतोरणाय स्वाहा । सामवेदाय स्वाहा । द्वापरयुगाय स्वाहा । अर्यम्णे स्वाहा । मित्राय स्वाहा । त्वष्ट्रे स्वाहा । वृषभाय स्वाहा । स्कन्दाय स्वाहा । भूतसञ्जीवनाय स्वाहा । अमृताय स्वाहा । वरुणाय स्वाहा । वायवे स्वाहा । दुर्गायै स्वाहा । गणपतये स्वाहा । सरस्वत्यै

स्वाहा । महालक्ष्म्यै स्वाहा । काल्यै स्वाहा । कराल्यै स्वाहा । आरोग्यतोरणाय स्वाहा । अथर्ववेदाय स्वाहा । कलियुगाय स्वाहा । विष्णवे स्वाहा । सवित्रे स्वाहा । सावित्रे स्वाहा । देव्यै स्वाहा । चण्डाय स्वाहा । चण्डिकाय स्वाहा । कुबेराय स्वाहा । ईशानाय स्वाहा । क्षेत्रपालाय स्वाहा । गणपतये स्वाहा । सरस्वत्यै स्वाहा । महालक्ष्म्यै स्वाहा । भीमाय स्वाहा । एकपादाय स्वाहा । सशक्तिकाय स्वाहा । कामदेवाय स्वाहा । वसन्ताय स्वाहा । सरस्वत्यै स्वाहा । ब्रह्मणे स्वाहा ।

गौर्यै स्वाहा । शिवाय स्वाहा । निवृत्तिकलायै स्वाहा । प्रतिष्ठाकलायै स्वाहा । विद्याकलायै स्वाहा । शान्तिकलायै स्वाहा । इन्द्राय स्वाहा । ईशानाय स्वाहा । सोमाय स्वाहा । ब्रह्मणे स्वाहा । अनन्ताय स्वाहा । वज्राय स्वाहा । शक्तये स्वाहा । दण्डाय स्वाहा । खड्गाय स्वाहा । पाशाय स्वाहा । अङ्कुशाय स्वाहा । गदायै स्वाहा । शूलाय स्वाहा । पद्माय स्वाहा । चक्राय स्वाहा । अघोरास्त्राय स्वाहा ।

कुमुदाय स्वाहा । कुमुदाक्षाय स्वाहा । पुण्डरीकाक्षाय स्वाहा । वामनाय स्वाहा । शङ्कुकर्णाय स्वाहा । सर्वनेत्राय स्वाहा । सुमुखाय स्वाहा । सुप्रतिष्ठाय स्वाहा । अचलाय स्वाहा । अश्वोदराय स्वाहा ।

पृथिवीतत्त्वाय स्वाहा । आकाशतत्त्वाय स्वाहा । चन्द्रमसे स्वाहा । वासुकये स्वाहा । स्कन्दाय स्वाहा । गजाननाय स्वाहा । वीरभद्राय स्वाहा । गङ्गायै स्वाहा । लक्ष्म्यै स्वाहा । सरस्वत्यै स्वाहा । गौर्यै स्वाहा । दुर्गायै स्वाहा । उर्वश्यै

स्वाहा । मेनकायै स्वाहा । रम्भायै स्वाहा । तिलोत्तमायै स्वाहा । सुमुखायै स्वाहा । सुन्दर्यै स्वाहा । कामुक्यै स्वाहा । कामवर्धिन्यै स्वाहा । इति जुहुयात् । वेद्याः दक्षिणभागे स्वासने समुपाविश्य, देवीं षोडशोपचारैः संपूज्य, कुण्डवेदिकाशालां च तत्तद्बहिः, बलिं निधाय, देवीं प्रणम्य, होमसंख्यया ब्राह्मणान् भोजयित्वा, यावद्दिनान्तं, अद्वैतपाठकैः वेदघोषपुरस्सरं आचार्यः सन्तुष्टःसन्, तत्तत्कालानुज्ञया एवं विधिवदर्चयेत् । इति नित्ययजनविधिः ।

## २५. अष्टबन्धनविधिः

नित्ययजनं विधाय अष्टबन्धनं कुर्यात् । यथा - शङ्खचूर्णभागमेकं, गुग्गुलु, अयःकिट्टचूर्णं, सिकताचूर्णं, महिषनवनीतं एवं समभागः । लाक्षा कार्पासः, लिङ्गं च एवं अर्धभागः । एतानेकीकृत्य चूर्णोत्सवविधानेन परिष्कृत्य, यथापक्रान्तसाधकैः सहामर्दयित्वा, तेन द्रव्येण देवीं किञ्चिदीशान्यवक्त्रेण बध्वा, पश्चात्पीठाग्रे इच्छाशक्त्यात्मने शिवाय नम इति संपूज्य, मायालक्ष्म्याः पञ्चाक्षरेणाभि-मृश्य,गन्धाद्युपचारान् विधाय, पीठे ओं श्रीं आधारशक्तये नमः। इति संपूज्य, मायालक्ष्म्या नारायणाष्टाक्षरेण चाभिमृज्य, गन्धाद्युपचारान् विधाय, अर्चयेत् । व्यूं क्रियाशक्तये नमः । इति संपूज्य, मायालक्ष्म्या प्रणवेनाभिमन्त्र्य, गन्धाद्युपचारान्विधाय, वरुणघटं संस्थाप्य तेनोदकेनाभिषिच्य, धूपदीपनैवेद्य ताम्बूलनीराजनान्तान् उपचारान् दत्वा, ओं ह्रां शिवाय स्वाहा (१०८) । ओं ह्रीं विष्णवे स्वाहा (१०८) ओं ओं ब्रह्मणे स्वाहा (१०८) इति आहुतित्रयं हुत्वा, देवीं प्रणमेत् । जङ्गमे बन्धनं

विनाऽन्यकार्याणि कर्तव्यानीति शिवशासनात्। (स्पष्टं) इति अष्टबन्धनविधिः ।

## २६. तत्त्वतत्त्वेश्वरी होमविधिः

बिम्बाग्रे स्थण्डिलोपरि कुम्भमेकं विन्यस्य, इमं मे वरुण इति वरुणं आवाह्य, नमोऽन्तैः कक्षान्तं संपूज्य, मूलेन सप्तधाऽभिमृश्य, गन्धाद्युपचारान् विधाय, वरुणमुद्रास्य, तेनोदकेन बिम्बस्य मूर्धादिकण्ठ पर्यन्तं कूर्चेनाभ्युक्ष्य, ओं ह्रीं श्रीं सौः शिवतत्त्वाधिपतये नमः इति संपूज्य, ओं ह्रीं श्रीं सौः शिवतत्त्वाधिपतये रुद्राय । इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इत्यष्टोत्तरशतं अभिमन्त्र्य, गन्धाद्युपचारान्विधाय, होमकुण्डं गत्वा, ओं ह्रीं श्रीं सौः शिवतत्त्वाधिपतये रुद्राय नमः इति वह्निं संपूज्य, ओं ह्रीं श्रीं सौः शिवतत्त्वधिपतये रुद्राय स्वाहेति अष्टोत्तरशतं हुत्वा, वह्निं प्रणम्य, पुनर्बिम्बमागत्य, कण्ठादि जानुपर्यन्तं, कूर्चेनाभ्युक्षणं कुर्यात्।

ओं श्रीं ह्रीं श्रीं क्लीं विद्यातत्त्वाधिपतये विष्णवे नमः इति संपूज्य, ओं ह्रीं श्रीं क्लीं विद्यातत्त्वाधिपतये विष्णवे । इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इत्यष्टोत्तरशतं अभिन्त्र्य, गन्धाद्युपचारान्विधाय, होमकुण्डमागत्य ओं ह्रीं श्रीं क्लीं विद्यातत्त्वाधिपतये विष्णवे नम इति संपूज्य, आं ह्रीं श्रीं क्लीं विद्यातत्त्वाधिपतये स्वाहा इत्यष्टोत्तरशतं हुत्वा, वह्निं प्रणम्य बिम्बमागत्य, जान्वादि पादपर्यन्तं कूर्चेनाभ्युक्षणं कुर्यात् ।

ओं ह्रीं श्रीं ऐं आत्मतत्त्वाधिपतये ब्रह्मणे नमः इति संपूज्य, ओं ह्रीं श्रीं ऐं आत्मतत्त्वाधिपतये ब्रह्मणे, इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इति अष्टोत्तरशतमभिमन्त्र्य, गन्धाद्युपचारान्

विधाय, होमकुण्डमागत्य, ओं ह्रीं श्रीं ऐं आत्मतत्त्वाधिपतये ब्रह्मणे नमः इति वह्निं संपूज्य ओं ह्रीं श्रीं ऐं आत्म तत्त्वाधिपतये ब्रह्मणे स्वाहा इत्यष्टोत्तरशतं हुत्वा वह्निं प्रणम्य बिम्बमागत्य, मूर्ध्नि कूर्चेनाभ्युक्षणं कुर्यात् ।

ओं ह्रीं श्रीं सदाशिवतत्त्वाधिपतये ब्रह्मणे नमः इति संपूज्य, ओं ह्रीं सदाशिव तत्त्वाधिपतये ब्रह्मणे । इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इत्यष्टोत्तरशतमभिमन्त्र्य गन्धाद्युपचारान् विधाय, होमकुण्डं गत्वा, ओं ह्रीं श्रीं सदाशिवतत्त्वाधिपतये ब्रह्मणे नमः इति वह्निं संपूज्य, ओं ह्रीं श्रीं सदाशिवतत्त्वाधिपतये ब्रह्मणे स्वाहेत्यष्टोत्तरशतं हुत्वा वह्निं प्रणम्य बिम्बमागत्य, ओं ह्रीं श्रीं सदाशिवतत्त्वाधिपतये ब्रह्मणे नमः इति प्रोक्षणं कुर्यात् ।

ओं ह्रीं श्रीं ईश्वरतत्त्वाधिपतये अनन्ताय नमः इति बीजस्थानं संपूज्य, ओं ह्रीं श्रीं ईश्वरतत्त्वाधिपतये अनन्ताय, इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इत्यष्टोत्तरशतमभिमन्त्र्य, गन्धाद्युपचारान्विधाय, कुण्डमागत्य, ओं ह्रीं श्रीं ईश्वरतत्त्वाधिपतये अनन्ताय नमः इति वह्निं संपूज्य, ओं ह्रीं श्रीं ईश्वर तत्त्वाधिपतये अनन्ताय स्वाहा इत्यष्टोत्तरशतं हुत्वा वह्निं प्रणम्य बिम्बमागत्य ओं ह्रीं ईश्वरतत्त्वाधिपतये अनन्ताय नमः इति मनःस्थाने कूर्चेन अभ्युक्षणं कुर्यात् ।

एवमेव इतरेष्वपि तत्त्वेषु । ओं ह्रीं श्रीं आदौ, नमोऽन्तेन पूजा, इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इति प्रार्थना, कुण्डे नमोऽन्तेन पूजा, स्वाहान्तेन १०८ वारं होमः प्रणामः पुनः बिम्बमागत्य नमोऽन्तेन बिम्बे अभ्युक्षणं च । मन्त्रेषु विशेषस्तु-

विद्यातत्त्वाधिपतये शम्बराय ।
मायातत्त्वाधिपतये गगनेशाय ।
कलातत्त्वाधिपतये प्राज्ञाय ।
नियतितत्त्वाधिपतये नियमाय ।
कालतत्त्वाधिपतये कर्मणे ।
राग तत्त्वाधिपतये अनङ्गाय ।
पुरुषतत्त्वाधिपतये सूक्ष्मदेहाय ।
प्रकृतितत्त्वाधिपतये प्रधानाय ।
गुणतत्त्वाधिपतये विदेहाय ।
बुद्धितत्त्वाधिपतये बौद्धाय ।
अहङ्कारतत्त्वाधिपाय अहङ्कृतये ।
मनस्तत्त्वाधिपतये संकल्पाय ।
त्वक्तत्वाधिपतये अमृताय ।
चक्षुस्तत्त्वाधिपतये ज्योतिषे (नेत्रयोः) ।
श्रोत्र तत्त्वाधिपतये आकाशाय (श्रोत्रयोः) ।
जिह्वातत्त्वाधिपतये वक्त्राय (जिह्वायां) ।
घ्राणतत्त्वाधिपतये बकाय (नासायां) ।
वाक्तत्वाधिपतये द्रुहिणाय (मुखे) ।
पाणितत्त्वाधिपतये सर्वादानाय (आजानु) ।
पादतत्त्वाधिपतये चङ्क्रमणयोः (पादयोः ।)
पायुतत्त्वाधिपतये तूर्णाकृते (गुह्ये) ।
उपस्थतत्त्वाधिपतये घनानन्दाय (गुह्ये) ।
शब्दतत्त्वाधिपतये सुदेहाय (मूर्धादिभ्रूपर्यन्तं) ।
स्पर्शतत्त्वाधिपतये बलवर्ताय (भ्रुवादि कर्णपर्यन्तं) ।

रूपतत्त्वाधिपतये भानुमते । (कर्णादिकटिपर्यन्तं)
रसतत्त्वाधिपतये जलदाय (कट्यादि जानुपर्यन्तं)
गन्धतत्त्वाधिपतये गन्धरूपाय (जान्वादि पादपर्यन्तं)
व्योमतत्त्वाधिपतये सूक्ष्माङ्गाय (मूर्धादिभ्रूपर्यन्तम्)
वायुतत्त्वाधिपतये मातरिश्वने (भ्रुवादिकर्णपर्यन्तम्)
तेजस्तत्त्वाधिपतये तेजोनिधये (कर्णादिकटिपर्यन्तम्)
जलतत्त्वाधिपतये वरुणाय (कट्यादिजानुपर्यन्तम्)
पृथिवीतत्त्वाधिपतये पृथिवीशाय (जान्वादिपादपर्यन्तं)
सर्वतत्त्वप्राणशक्तये (वरुणोदकं स्पृशन्)

असुनीते इति मन्त्रेण बिम्बमभिषिच्य अन्ते मूलेन बिम्बं सप्तधा अभिमृश्य गन्धाद्युपचारान् कृत्वा प्रणमेत् । इति तत्त्वेश्वरी होमविधिः ।

## २७. मूर्तिमूर्तिमतीश्वरी होमविधिः

बिम्बाग्रे स्थण्डिलोपरि कुम्भमेकं विन्यस्य, इमं मे वरुणेति वरुणमावाह्य, अकारादिषोडशस्वरान् नमोऽन्तान् जप्त्वा, गन्धाद्युपचारान् विधाय, वरुणमुद्रास्य, तेन उदकेन कूर्चेन मूर्धादिकण्ठपर्यन्तं अभ्युक्ष्य ओं ह्रीं श्रीं सौः शिवमूर्तियुक्तायै इच्छाशक्तये नमः इति संपूज्य ओं ह्रीं श्रीं सौः शिवमूर्ति युक्तायै इच्छाशक्तये इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इति अष्टोत्तरशतं अभिमन्त्र्य गन्धाद्युपचारान्विधाय, कुण्डं गत्वा, ओं ह्रीं श्रीं सौः शिवमूर्तियुक्तायै इच्छाशक्तये नम इति वह्निं संपूज्य, ओं ह्रीं श्रीं सौः शिवमूर्तियुक्तायै इच्छा शक्तये स्वाहा इति अष्टोत्तरशतं हुत्वा, वह्निं प्रणम्य बिम्बमागत्य मूर्धादिकण्ठपर्यन्तं अभ्युक्षणं कुर्यात् ।

तत्त्वेश्वरीहोमवत् अत्रापि-
ओं ह्रीं श्रीं विष्णुमूर्तियुक्तायै ज्ञानशक्तये (कण्ठादिजानु पर्यन्तं)
ओं ह्रीं श्रीं ऐं ब्रह्ममूर्तियुक्तायै क्रियाशक्तये (जान्वादिपादर्यन्तं)
ओं ह्रीं श्रीं होतृमूर्तये मेधाशक्तये (मूर्ध्नि)।
सोममूर्तये ओषधिशक्तियुक्ताय (भ्रूमध्ये)।
सूर्यमूर्तये छायाशक्तये (कर्णे)
आकाशमूर्तये त्विषाशक्तये (हृदये)
वायुमूर्तये धातृशक्तये (नाभौ)
तेजोमूर्तये जेत्स्नाशक्तये (गुह्ये)
जलमूर्तये चेतनाशक्तये (पादयोः)
क्ष्मामूर्तये धारिकाशक्तये (मूलाधारे)
सर्वमूर्तिप्राणशक्तये (वरुणकुम्भं स्पृशन्)

इति मूर्तिमूर्तीश्वरी होमः।

## २८. न्यासजालविधिः

श्रीकण्ठन्यासं कुर्यात्। यथा - बिम्बाग्रतः कुम्भमेकं विन्यस्य, इमं मे वरुण इति वरुणमावाह्य ब्राह्मणैः सह पूर्वोक्त शान्ति ऋचः जपित्वा, वरुणमुद्रास्य, बिम्बस्य मूर्ध्नि, ईशानाय नमः। मुखे, विद्यायै नमः। हृदये, अमृताय नमः। (स्मृतये नमः)। गले, शुद्धाय नमः। दक्ष बाहौ, जरायै नमः। वामबाहौ, मेधायै नमः। कुक्षौ, स्वधायै नमः। नाभौ, स्वस्त्यै नमः। कट्यां, पालिन्यै नमः। गुह्ये, दक्षायै नमः। दक्षोरुमूले, ज्वालायै नमः। वामोरु मूले, तीक्ष्णायै नमः। दक्षजानुनि भ्रान्त्यै नमः। वामजानुनि, रमायै नमः। पृष्ठे, रत्यै नमः। दक्षपार्श्वे, प्रजायै नमः। वामपार्श्वे शान्त्यै नमः। दक्षजङ्घायां

न्त्यै नमः । वामजङ्घायां, क्रियायै नमः । दक्षपादे, क्षान्त्यै नमः । वामपादे, शान्त्यै नमः । दक्षहस्ते, दान्त्यै नमः । वामहस्ते, दयायै नमः । दक्षस्तने, सूत्यै नमः । वामस्तने, सवित्रे । नासिकायां, पवित्रे नमः । शिरसि, शुद्धायै नमः । इति विन्यस्य, देवीसूक्तपारायणैः सह वरुण कुम्भांभसा अभिषिञ्चेत् । इति श्रीकण्ठन्यास विधिः ।

### २९. पञ्चविंशतिस्नपनकलशविधिः

देव्यग्रतः भार संख्यातण्डुलैः स्थण्डिलं कृत्वा, पञ्चविंशति कोष्ठान् विलिख्य, तस्मिन् मध्यादिक्रमेण क्षीर - दधि - हेम - सर्पिः - कुश - गोमय - काषाय - गोमूत्र गन्धवारि - मधु कुशोदकत्रयं, गुलोदकं कुशोदकत्रयं, केलोदकं कुशोदकत्रयं, फलोदकं कुशोदकत्रयम्, (अन्तर्घटनवकं मधु - गुल - केर - फल - कुशोदकत्रययुतानि बहिः षोडश) विन्यस्य, मध्यादिक्रमेण, ओं ह्रीं श्रीं शिवतत्त्वाय नमः । ओं ह्रीं सदाशिवतत्त्वाय नमः । ओं ह्रीं विद्यातत्त्वाय नमः । ओं ह्रीं पुरुषतत्त्वाय नमः । ओं ह्रीं कालतत्त्वाय नमः । ओं ह्रीं ईश्वरतत्त्वाय नमः । ओं ह्रीं मायातत्त्वाय नमः । ओं ह्रीं नियतितत्त्वाय नमः । ओं ह्रीं प्रकृतितत्त्वाय नमः । अन्यान् यदतो वात ते षोडशाक्षर्या पूजयेत् । पश्चात् शान्ति सूक्तं पठित्वा गन्धाद्युपचारान् विधाय, देवीसूक्तं परं जपन्, अभिषिञ्चेत् । इति पञ्चविंशति कलश स्नपनविधिः ।

### ३०. प्रासादप्रतिष्ठाविधिः

स्नपनं विधाय, प्रतिष्ठाक्रमेण प्रासादप्रतिष्ठां कुर्यात् । भारसंख्यया स्थण्डिलं कृत्वा, द्वादश कुम्भान् विन्यस्य मध्ये, मूलेन देवीं

संपूज्य, अन्तस्त्रिकोणे, कामेश्वर्यै नमः । वज्रेश्वर्यै नमः । भगमालिन्यै नमः । बहिरष्टकोणे वशिन्यै नमः । कामिन्यै (कामेश्वर्यै) नमः । मोहि(दि)न्यै नमः । विमलायै नमः । अरुणायै नमः । जयिन्यै नमः । सर्वेश्वर्यै नमः । कौलिन्यै नमः इति संपूज्य, गन्धाद्युपचारान् विधाय, मूलेन अष्टोत्तरशतं हुत्वा, अङ्गदेवतानां पृथक्त्वेन अष्टाविंशति संख्यया आहुतीर्हुत्वा, मूलेन पूर्णाहुतिं विधाय, कुम्भमृद्धृत्य प्रासादोपरि शिखरं प्रति आरक्त पट्टध्वजं बध्वा कुम्भमभिषिञ्चेत् । इति प्रासादप्रतिष्ठाविधिः ।

## ३१. पूर्णाहुतिविधिः

नित्ययजनक्रमेण, तत्तद्देवतार्चनपूर्वकं उद्वास्य, मूलेन पूर्णाहुतिं हुत्वा, अत्र यावद्दिनान्तरेषु यद्यद्वस्तु उपकरणादीनि देवताधिया पूर्णाहुत्यां विधाय । सर्वप्रायश्चित्तार्थं अष्टोत्तरशत-संख्यया पुनर्हुत्वा, वह्निरूपां भगवतीं ध्यायन्, शिवशक्ति-हस्ताभ्यां वह्निरूपां भगवतीं वर्धनीमावाहयेत् । इति पूर्णाहुति विधिः ।

## ३२. कुम्भाभिषेकः

पूर्णाहुतिं विधाय, कुम्भानभिषिञ्चेत् । यथा - साधकैः सह कुम्भमुद्धृत्य, नृत्तगीत वाद्यमङ्गल घोषान्वितं तत्तद्दिक्षु विदिक्षु द्वयोरपि तत्तदर्घ्यादिकं दत्वा, नीराजनपूर्वकं देव्या अग्रे प्रविश्य, देवीसूक्तं जपन् कुम्भानभिषिच्य, उद्वर्तनालङ्कारान् विधाय, हरिषद्ध्रुवासीदिति मन्त्रेण, उपस्थानं विधाय, ततो महानैवेद्यं दशभारमारभ्य सहस्रभारावधि समाचरेत् । पश्चात् ताम्बूलादीन् दत्वा, दण्डवत्प्रणम्य, मन्त्रतन्त्रवैकल्य शान्त्यर्थे अष्टोत्तर सहस्रं हुनेत्, अष्टोत्तरं शतं वा । फलापूपकदलीपनस-

नारिकेलसारसाधनोपेतं परमान्नं निवेद्य, नीराजनविधिं विधाय, कर्पूरवीटिकां निवेद्य, उपचारान् सर्वान् विधाय एतद्दृष्टादृष्टाकृताकृतकर्मणि यावदपराधाय, देवीं प्रणम्य

सान्निध्यं कुरु देवेशि सर्वलक्षण रूपिणि ।
अनेककोटिब्रह्माण्ड पालिन्यै ते नमो नमः ॥

यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ।
तावत्त्वं कृपया देवि सन्निधेहीह मन्दिरे ॥

इति प्रार्थयन्, ब्राह्मणान् बहून्भोजयेत् । तत्र नृपः गुरवे दक्षिणां दद्यात् हिरण्यं शतनिष्कं, ऋत्विजां तदर्धं, मूर्तिपानां पादं, सदस्यानां पादार्धं इति । प्रतिष्ठान्ते लोकाश्चर्यकरं यथाविभवं पुष्परथोपरि महोत्सवं कुर्यात् । ग्रामप्रदक्षिणं कृत्वा, आलयमासाद्य द्वारि नीराजनं दासीभिः कारयित्वा, आस्थानं नीत्वा यथानित्यं पूजयेत् । इत्याह परमेश्वरः ।

इति अनन्तनारायणीये प्रतिष्ठाविधिर्नाम चतुर्थः पटलः ।

हरिः ओं श्रीललितात्रिपुरसुन्दर्यर्पणमस्तु ॥

—*—

# श्री सौभाग्यचिन्तामणिपरिशिष्टम्

## १. श्रीदेवीभेरीताडनविधिः

### (त्रिपुरार्णवे आगमसिद्धान्त तन्त्रतः)

भेरीताडनमादौ स्यात् देवताह्वानकर्मणि ।
देवताऽऽगमनार्थे च सुप्रसन्नार्थमम्बिके ॥ १

विघ्नेश्वरादि देवेभ्यो ब्रह्मादिभ्यस्तथैव च ।
पश्चाङ्गं श्रावयेद्धीमान् चतुरङ्गमथापि ॥ २

त्रियंगं वापि कुर्वीत विघ्नेशानान्यथा क्रमम् ।
तालं रागं तथा गीतं वाद्यं नृत्तमतः परम् ॥ ३

क्रमेण कथ्यते देवि गणेशादि यथाक्रमम् ।
तालं रागं तथा वाद्यं नृत्तं च चतुरङ्गकम् ॥ ४

त्रियंगं वापि देवेशि तालं नृत्तं च गीतकम् ।
तत्रादौ गणराजस्य पञ्चाङ्गं शृणु पार्वति ॥ ५

गणतालं नाटरागं गीतं धैवतमेव च ।
तद्वाद्यं डिण्डिमं प्रोक्तं नाट्यं कुञ्चितमेव च ॥ ६

एवं पञ्चाङ्गमित्युक्तं गणेशप्रीतिकारकम् ।
ब्रह्मप्रीतिकरं देवि तालगीतादिकं शृणु ॥ ७

ब्रह्मतालं मेघरागं निषादस्वरगीतकम् ।
वाद्यं च चत्पुटं प्रोक्तं नृत्तं पङ्कजवर्तनम् ॥ ८

इदं ब्रह्मप्रियकरं विष्णुदेवस्य मत् शृणु ।
विष्णुतालं च ऋषभस्वरगीतमतः परम् ॥ ९

तस्य रागं बिलहरी वाद्यं मलहरी तथा ।
नर्तनं स्वास्तिकं देवि विष्णुप्रीतिकरं भवेत् ॥ १०

रुद्रदेवस्य पञ्चाङ्ग विधानं शृणु सुन्दरि ।
रुद्रतालं च गान्धार स्वरगीतमतः परम् ॥ ११

रागं शङ्करभूषाख्यं वाद्यमुद्धट्टितं तथा ।
नटनं ताण्डवं चैव रुद्रप्रीतिकरं भवेत् ॥ १२

इन्द्रदेवप्रीतिकरं समतालं प्रकीर्तितम् ।
गीतं षड्जसमायुक्तं गुज्जरीरागगानकम् ॥ १३

वाद्यं चाचत्पुटं नृत्तं भुजङ्गं ललितं शिवे ।
अग्रेः प्रीतिकरं सिंहलीलातालमथाम्बिके ॥ १४

गीतं ऋषभमित्युक्तं रागं कोल्ली समुच्यते ।
वाद्यं बद्धावणं प्रोक्तं जानुनृत्तं तथाम्बिके ॥ १५

यमदेवप्रियकरं तालं भृङ्गिणि शङ्करि ।
गीतं गानं च गान्धारं रागं कौशिकी कीर्तितम् ॥ १६

वाद्यं मट्टयमित्युक्तं नटनं दण्डपादकम् ।
राक्षसेशप्रियकरं मल्लतालकमुच्यते ॥ १७

मध्यमस्वरगीताख्यं नट्टभाषेति रागकम् ।
प्रतिमट्टयवाद्यं च नर्तनं चक्रमण्डलम् ॥ १८

तीर्थराजप्रियकरं तालं माङ्गल्युच्यते ।
पञ्चमस्वरगीतं च श्रीरागं गानमुच्यते ॥ १९

लज्जवाद्यस्वरं प्रोक्तं नटनं कान्तरालकम् ।
वायोः प्रीतिर्बलिस्तालं गीतं धैवतमेव च ॥ २०

रागं तक्केशि गानं च वाद्यं लम्बुस्वरं तथा ।
भुजङ्गभैरवं नृत्तं वायुदेवप्रियावहम् ॥ २१

कुबेरे कोट्टरीतालं निषादस्वरगीतकम् ।
तर्करागस्य गानं च वाद्यं स्याद्दर्पणं तथा ॥ २२

पृष्ठकुट्टिमनाट्यं च सोमदेवप्रियावहम् ।
ईशदेवप्रीतिकरं ढक्करीतालमुच्यते ॥ २३

गीतं पञ्चममाख्यातं मत्तालीरागगानकम् ।
भ्रमरीनृत्तसंयुक्तं सिंहनन्दनवाद्यकम् ॥ २४

ब्रह्मादीशानपर्यन्तं श्रुतं तालादिकं प्रिये ।

इति श्री त्रिपुरार्णववचनेन, श्री महाशक्तिमहोत्सवस्य भेरीताडनादिकर्मकालेषु तत्तत्ताल गीत - राग - वाद्य - नर्तनैरेव ब्रह्मादि देवताः सन्तोषयेदिति शिवशासनम् । तस्माद् देशिकेन्द्रो महोत्सवकालेषु तथैव कारयेत् ।

—*—

## श्रीमहाशक्तिमहोत्सवे भेरीताडनकर्मविधानम्

श्री पराशक्तिमहोत्सवस्य ध्वजारोहणात् पुरतः तस्योत्सवस्य तीर्थकर्मतः पुरतः, अङ्कुरोत्सव - यागोत्सव - महानवम्युत्सव - वसन्तोत्सवादि द्वादशमासनिर्वर्त्य तत्तन्मासीयविहित कर्मोत्सवेषु सर्वेषु तन्त्रज्ञो देशिकेन्द्रो भेरीताडनकर्म समाचरेत् । अथाचार्यः, श्री महाशक्तिनवदिनध्वजारोहणदिवसस्य पुरतः कालेऽथ, मध्याह्नापराह्नसायाह्नपूर्वरात्रादौ, तत्कालस्य पूजाहोमोत्सव बलिदानानन्तरं तस्य दिनस्य पूर्वरात्र्यधिवासितं जीवप्रतिष्ठितं श्रीमहाशक्तिध्वजपटस्य वाहनराजं अस्त्रदेवीं तां यागेश्वर्यादिभिः सह श्रीमदुत्सवेश्वरीं, आस्थानमण्डपे, ध्वजदण्डाग्रस्थमण्टपे वा, वितानादि सर्वालङ्कारालङ्कृतस्थाने, भद्रपीठोपरि पूर्वास्यां सौम्यास्यां वा ध्वजपटास्त्रयागेश्वर्यादिभिः सह उत्सवेश्वरीं तां समारोप्य, ताभिः सर्वाभिः वस्त्ररत्नमकुट-कुण्डलहारकेयूर कटकाद्याभरणादिना समलङ्कृत्य सुगन्धिधूपकर्पूर-दीपादिभिः सुरभीकृत्य प्रज्वाल्य, श्रीदेव्यग्रतः गोमयेनावलिप्त-रङ्गवल्ल्यादिभिः समलङ्कृत शुचिस्थलोपरि साढकचतुष्टयधान्येन तदर्धतण्डुलेन, तदर्धार्धतिलेन च द्विहस्तमात्रे चतुरश्रस्थण्डिलं तदुपरि कर्णिकोपेतं साष्टदलं पद्मं,

तत्परितः चतुरश्रत्रयं, तयोरन्तरालेषु पूर्वादीशानान्तं सबिन्दुभिः वृत्ताष्टकं समालिखेत्।

तस्य पद्ममध्ये तु चूतपल्लवान्विततताडनीसहितां सर्वलक्षणोपेतां भेरीं, तत्परितः तालवीणावेणु वाद्यायुधानि च, ततो बहिः परितःस्थवृत्ताष्टकेषु, स्वाङ्गुष्ठदीर्घायतं कुशपवित्राष्टकं, भेर्या उपरि दक्षमध्यवामक्रमेण श्रीदेव्यग्रतः पवित्रत्रयं च निक्षिप्य, तत्पुरतः प्रस्थचतुष्टयधान्येन तदर्ध तण्डुलेन तदर्धार्धतिलेन, चतुरश्रस्थण्डिलं तदुपरि अष्टदलकमलं तत्परितो वृत्तचतुरश्रं च संलिख्य, जलफलचूतपल्लव कुशकूर्चरत्न वस्त्र गन्धपुष्पादिभिः समलंकृतं कुम्भमेकं प्रतिष्ठापयेत् ।

तत्र पूजोपकरणपूजाद्रव्यादिभिः सह, बहुभिर्ब्राह्मणैः सह, देशिकः स्वसूत्रोक्तविधानतः पुण्याहवाचनं, सामान्यार्घ्यं च विधाय, तेनोदकेन स्थानबिम्बपूजाद्रव्यपूजोपकरणेषु स्वात्मनि च अस्त्रेण त्रिः संप्रोक्ष्य, उत्तराभिमुखः चित्रकम्बलादि स्वासने दर्भेष्वासीनो दर्भान्धारयमाणः कुशपवित्रपाणिः श्रीमूलविद्यया नियतः प्राणानायम्य, ऋष्यादिकरषडङ्गध्यानमानसपूजान्ते, ओं अद्येत्यादि श्रीमत्परदेवतायाः ध्वजारोहणादितीर्थान्तं नवदिनविहितकल्याणमहोत्सवाङ्गं अस्य उत्सवस्य शुश्रूषादिभिः सेवकादिकार्येषु ब्रह्मादिसमस्तदेवगणाह्वानार्थं समस्तजनसहित-राजराष्ट्राभिवृद्ध्यर्थं समस्तदुरितोपशान्त्यर्थं समस्त मङ्गलावाप्त्यर्थं भेरीताडनकर्म करिष्ये । तत्रादौ गणपतिपूजां करिष्ये इति संकल्पं कुर्यात् ।

पुण्याहस्थण्डिलस्य आग्नेयदिग्भागे कूर्चादिकं निक्षिप्य अस्त्रेण त्रिः प्रोक्ष्य,तत्र विघ्नेश्वरं पूजयेत् । कराभ्यां पुष्पाञ्जलिमादाय

तस्यासनमूर्तिपूजापुरःसरं ओं गणानां त्वेति सशक्तिकं गणपतिमावाह्य, आवाहनादिमुद्राः प्रदर्श्य ओं गणपतये नम इति पाद्यादिकं दत्वा, वस्त्रगन्धपुष्पाक्षतधूपदीप नैवेद्यादिभिः आराध्य, भेर्यादिकं पूजयेत् ।

अथ ताडन्या सह भेरीं अस्त्रेण संप्रोक्ष्य, भेर्यासनभूतस्थण्डिले ओं ह्रीं भेर्यासनायनमःइति, भेर्यां ओं ह्रीं भेरीमूर्तये नमः, ओं ह्रीं भेर्यधिदेवतारूपिण्यै श्री महात्रिपुरसुन्दर्यै नम इति भेर्यधिदेवतामभ्यर्च्य, अर्घ्यं दत्वा, तस्योपरि स्थितं मध्यपवित्रकं अस्त्रेण संप्रोक्ष्य, ओं कं ब्रह्मासनायनमः। ओं कं ब्रह्ममूर्तये नमः । इत्यासनमूर्तिमभ्यर्च्य, कराभ्यां पुष्पाञ्जलिमादाय, ब्रह्मजज्ञानं - असतश्च विवः इति सशक्तिकं ब्रह्माणमावाह्य आवाहनादि-मुद्राः प्रदर्श्य, पाद्याद्युपचारान् कुर्यात् ।

अथ दक्षिणभागस्थकूर्चं अस्त्रेण प्रोक्ष्य ओं रुं रुद्रासनाय नमः । ओं रुं रुद्रमूर्तये नमः इत्यभ्यर्च्य, पुष्पाञ्जलिना ओं यो रुद्रो अग्नौ + नमो अस्तु । इति सशक्तिकं रुद्रमावाह्य, आवाहनादिमुद्राः प्रदर्श्य पाद्यादिभिरुपचरेत् । अथ वामभागस्थ कूर्चमस्त्रेण प्रोक्ष्य, ओं विष्ण्वासनाय नमः । ओं विष्णुमूर्तये नमः इत्यभ्यर्च्य पुष्पाञ्जलिना - ओं इदं विष्णु + पांसुरे । सशक्तिकं विष्णुमावाहयामि इति आवाह्य आवाहनादि मुद्राः प्रदर्श्य पाद्यादिना उपचरेत् ।

तस्य वामपार्श्वे ओं सां सरस्वत्यै नमः, ओं गौं गौर्यै नमः, ओं लां लक्ष्म्यै नमः, इति, कीलेषु ओं ह्रीं सप्तमातृगणेभ्यो नमः । दक्षिणमुखचर्मवृत्ते ओं सूर्याय नमः । वाममुखचर्मवृत्ते ओं सं सोमाय नमः । बन्धनरज्जुषु ओं ह्रीं अनन्ताय नमः ।

रज्ज्वन्तरालेषु ओं ह्रीं गन्धर्वगणेभ्यो नमः । भेर्युदरान्तरालेषु ओं ह्रीं पञ्चमहाभूतगणेभ्यो नमः । ताडन्यां ओं क्रों अङ्कुशमहास्त्रदुर्गादेव्यै नमः । परितः तालमद्दलवेणु वीणादिवाद्येषु ओं ह्रीं वाग्वादिन्यै नमः । इति अभ्यर्च्य अर्घ्यं दत्वा गन्धादिभिरुपचरेत् ।

ततो बहिः पूर्ववृत्तस्थलकूर्चमन्त्रेण प्रोक्ष्य ओं लं इन्द्रासनाय नमः । ओं लं इन्द्रमूर्तये नमः । इति आवाह्य पुष्पाञ्जलिना - यत इन्द्र भयामहे+ जहि । सशक्तिकं इन्द्रमावाहयामि इति आवाह्य मुद्राः प्रदर्श्य, पाद्यादिना उपचरेत् । क्रमेण तत्रतत्रस्थकूर्चादिषु अग्न्यादीनप्येवमेवावाह्य उपचरेत् । अग्निं दूतं वृणीमहे इत्यग्निं, योस्य कोष्ठ्येति यमं, यत्ते देवीति निर्ऋतिं, इमं मे वरुणेति वरुणं, कामः प्रवृध्यतां इति वायुं, राजाधिराजायेति कुबेरं, तमीशानं इति ईशानं च आवाह्य मुद्राः प्रदर्श्य पाद्यादिना उपचरेत्। स्तोत्रादिना तोषयेत् ।

अथ देशिकः स्नानादिना शुचीन् नटभटगायकवादक-नर्तकादीनाहूय, तेषां प्रक्षालितेषु हस्तेषु पुष्पं दत्वा तत् पुष्पं स्वहस्ते स्वीकृत्य भेर्याद्युपरि समर्प्य तान् साष्टाङ्गं प्रणतान्विधाय, भस्मधारण-चन्दन विलेपन-शिरोवेष्टन-पुष्पमालाधारण - श्री देवीपादुकारोपणादीनि कारयित्वा, तत्तद्भेर्यादिकं तत्तद्धस्तेषु दत्वा, स्वयं स्वस्य दक्षिणहस्तेन ताडनीमादाय गणेशादिसमस्त देवताः स्तुवन्, महाभेरीं ताडयेत्।

—*—

## गणपतिस्तुतितालादि

करस्फुरितमोदकं कलितशैलजामोदकं
कटस्फुर मदोदकं कठिनविघ्नविच्छेदकम् ।
समस्तफलदायकं सकलदेवतानायकं
नमामि गणनायकं नवकवित्वसन्धायकम् ।। १

गजाननं भूतगणादिसेवितं कपित्थजम्बूफलसारभक्षितम् ।
उमासुतं शोकविनाशकारणं नमामि विघ्नेश्वर पादपङ्कजम् ।।२

अगजानन पद्मार्कं गजाननमहर्निशम् ।
अनेकदं तं भक्तानां एकदन्तं उपास्महे ।। २

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ।। ४

अभीप्सितार्थ सिद्ध्यर्थं पूजितो यः सुरैरपि ।
सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ।। ५

### गणेशतालम्

अवनत सुरगण विघटित चरणं
कटतट विघटित मदजल मुदितम् ।
विकसित कररुह करतल कमलं
प्रणमत शिवसुत गणपति मभयम् ।। १

शशिकलित सितकलित मौलिनं शूलिनं
विमलतर शुभकमल पादुकं पाणिकम् ।
पनसफल कदलिगत मोहनं मोहितं
पृथुलभुज सरसिरुहवि षाणकं शोणकम् ।। २

स्वकटतट गलितसित दानपानो न्मत्तमधुकरकुल
कोलाहलगीताकर्णन स्वकर्णतालो महागणपतिरविघ्नं करोतु।
लम्बोदर वरकुञ्जरानन वरकुङ्कुमवर्णनिभम्।
श्वेतशृङ्गं मोदकहस्तं पृथुतरपनसफलम्।
नयनत्रयं वरनागविभूषितं नानागण वृतम्।
नृत्यद्दन्तयुतं निष्कल रूपं निरुपममनन्तं
हृदि मधु मधु युगलम्॥ १

त्रिपुराध्वजपटभेरी दिव्यं दक्षिणरुद्रं वामगविष्णुं मध्यमब्रह्मतनुं
तत्तच्छक्तियुतम्। वासुकिपाशं श्रीमत्त्रिपुराध्वजपटदण्डं
दण्डमतिप्रिय ढक्काभेरी कढण्ढं ढमढमढे॥

भृङ्गिणि तालं भृङ्गिणितालं भेरिमुखासुषिरं
भेरिमुखध्वनि शङ्खमुखध्वनि काहलनादयुतम्।
काहलनिनदं काहलनिनदं कटिमल रुढिकतठे
क्रमतटविकटत्क्रमतट विकटत् क्रमतटविकटतठे।
ललितापुत्रं ललितापुत्रं वरदं शिवतनयं
वारणवदनं कनकसमाहं लम्बनमहदुदरम्।
नयनत्रयवर नागविभूषित कटमदजलगलितम्।
दिव्यमहाभुज दण्डचतुष्कं अङ्कुशपाशधरम्।
शिवकमलासन गुहमधुसूदन वन्दित चरणयुगम्
श्वेतच्छत्रकवीजित चामरबहु गणिकानिकरम्।
भेरीमद्दलपटहसुघोषणगणपतितालमिदम्।
गजमुखवक्त्रं गिरिजापुत्रं
गणकुलमित्रं गणपतिमीशप्रियम्।
करधृतपाशं कङ्कणपाणिं कबलितपद्मरुचिम्।
सुरवरवन्द्यं सुन्दरनृत्तं सुरचितमणिमकुटम्।

प्रणमत देवं प्रकटिततालं गजमुखतत्तत्तालमिदम् ।
अत्र विघ्नेश्वरस्य तालं गणतालम् । धैवतस्वर गीतम् ।
नाट्टरागगानम् । डुण्ढिमवाद्यम् । कुञ्चितनृत्तम् ।
श्रीमत्त्रिपुरसुन्दर्याः सेनापत्याः चण्डेश्वर्याः समादेशात् ।
तालमृदङ्ग वेणुवीणापणवकाहल भेरीढक्कारिमुख
झल्लरी शङ्ख पटह वाद्यैरहं इह संघोषणं करोमि ।

अथ भेरीलक्षणतालमुच्यते–

भेरीमध्ये पद्मजश्चोत्तरस्य
श्रीमान्विष्णुर्दक्षिणे तस्य शम्भुः ।
प्रान्ते भेर्याः श्रीमहागौरिदेव्यौ
मध्ये शब्दब्रह्मरूपा च वाणी ॥

मध्येकीलं मातरश्चाष्टनागाः
चर्मण्यर्च्याः चन्द्रसूर्यौ सवृत्तौ ।
गन्धर्वाः स्युश्चान्तरा गर्भगोले
भूतानि स्युस्ताडनीमन्त्रराजम् ॥

भेरीमध्ये दक्षिणे वामभागे
ब्रह्मा विष्णू रुद्र देवः स देव्यः ।
कीलाः सर्वे मातरश्चर्म नागाः
वृत्तौ मध्ये चन्द्रसूर्यादिदेवौ ।
गन्धर्वाः स्युश्चान्तरा चान्तरेषु
तस्याः कुक्षौ पञ्चभूताधिदेवाः ॥

तस्य तालम् ।

नटनविनोदित नटन विनोदित नटनविनोदित नाद
ब्रह्मस्वरूपनिरूपित निष्कलरूपस्वरूपविधिम् ।

स्मृतिमृतियुगलं गृहगणयन्त्रं उदरं भूतमयम् ।
दक्षिण चक्रं फणिपति वामं मध्यममाकाशम् ॥

श्रीमत्त्रिपुराध्वजपटभेरी मध्यतो ब्रह्मा
दक्षतो रुद्रो मध्यतो विष्णुस्तत्तच्छक्तियुतः ।
कीलाः सर्वे मातृगणाख्याः तस्यामन्तरमन्तरदेशे
गन्धर्वमयं गन्धर्वगणम् । दिनकरनिशिकर वदनं
वासुकिपाशं पटहं पटहं ताडय ताडय चञ्चत्पुटितं
चञ्चत्पुटितम् । आवाहितदेवैः तृप्तिकृततालोऽयं
तत्तदावाहितदेवैः तृप्तिकृततालोऽयम् ।

## ब्रह्मस्तुतितालादि

श्रीमत्पद्मोद्भवाय स्ववदन कमलोद्गारि सर्वागमाय
माध्वीपानातिमत्त भ्रमरमुनिगणाराधितायामलाय ।
वाग्देवी वल्लभाय प्रकटितपरमैश्वर्य संशोभिताय
प्रालेयाद्रि प्रभोद्यच्छशिधवलविहङ्गध्वजाय प्रणामः

ब्रह्मा हेमनिभश्चतुर्मुखलसन्नेत्राष्टकालङ्कृतः
पाणिप्रस्फुरिताक्षसूत्रकरकः पिङ्गैर्जटामण्डलैः ।
देवैरुज्ज्वलसिद्ध चारणगणैर्हंसाधिरूढोऽम्बिका-
तीर्थान्तोत्सवसेवनार्थमधुना ब्रह्मा समागच्छतु ॥

समस्तकल्याणगुणाय बिभ्रते
करेऽक्षमालावलयं कमण्डलुम् ।
स्वयम्भुवे हंसवराधिरोहिणे
नमोऽस्तु ब्रह्मन् जगतां सिसृक्षवे ॥

चतुर्मुखाय दण्डस्रक् कमण्डल्वक्षधारिणे ।
हिरण्यश्मश्रुकेशाय ब्रह्मणे ते नमो नमः ॥

### ब्रह्मतालम्

अब्जसम्भूतमब्जबन्धुरसुन्दराननपङ्कजं
चिह्लकाहलभेरिमद्दल झल्लरीमुरवप्रियम् ।
कुम्भसम्भवजम्भवैरिमुखामरादिभिरर्चितं
कञ्जलोचननाभिसंभवमाश्रयेऽद्य पितामहम् ॥

### तालान्तरभेदः

पङ्कजप्रिय परमकारण कारणादि चतुर्मुखं
सुन्दरप्रियगेहनृत्त हिरण्यगर्भपितामहम् ।
भेरिमद्दलमुरव झल्लरि शङ्खकाहलकध्वनिं
गेयनृत्त निरन्तरं वर ब्रह्मतालमिति स्मृतम् ॥

मुरमथनोदर कमलोदर भुवनं भुवननिर्माणकरं
कमलाटनवाहनवरं चतुरानन
सरिदमल प्रतिविधिविज्ञेय हरिम् ।
अमराधिपगण-विविधानिवमनिशं देवगणं
अखिलकृतकृतमजरक्षेमकरं अजरं विश्वसृजम् ॥

अण्डमण्डलकोटिमण्डलनाभिपङ्कजविष्टरं
अण्डपिण्डचराचराखिल देवराक्षससृड्विभुम् ।
भूरि काञ्चनवाससं वरहंसचित्तचतुर्मुखं
भेरिमद्दल मुरव झल्लरि ब्रह्मतालमिदं महत् ॥

### रुद्रस्तुतितालादि

जाल्वल्यज्वलनज्वलन्निटिल दृग्ज्वालावलीसंकुल-
भ्राम्यत्स्वान्तपुरत्रयस्य रिपवे रुद्राय रौद्राय ते ।
श्वेताद्रिप्रभवेदवाक् पृथुककुत्तुङ्ग ध्वजाय स्वयं
गौर्यालङ्कृतविग्रहाय सततं भूयो नमस्सन्ततिः ॥

श्रीरुद्रः शरदिन्दुकुन्दधवलः कल्पान्तकालानल-
ज्वालाभीषणशूलभासुरकरः स्थित्वा प्रपद्योपरि ।
कैलासात्प्रमथाधिपैः परिवृतः क्रूरैः स्वनैरम्बिका-
तीर्थान्तोत्सव सेवनार्थमधुना क्षिप्रं समागच्छतु ॥

वृषारूढाय रुद्राय चन्द्रचूडाय शम्भवे ।
परश्वथमृगाभीतिपाणये ते नमो नमः ॥

नमत शिवममरसरिदमलचूडं
प्रमथगणसेवितं निखिलसुरपूजितम् ।
तिकृतकृततिकृतकृततीतकृतपादम् ॥

तकृतकृत तातकृत तत्तकृत धों धों
तत्तकृत तातकृत तत्तकृत धों धों ॥

रुद्रदेवस्य रुद्रतालं, गान्धारस्वरगीतं उद्धट्टितवाद्यं शङ्कराभरणरागगानं दण्डपादनटनम् । श्री महात्रिपुरसुन्दरी सेनापत्याः चण्डेश्वर्याः समादेशात् अहमिह संघोषणं करोमि ।

—*—

## विष्णुस्तुतितालादि

फूत्कुर्वन्नागखण्डीकरणपटुलुठत्तुण्डपक्षीन्द्रपक्ष-
प्रोद्यज्झंझामरुद्भि र्विलुठितलुठिताधूतविध्यण्डभाजे ।
स्पूर्जज्ज्वाला सहस्रस्फुरितघनसहस्रार शङ्खोद्भटाय
श्रीमद्रुद्रार्पित स्वस्फुरितनवमुद्राय तुभ्यं नमोऽस्तु ॥

कालाम्भोधरदेहकान्तिरुचिरो ह्यारूढपक्षीश्वरो
विष्वक्सेनमुखैर्गणैः परिवृतः पीताम्बरालङ्कृतः ।
हस्तोद्भासित शङ्खचक्रमहितो विष्णुर्हठादम्बिका-
तीर्थान्तोत्सव सेवनार्थमधुना क्षिप्रं समागच्छतु ॥

शङ्खचक्रगदाशार्ङ्गपाणये नीलतेजसे ।
पीताम्बराय शान्ताय श्रीकान्ताय नमोऽस्तु ते ॥

कमलाभमुखं कमलाभदृशं
कमला घनकुम्भ कुचाभरणम् ।
यमिनं यमलार्जुनमहं यमिनामभयप्रदपदपद्मम् ॥

नमिताब्जभुवं यमितादितिजं
विनतासुतवाहन केतुकृतम् ।
दरचक्रधरं भज मानस मे
कमलाप्रिय तालमिदं प्रथितम् ॥

मत्स्यकमठ वराह केसरि दिव्यवामनरूपधृक् ।
परशुधर रघुवर हलधर कृष्ण कर्किरूपविशेषधृक् ।
विनिवसतु भवतु हृदि दिनकर मण्डल प्रभयान्वित
सकलसुरगण विनुतपदयुग शार्ङ्गकार्मुकनायक ॥

दामोदर रूपकतालं विष्णुतालं ऋषभस्वरगीतं
बिलहरिरागं मलहरिवाद्यं स्वस्तिकनृत्तम् ।
श्रीमहात्रिपुरसुन्दर्याः सेनापत्याः चण्डेश्वर्याः
समादेशादहमिह संघोषणं करोमि ॥

## इन्द्रस्तुतितालादि

मेघश्यामतनुः सहस्रनयनो वज्रायुधो वासवः
नागेन्द्रोन्नत पीनकन्धरगतो देवावलीसेवितः ।
भेरीमद्दलमल्लिकाहलरवैः पूर्णाखिलाशोऽम्बिका-
तीर्थान्तोत्सवसेवनार्थमधुना क्षिप्रं समागच्छतु ॥

दम्भोलिभीषण भुजाय सुराधिपाय
श्यामाय दानवकुलक्षयकारणाय ।

पूर्वाधिपाय सुरवारण वाहनाय
तुभ्यं पुलोमतनयापतये नमोऽस्तु ॥

अमरपुरेशं अमरपुरेशं हार सुभूषणं इन्द्रदिशाधिप समरजयं चतुर्भुजं दन्ति समरजडं अमरपुराधिपं उर्वशी मेनातिलोत्त-माप्सरसं अविरतभेरीमद्दलं बिरुदतालसमन्वितम् ।

विकटतटदन्तिनं नन्दनं मकुटतटकन्धरं मन्थरं निकटमणिकुण्डलं, गण्डस्थलम्बितं, प्रकटकुलिशन्धरं तत्र इन्द्रं भजे ।

दनुजनिरसनविविध विजयति वज्रयुक्तशाची
पचतगिरिरिव विकसदतिमति हस्तिमस्तक निष्ठितं
कलितकरटिमिह पटहतुटिककृतमिन्द्रतालमहं भजे ।
महेन्द्रदेवस्य तालं इन्द्रसमतालं षड्जस्वनगीतं
गज्जरिरागगानं चाचत्पुटवाद्यं भुजङ्गनृत्तम् ।

## अग्निस्तुति तालादि

वह्निः शक्तिधरः प्रवाल विलसद्देह प्रभामण्डलः
ज्वाला ज्वाल परीत रत्नमकुटः कल्याणपीताम्बरः ।
भूषारत्नमरीचिमान् स्थलरुचिर्मेषाधिरूढोऽम्बिका-
तीर्थान्तोत्सवसेवनार्थ मधुना क्षिप्रं समागच्छतु ॥

अग्नेश्च हव्यमनिशं वहते सुराणां
तेषां समीपमथवा वसवे पितॄणाम् ।
धूमध्वजाय दहनाय जुहूतराय
शोणाय कोणमवते भवते नमोऽस्तु ॥

अग्नि हविर्ज्वलितप्रभ गर्जित दिव्यजगत्प्रिय देव कृतं, सतत कृत क्रतु हविर्हरणं वर जय जय पर वर भक्तिदृढम् ।
लोकहितानुगतागतिवाहक हव्यकदीप्तपदं

वाहकमेकमजं स्वारोहण वायुगतिं वरदम् ।
ज्ञानसमाधिकृतादिकृताखिल कारण वायु सखम् ।
भेरिकताडन तालविभेदन पावक तालमिदम् ।
तत्तद्भेरिक ताडनतालविभेदन पावकतालमिदम् ।
अग्निदेवस्य तालं सिंहनन्दनं, षड्जस्वरगीतं, भूपालरागगानं, बद्धावणवाद्यं देशिकनृत्तम् ।

श्री महात्रिपुरसुन्दर्याः सेनापत्याश्चण्डेश्वर्याः समादेशात् अहमिह सङ्घोषणं करोमि ।

### यमस्तुतितालादि

कालः पाशधरः प्रमोदतिमिरस्तोमादिकालाङ्कः
ज्वालारूक्षकटाक्षवीक्षवदनो दंष्ट्राग्र मग्नाधरः ।
आरूढो महिषं विषाणकुलिशं प्रेतैरुपेतोऽम्बिका-
तीर्थान्तोत्सव सेवनार्थमधुना क्षिप्रं समागच्छतु ।।

कालाय लोकसमदण्ड विधायकाय
नीलप्रभाय महिषासनवाहनाय ।
दण्डायुधाय तनयाय विकर्तनस्य
देवाय दक्षिणदिशां पतये नमोऽस्तु ।।

कालदूतपति कालमेघनिभ कालपाशमृत कालवित्
कालचक्रकृति कालचक्रपति कालकारणमहास्वनम् ।
कालकेतु सुखकालहारिपदकालपूजकरसत्प्रियं
भेरिकानुगततालभेदयमराजतालदेवमिदं महत् ।।
तत्तद्भेरिकानुगततालभेदयमराजतालमिदं महत् ।।

यमदेवस्य तालं - मद्दयम् मध्यमस्वरगीतं रागं
पञ्जररागगानं, डिण्डिमवाद्यं कन्दुकनृत्तम् ।

श्रीमहात्रिपुरसुन्दर्याः सेनापत्याश्चण्डेश्वर्याः
समादेशात् अहमिह संघोषणं करोमि ॥

## निर्ऋतिस्तुतितालादि

रक्ताक्षाङ्ग शिरोरुहः करलसत्खड्गोग्रखेटायुधो
निर्द्वन्द्वो रजनीचरेन्द्रविलसद्दंष्ट्राकरो निर्ऋतिः ।
आरूढः शशवाहनं परिवृतो दैत्यैरुपेतोऽम्बिका-
तीर्थान्तोत्सवसेवनार्थमधुना क्षिप्रं समागच्छतु ॥

श्यामाय भीषणशवाधिपवाहनाय
कोणाधिपाय लसदुग्रकृपाणकाय ।
तुभ्यं पिशाचकुलराक्षससायुधानां
सेनावनप्रियवृते निर्ऋते नमोऽस्तु ॥

अक्षयपक्षबलक्षय शिक्षणदक्षिणकं
शिक्षितभक्षित शिक्षविलक्षितनिर्जरकम् ।
सर्गनिसर्गकलेडितदक्षवपुर्गलनं
दुर्गणदुर्गणदुर्गविचक्षण राक्षसवीक्षणकं
नित्यनितान्त निरन्तरनिष्ठितनैर्ऋततितालमिदम् ॥

अन्तकनीतवपुः शववाहक खड्गधरं च विभुं
कुञ्चितसर्पफणाञ्चितसङ्कुलकीलकुलाकुलितम् ।
वन्दितदैत्य सुरादिसुराखिल चामरवृन्द सुवादित
भेरिकमद्दल पटहसुघोषण नैर्ऋतितालमिदम् ॥

निर्ऋतिदेवस्य तालं मल्लतालं, निषादस्वरगीतं
देशाक्षिरागगानं रिङ्गामुखवाद्यं जानुनृत्तम् ।
श्रीमहात्रिपुरसुन्दर्याः सेनापत्याश्चण्डेश्वर्याः
समादेशादहमिह सङ्घोषणं करोमि ॥

—*—

## वरुणस्तुतितालादि

आरूढो मकरं महोदधिमयं मन्दारमालोज्ज्वलः
पाशालङ्कृत पाणिपद्मसुभगः संगोपितः किन्नरैः ।
कुन्देन्दुद्युतिमान् स्वदेह रुचिना ध्वस्तान्धकारोऽम्बिका-
तीर्थान्तोत्सव सेवनार्थमधुना क्षिप्रं समागच्छतु ।।

श्यामलाय मकराधिरोहिणे
रम्यमुल्लसित पाशपाणये ।
जीवनाय वरुणाय कुर्महे
देहिनामपरदिक्पतये नमोऽस्तु ते ।।

पश्चिमदिशिस्थितमहत्प्रभु जगत्परमभक्तिमह
तालं महत् । यद्दिशिकृतं परमतध्वनिपुरस्कृत
भक्तिमहतालं महत् । तत्र कृति तत्रकृति
तत्रकृति भ्रमणमतदेवं करकृतपरदण्डं
त्रिभुवनमहित करदेवं अविरतविभवं
कशजजगत्कुम्भेशम् । यक्षध्वनीक्षण
विपक्षक्षय क्षुभितचक्षुः क्षणद्युतिलासं
रहसिक्षतननमित जगदुरगनीहार कुहरि
सर्वदोहमपीठम् । बिभ्रद्भमद्भ्रुकुटि निहत
पृथग्धवलकालीकराल महिकराल
चक्रधर मालोल लोकमणिनीलम् । बिभ्रद्वारुणं
भागजं वारुणदिशि कुवलयवासिनं सागरं
सकलभुवनप्रिय सुगामिनं भोगिनम् ।
सत्कृतसत्कृतसर्वदेवप्रियं तत्तत्सत्कृतसततम् ।
वरुणदेवस्य तालं माङ्गल्यतालं, पञ्चमस्वरगीतम्

श्री रागगानं, वीराणवाद्यं, कान्तरालकनृत्तम् ।
महात्रिपुरसुन्दर्याः सेनापत्याश्चण्डेश्वर्याः समादेशात्
सङ्घोषणमिदमहं करोमि ।

## वायुस्तुततालादि

वायुर्वह्निसखः प्रसन्नवदनः पिङ्गायताक्षिद्वयो
धूम्राभो मृगवाहनः परिलसत्पाणिध्वजालङ्कृतः ।
पीनोदारभुजान्तराल विलसद्दामाभिरामोऽम्बिका-
तीर्थान्तोत्सव सेवनार्थमधुना क्षिप्रं समागच्छतु ॥

श्यामाय सुन्दरतनो मृगवाहनाय
धूम्राय तुङ्गमृगपुङ्गवकेतनाय ।
कोणाधिपाय जगतामभिवर्धकाय
वाताय तीव्रगतये भवते नमोऽस्तु ॥

दमितदितिसुत युवतिकुचतटघटितकुङ्कुमधारणं
सततगति समवदन निजगजपवन लोलुपमानसं
मुक्तिकञ्चुकगर्भपिङ्गल विस्फुलिङ्ग गणप्रभं
भुक्तिमुक्तिपरिभ्रमं गल दिव्यहारगणं
प्रलयपटुतरविकट विकटितशङ्खदुन्दुभिनादितं,
विश्वसृष्टिलय-स्थिति प्रभुजीवितं प्रभुजीवितं
एतदेव विकारवल्कल निष्कलं मृगवाहनम्
पीलिकादपि मानुषाधिप वायुघोषणमङ्गलम्

भेरिताडननादभेदित वायुतालमिदं महत् ।
तत्तद्भेरिताडननादभेदित वायुतालमिदं महत् ।
वायुदेवस्य बलितालं, धैवतस्वरगीतं, वसन्तरागगानं,
लेंबुवाद्यं, अनुभैरवं नृत्तम् ।

श्री महात्रिपुरसुन्दर्याः सेनापत्याः चण्डेश्वर्याःसमादेशात् अहमिह संघोषणं करोमि ।

### कुबेरस्तुतितालादि

सोमः सुन्दरलोचनस्त्रिपुरजिन्मित्रं चलत्कुण्डलः
श्वेताभः शुकतुण्डरत्नवदनः पाणिस्थपद्मोज्ज्वलः ।
श्यामोदारभुजान्तरालविलसद्दामाभिरामोऽम्बिका-
तीर्थान्तोत्सवसेवनार्थमधुना क्षिप्रं समागच्छतु ।

सुवर्णवर्णाय शिवप्रियाय धनाधिपालाय गदाधराय ।
हृदेन्दुकाशाय हराद्रिवासिने नमोऽस्तु तस्मै नरवाहनाय ॥

शङ्खनिधिपद्मनिधिवन्दितधनेशं
कालकूटाशनसख देवकुलदीपं पाण्डरमहत्तनुमुदारगुणधीरं
पुष्पकुलसत्प्रिय जगत्प्रथममीडे
उद्यद्दिशिकृत किरणप्रहसित सततर तौल्यगतिं
तृप्यद्दशमुखनृत्यधृत् भुजबलदुरित यक्षधृत् ।
तत्तद्भुजबलदुरितं यक्षधृत् ।

तालं कोट्टरी तालं, कन्दर्पस्वरगीतं तर्करागगानं, दुन्दुभिवाद्यं मङ्गलनृत्तम् ।

श्रीमहात्रिपुरसुन्दर्याः सेनापत्याः, चण्डेश्वर्याः समादेशात् अहमिदं सङ्घोषणं करोमि ।

### ईशानस्तुतितालादि

ईशः शूलधरस्त्रिलोचनधरः शार्दूलचर्माम्बरो
भूतप्रेत पिशाचराक्षसगणैर्युक्तः प्रवालच्छविः ।
आरूढो वृषवाहनं सजलच्चिच्चूडाभिरामोऽम्बिका-
तीर्थान्तोत्सवसेवनार्थमधुना क्षिप्रं समागच्छतु ॥

वृषाधिरूढाय जटौघमालिने कपालबालेन्दुगदावतंसिने ।
त्रिशूलिने कोणदिशाधिवासिने सुधासुवर्णाय शिवाय ते नमः॥

शङ्करप्रथमकिङ्करं भुजवरडम्बरं गिरिजासुपतिं
कनकाद्रिधनुं वृषध्वजमीशानम् ।
बहुगङ्गाधर शूलकपालैश्चासाधारणं उमासहायम् ।
संहारपतिं सकलाधिपतिं धवलित जलधरधवलित चन्द्रं
सुरतटिनी गलगण्डमण्डित तुण्डनटनाथम् ।
तुहिनक्षितिधरदुहितृस्तनभरपरिरम्भप्रियकृत् ।
अलीक प्रभवणमृगण प्रहसित मदनध्वंसपटुः ।
रजतप्रतिभटवृषभप्रतिजन गमनप्रीति युतः ।
भवतः क्षपयतु कल्मषं पशुपतिरुडुपति चूड मृडः ।

ईशानदेवस्य तालं सिंहनन्दनं, पञ्चस्वरगीतं, कल्याणीरागगानं, ढक्करि वाद्यं ताण्डवं नृत्तम् । श्री महात्रिपुरसुन्दर्याः सेनापत्याः चण्डेश्वर्याः समादेशात् अहमिह संघोषणं करोमि ।

एवं ब्रह्मादीन् सर्वान्देवान् स्तोत्रतालादिभिः आश्रावयित्वा अनन्तरं तत्रार्चनीयां महाभेरीं सन्ताडयेत् ।

व्योमक्षितिस्वर्गतलस्थितानां
हिताय पाताल निवासिनां च ।
विनाशहेतोः सुरविद्विषां च
भेरीमहं संप्रति ताडयामि ॥

सकलभुवनभूतिस्थापनार्थं पुरस्तात्
तदनु पशुमृगाणां प्राणिनां रक्षणार्थम् ।
अनुदिनमतिघोषां उत्सवारम्भभेरीं
हिमगिरिवरकन्याशासनात्ताडयामि ॥

ब्रह्मेन्द्रनारायणरुद्रमूर्तेः
स्थित्वा पुरस्तात्प्रति शासनस्य ।
चतुष्पदां च द्विपदां विभूत्यै
भेरीमहं संप्रति ताडयामि ।

इति श्लोकत्रयं पठित्वा भेरीं ताडयेत् । एवं त्रिः । ततो भेरीमुद्धृत्य वाद्यकारस्य हस्ते दत्वा भरतवाद्यशास्त्रोक्तप्रकारेण शङ्खभेर्यादिवाद्यवादनघोषणानि कारयित्वा, ततः पाद्यार्घ्याचमनाद्युपचारेण श्रीदेवीं तां समाराध्य, धूपदीपदानान्ते निवेदनं निवेद्य, देशिकः आशीर्वादं पठेत् ।

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ॥

इति स्वस्ति वाचयेत् । ततः वेदपारायण मङ्गलवाद्यादिभिः, ध्वजपटास्त्रयागेश्वर्यादिभिः सह श्रीदेवीं तां केटकादियानेषु समारोप्य ग्रामं प्रदक्षिणीकृत्य, पुनरालयं प्रविश्य महाध्वजपटास्त्र यागेश्वर्यादि देव्यभिमुखां उत्सवेश्वरीं स्थापयित्वा श्रीदेव्याः ध्वजारोहणकर्म समारभेत ।

—*—

## होमकुण्डमुद्रालक्षणम् ।

देव्युवाच—

भगवन् देव देवेश सर्वज्ञ करुणानिधे ।
अप्रकाश्यानि सर्वाणि प्रोक्तानीह त्वया मम ॥ १

मण्डलस्य च मुद्राणां लक्षणं गुरुशिष्ययोः ।
वक्तुमर्हस्यशेषेण यस्य स्त्री करुणामयी ॥ २

ईश्वर उवाच—
श्रृणु देवि महाभागे यन्मां त्वं परिपृच्छसि ।
तत्समासेन वक्ष्यामि रहस्यमपि पार्वति ॥ ३

विहितं येऽनुतिष्ठन्ति तथैव फलभाजिनः ।
सर्वेषामीप्सितार्थानामन्यथा चेत्तथा न हि ॥ ४

न्यायार्जितैस्साधनैश्च दानहोमार्चनादिकम् ।
कुर्यान्न चेदधो याति भक्त्या कुर्वन्नपि द्विजः ॥ ५

भूमिस्थलं समीकृत्य सच्चतुष्काङ्गुलान्तरम् ।
तावत्तन्निखनेदन्तश्चतुष्कोणं तदन्ततः ॥ ६

दिशि दिश्यन्तरेप्येवं पार्श्वद्वयचतुष्टयम् ।
एवं सलक्षणं कृत्वा बहिः कुर्याच्च मेखलाम् ॥ ७

द्वादशाष्टचतुर्मानाः साङ्गुलैश्च क्रमात्तथा ।
एवमुत्सेध आयामश्चतुरङ्गुलमेव तु ॥ ८

आयामेत्सेध रूपेण चतुष्कादिकृतः क्रमात् ।
चतुर्वृत्ततया कुर्याद्व्यस्या मेखलाः क्रमात् ॥ ९

कुण्डस्य पश्चिमे भागे (योनिं) कुर्यात् सलक्षणाम् ।
अश्वत्थपत्रसदृशं कुण्डे किञ्चित्प्रतिष्ठितम् ॥ १०

षट्चतुष्काङ्गुलाग्रा सा क्रमान्निभवेत्पुनः ।
विस्तारेणापि सा योनिः भवेत्पञ्चदशाङ्गुला ॥ ११

मूलन्नालन्तथाग्रञ्च व्युत्क्रमात् षट्चतुस्त्रिकम् ।
त(दष्टां)गुलमानं स्यात्तदेतत्कुण्डलक्षणम् ॥ १२

एकहस्तस्य कुण्डस्य प्रकारोऽयं प्रकाशितः ।
द्विहस्तकुण्डमप्येवं द्विगुणीकृत्य मेखलाम् ॥ १३

नाभिरप्यथवा कुण्डमेकमेखलकं भवेत् ।
संक्षेपकर्मसु तथा वर्तुलस्यापि लक्षणम् ॥ १४

चतुष्कोणैकहस्तस्य मध्ये कुण्डस्य कर्णिकाम् ।
समं निधाय सूत्रेण भ्रामयेदभितोऽम्बिके ॥ १५

कोणेषु यद्वाप्यधिकं तद्दिक्ष्वेव विनिर्दिशेत् ।
सर्वेषामपि कुण्डानां अङ्गुलीद्वयवृद्धितः ॥ १६

प्रथमा मेखला कार्या त्रिंशे...प्यापि पूर्ववत् ।
कण्ठेषु यवमात्रं स्यात् कुण्डे च करमात्रके ॥ १७

कुण्डेषु यवमात्रस्य आकण्ठेऽरत्निमात्रके ।
तथा चतुर्यवैः कुण्डो मुष्टिमात्रो विनिर्दिशेत् ॥ १८

सर्वेषु चान्यकुण्डेषु चाङ्गुलिद्वयमात्रतः ।
कुण्डे यत्नेन कर्तव्यः इति मुक्तिफलेन हि ॥ १९

सात्त्विकी तामसी चैव राजसी च क्रमाद्भवेत् ।
प्रथमा च द्वितीया च तृतीया मेखला तथा ॥ २०

योनिं कुण्डानुसारेण कुर्यादाद्यन्तमध्यतः ।
उक्ताङ्गुलप्रमाणेन होमार्थं विदधीत वै ॥ २१

चतुरस्रं विधायादौ सप्तपञ्चाङ्गुलं क्रमात् ।
तृतीयांशेन गर्तस्य शेषाच्चार्धं तदन्ततः ॥ २२

रम्यञ्च मेखलां खाते नि(शि)ष्टेनार्धेन कारयेत् ।
कुण्डत्रिभागविस्तारमङ्गुलेन समायुतम् ॥ २३

सार्धमङ्गुल्यकं वा स्यात्तत्र श्रोतृमुखं भवेत् ।
चतुरङ्गुलविस्तारं पञ्चाङ्गुलमथापि वा ॥ २४

त्रिद्वयाङ्गुलकं तस्य मध्यमन्तु सुशोभनम् ।
सुषिरं कुण्डदेशो स्याद्विशेष(षा)वकनीयसी ॥ २५

शोणं दण्डन्तु कर्तव्यं यथारुचि विचित्रकम् ।
इष्टकेन समायुक्तो हस्तमात्रस्तु वा भवेत् ॥ २६

चतुष्कं शोणवृत्तन्तु द्व्यङ्गुलं विदधीत वै ।
यथाल्पपङ्के गोष्पादं रुचिरं दृश्यते तथा ॥ २७

आलये वा गृहे वापि नित्यहोमे विशेषतः ।
योन्याकारं भवेत्कुण्डमेकहस्तोन्नतायतम् ॥ २८

दीक्षायां च प्रतिष्ठायां नव पञ्चैकमेव वा ।
कुण्डे यत्नेन कर्तव्या भुक्तिमुक्तिफलेषु हि ॥ २९

पलाशपत्रे निश्छिद्रे रुचिरे स्रुक्स्रुवौ भवेत् ।
विदध्याद्वाश्वत्थपत्रे संक्षिप्ते होमकर्मणि ॥ ३०

यज्ञदारुमयं वापि महाहोमे विधीयते ।
ततः कुण्डस्थलं सम्यक् गोमयेनानुलिप्य च ॥ ३१

शालितण्डुलचूर्णैश्च रक्तपीतशिताशितैः ।
शोभोपशोभासंयुक्तं मण्डलं वृत्तमुज्ज्वलम् ॥ ३२

कुण्डस्य सन्निधौ सम्यग्वायव्ये विदधीत वै ।
तत्राष्टपद्मकमलं वृत्तत्रयपरीवृतम् ॥ ३३

सोमसूर्याग्नि बिम्बत्वेनैव कुर्याद्विचक्षणः ।
चतुरश्रं बहिस्तस्य षट्कोणं कर्णिकान्तरे ॥ ३४

पीतं पूर्वं सितं देयं पश्चिमेऽप्युत्तरे तथा ।
रक्तन्तु दक्षिणे कृष्णं पाटलं वह्निसंस्थितम् ॥ ३५

नैर्ऋते नीलवर्णन्तु वायव्ये धूमवर्णकम् ।
ईशे गौरं समुद्दिष्टमष्टपत्रेष्वयं क्रमात् ॥ ३६

पृथ्यम्बु वह्निवाताख्यपाशाङ्कुशधनुश्शराः ।
विलिख्य वर्णकैस्सम्यक् तत्र देवीं समर्चयेत् ॥ ३७

# नैमित्तिकार्चनविधिः

नित्यार्चनरतैर्देवि कार्यं नैमित्तिकार्चनम् ।
तद्विधानमहं वक्ष्ये चैत्राद्यं फाल्गुनावधि ॥ १

चैत्रे दमनकं कुर्यात् समूलैर्व्याडचूद(चूत)कैः ।
पूर्वपक्षचतुर्दश्यां निशि संस्थाप्य विद्यया ॥ २

परेद्युर्नित्यपूजान्ते कुर्यात्तैस्तैश्च पूजनम् ।
तस्मिन्मासेतु पूर्णायां वसन्तोत्सवपूजनम् ॥ ३

कुर्यात्तत्कालसंभूतैः प्रसूनैश्चन्द्रचन्दनैः ।
सौगन्धिकैश्च काश्मीरैः पूजां पूर्ववदाचरेत् ॥ ४

वैशाखे मासि पूर्णायां चन्दनैः कुङ्कुमान्वितैः ।
एलातक्कोलजातीभिरुपेतैः पूजयेच्छिवाम् ॥ ५

कारणञ्च वदाम्यस्य शृणु सर्वाङ्गसुन्दरि ।
चण्डो नामोरगः कश्चिद्वासुकेर्वंशवर्धनः ॥ ६

गरुडाद्भयमापन्नस्ततस्तेपे तु मां प्रति ।
सन्तुष्टेन मया देवि भूषणत्वेन कल्पितः ॥ ७

तस्य भार्या वियोगार्ता तपसा मामतोषयत्।
त्वद्भूषणत्वं दत्वा तु तयोर्योगो मया कृतः ॥ ८

अस्माकन्तु यदा योगः तदा योगस्तयोस्तदा ।
वरोऽन्यश्च मया दत्तः सन्तुष्टेन तयोस्तदा ॥ ९

यश्च त्वां सेवते मां वा तेन पूज्यौ युवामिति ।
प्रावृड्हेमन्तयोर्मध्ये समयश्च मया कृतः ॥ १०

न करोति च यो मोहात्तस्य पूर्णं न विद्यते ।
तस्मात्सर्वप्रयत्नेन पवित्रारोपणञ्चरेत् ॥ ११

पवित्रारोपणात्पूर्वं दशमेन च वह्निना ।
पूर्वोक्तेन विधानेन कारयेदङ्कुरार्पणम् ॥ १२

षोडशैः कलशैः स्नाप्य मण्डलञ्चापि कारयेत् ।
सुवर्णै राजतैर्वाऽपि सूत्रैः पट्टसमुद्भवैः ॥ १३

कार्पाससंभवैः सूत्रैर्नवधा गुणितैः शुभैः ।
कुर्यात्पवित्रं व्रतिनां सर्वेषां षोडशाङ्गुलैः ॥ १४

नवाङ्गुलैर्वा तत्संख्या सरग्रन्थ्या समन्वितम् ।
अथ वा प्रतिशक्तीनां तत्तत्सङ्ख्याङ्गुलीयकम्॥ १५

कृत्वाऽधिवासपूर्वं तु पूजयेत्तैर्यथाक्रमम् ।
वाराहीकुरुकल्यादि शक्तीनां मूलशक्तिवत् ॥ १६

स्वमानेनात्मनः कुर्यात् पवित्रं त्रि त्रि संख्यया ।
क्रमाक्रमज्ञशिष्याणामात्मवत्समुदीरितम् ॥ १७

अन्येषां योगिनीनान्तु एकग्रन्थिसरो न वा ।
परिधानप्रमाणेन मण्डपस्यैकसूत्रतः ॥ १८

सरग्रन्थ्याङ्गुलैर्युक्तं षण्णवत्या तु संख्यया ।
कृत्वा पवित्रत्रितयं तानि देव्यै समर्पयेत् ॥ १९

उक्तमानत्रयेष्वेकं ग्राह्यं भवति सर्वदा ।
न कुर्यान्मानसं कार्यं यदि कुर्याद्विनश्यति ॥ २०

तस्मात्सर्वप्रयत्नेन विधियुक्तं समाचरेत् ।
निधाय कलशे शुद्धे पुण्याहं वाचयेत्सुधीः ॥ २१

संप्रोक्ष्य पावमानीभिर्मण्डलान्तर्निधापयेत् ।
पावीरवीतिमन्त्रेण पवित्राणि च पूजयेत् ॥ २२

गणेशं वटुकं दुर्गां क्षेत्रेशं दिक्षु पूजयेत् ।
निवृत्तिं च प्रतिष्ठां च विद्यां शान्तिं विदिक्ष्वपि ॥ २३

परितो दिक्पतीनष्टौ पूर्वेऽनन्त दिवाकरौ ।
पश्चिमे कमलावासं कमलामपि पूजयेत् ॥ २४

इति सर्वत्र निर्दिष्टा पूजा सर्वोत्सवेषु च ।
आदावन्ते च पुण्याहमादौ कौतुकबन्धनम् ॥ २५

न कुर्याद्यदि मोहेन विफलं कर्म जायते ।
अग्निं च विधिवद्धुत्वा समिदाज्य चरूनपि ॥ २६

पूजान्ते कौतुकं बध्वा पुनश्चापि निवेदयेत् ।
अधिवासं ततः कृत्वा प्रभाते देशिकोत्तमः ॥ २७

कृत्वा तु नित्यकर्माणि नित्यपूजां विधाय च ।
अग्रे च स्थण्डिलं कृत्वा तण्डुलेन तिलेन च ॥ २८

कलशान् पञ्च विन्यस्य प्रोक्षयेदस्त्रमन्त्रतः ।
पयो यद्वाववदेति पूरयेन्मध्यपूर्वकम् ॥ २९

मध्ये दूर्वां विनिक्षिप्य सहस्रपरमेति च ।
अश्वक्रान्तेति मन्त्रेण विष्णुक्रान्तां च पूर्वतः ॥ ३०

उद्धृतासीति मन्त्रेण उत्तरे त्वमृतं क्षिपेत् ।
गन्धद्वारेति वै गन्धं दक्षिणे तु विनिक्षिपेत् ॥ ३१

हिरण्यशृङ्गमित्यृग्भ्यां सहिरण्याम्बु वारुणे ।
संसृज्यात्सर्वमेकत्र यदतो वा ततेति च ॥ ३२

षोडशैः कलशैः स्थाप्य अलङ्कृत्य विधानतः ।
अग्निं हुत्वा विधानेन समिदाज्यचरूनपि ॥ ३३

अनन्तामिति मन्त्रेण सेचयेच्च पवित्रकम् ।
श्रद्धासूक्तेन चोद्धृत्य अभिमन्त्र्य स्वमन्त्रतः ॥ ३४

अनन्तादिति मन्त्रेण धारयेदम्बिकां गुरुः ।
अनुज्ञाप्य महादेवीं परिवारगणाय च ॥ ३५

प्रदापयेत्पवित्राणि स्वयं शिष्टानि देशिकः ।
उत्सवं कारयेत्पश्चान्नव सप्ताथ पञ्च वा ॥ ३६

देशकालानुसारेण कुर्यादेकदिनं तु वा ।
उत्सवान्तेषु सर्वेषु प्रायश्चित्तेषु सर्वशः ॥ ३७

व्यस्ताभिश्च समस्ताभिर्व्याहृतीभिः शतं हुनेत् ।
एकाहे कौतुकं कुर्यात् कुम्भमण्डलवर्जितम् ॥ ३८

एकाहे अङ्कुरं कार्यं विशेषफलकाङ्क्षिणा ।
अभावे तु न दोषः स्यात् बलिकर्म सदा भवेत् ॥ ३९

पवित्रारोपणप्रोक्तमिति सर्वं महेश्वरि ।
यस्तु कुर्यादिदं कर्म यस्य दृष्टिपथं गतम् ॥ ४०

या वक्ति सकलं वाचा मुक्ताः स्युस्ते विबन्धनात् ।
अथ भाद्रपदे मासि पूर्णायां केतकोद्भवैः ॥ ४१

प्रसूनैरर्चयेद्देवीं पूर्वोक्त विधिना युतम् ।
आश्वयुज्या विशेषोऽस्ति शुक्लप्रतिपदस्तथा ॥ ४२

आरभ्य पूजयेद्देवीं गन्धपुष्पोपहारकैः ।
एक वृद्ध्या क्रमेणैव पूजाहोमौ समाचरेत् ॥ ४३

रसवच्च................सक्तावमज्जनात् ।
कार्तिके मासि पूर्णायां कुङ्कुमेन समर्चयेत् ॥ ४४

रात्रौ प्रदीपकर्मादि कुर्याद्देशिकसत्तमः ।
यद्विधानाद्भवेत्सौख्यमात्मनो राजराष्ट्रयोः ॥ ४५

चक्रस्नपनमन्त्रेण देव्यास्तु स्नपनं चरेत् ।
अथ वा तु चतुष्षष्ट्या द्वात्रिंशत्षोडशेन वा ॥ ४६

महानिवेदनं कृत्वा प्रातरेव महामतिः ।
कृत्वाग्निकार्यं विधिवत् बन्धयेत् करकौतुकम् ॥ ४७

सायं वीथीं परिक्रम्य बलिकर्मपुरस्सरम् ।
पुरस्तान्मण्टपे स्थाप्य पुण्याहं वाचयेत्सुधीः ॥ ४८

वेणुदण्डमृजुं सौम्यं क्रमुकं तालमेव वा
पनसं नालिकेरञ्च चम्पकं वान्तवा.... ॥ ४९

सारदारुमयं वाथ कारयेद्विधिवत्प्रिये ।
द्वादशाग्रयुतं दण्डं नवाग्रं वाथ पञ्च वा ॥ ५०

द्वादशाग्रे नवाग्रे च तिस्रः पङ्क्तीः प्रकल्पयेत् ।
पङ्क्तिद्वयन्तु पञ्चाग्रेऽप्येकाग्रं मुक्तिदायकम् ॥ ५१

द्वादशाग्रे तु षट् पञ्च नवाग्रे पञ्चमूर्तयः ।
अग्रेऽप्येकं सदा कार्यमिति दण्डविनिर्णयः ॥ ५२

भूतलेन चलं बध्वा शिखराग्रोन्नतं शिवम्।
सौधान्त वर्तमानानां यथा स्यद्दृष्टिगोचरः ॥ ५३

घृतद्रोणेन संपूर्णं मध्यपात्रं मनोहरम् ।
अन्यान्याढकपूर्णानि पात्राण्येवं प्रकल्पयेत् ॥ ५४

अथ वा तु तदर्धेन तदर्धार्धेन वा पुनः ।
पत्नी घृतं मिमिक्षेति घृतेनाभ्यर्च्य सर्वतः ॥ ५५

समुद्रादिममन्त्रेण पात्रमध्ये निधापयेत् ।
अन्यत्र वह्निं प्रज्वाल्य उद्दीप्यस्वेति मन्त्रतः ॥ ५६

वयन्नामेति मन्त्रेण घृतधारां प्रदापयेत् ।
कृत्वा चत्वारि शृङ्गेति वर्तिसंयोगमम्बिके ॥ ५७

तस्य मध्येति मन्त्रेण ध्यायीत परदेवताम् ।
अर्चयित्वा तु मूलेन हविरन्नपतेत्यृचा ॥ ५८

क्रमध्वमिति मन्त्रेण ऊर्ध्वमुद्धृत्य भूतलात् ।
प्रतिष्ठासीति मन्त्रेण दण्डकोपरि विन्यसेत् ॥ ५९

यत्ते अग्नेत्युपस्थानं कृत्वा च वरवर्णिनि ।
शान्तिसूक्तं जपेद्देवीं राजराष्ट्राभिवृद्धये ॥ ६०

स्वस्थानं पूर्ववन्नीत्वा देवीं त्रिपुरसुन्दरीम् ।
महानिवेदनं कुर्यादिति दीपविनिर्णयः ॥ ६१

मार्गशीर्षे थ पूर्णायां नाळिकेराम्बुचन्द्रवत् ।
निवेद्याभ्यर्चयेन्माषपिष्टापूपैर्यथाविधि ॥ ६२

पुष्ये मासि च पूर्णायां शर्कराभिर्गुलेन वा ।
पूजयेदिष्टसिद्धिः स्यात् गव्यं दुग्धं निवेदयेत् ।। ६३

माघे मासि च पूर्णायां तिलैश्शुभ्रैस्तथेतरैः ।
पूजयेद्दुग्धनैवेद्य तिलापूपादिभिस्सह ।। ६४

फाल्गुने मासि पूर्णायां चम्पकैस्स्वर्णराजतैः ।
चूतसौगन्धिमधुकैः पूजयेदीप्सिताप्तये ।। ६५

## दीक्षाभिषेकः

अथाभिषेकं वक्ष्यामि शृणु दीक्षापुरस्सरम् ।
येन सिद्धो भवेद्देव्याः पूजार्हः पूज्य एव च ।। १

उपासकस्तु शुद्धात्मा गुरुं यत्नेन तोषयेत् ।
स्ववित्तवित्तकामैश्च भक्तिश्रद्धासमन्वितः ।। २

यथा ददाति सन्तुष्टः प्रसन्ना देवता तथा ।
स्वयमेव तथा चैवमिति कर्तव्यताक्रमः ।। ३

विशुद्धदेशकालेषु शुद्धात्मा नियतो गुरुः ।
सङ्कल्प्योपाष्य कर्तव्यं मन्त्रमारोपणं ततः ।। ४

कुर्यान्नान्दीमुखश्राद्धमादौ चेत् स्वस्तिवाचनम् ।
पूर्वोक्तेन विधानेन तदेतद्विदधीत वै ।। ५

मधुमासे भवेद्दुःखं माधवे रत्नसञ्चयः ।
अशुभं भवति ज्येष्ठे आषाढे बन्धुनाशनम् ।। ६

समृद्धिः श्रावणेऽधीनं भवेद्भाद्रपदे क्षयः ।
प्रजानामाश्वयुङ्मासि संबन्धिशुभमेव हि ।। ७

ज्ञानं स्यात्कार्तिके सौख्यं मार्गशीर्षे भवत्यपि ।
पुष्ये ज्ञानक्षयो माघे भवेन्मेधाविवर्धनम् ।। ८

फाल्गुनेऽपि विवृद्धिः स्यान्मलमासं विवर्जयेत्।
रवौ गुरौ सिते सौम्ये कर्तव्यं बुधशुक्रयोः ।। ९

अश्विनी रोहिणीस्वातीविशाखाहस्तभेषु च ।
जेष्ठोत्तरत्रयेष्वेव कुर्यान्मन्त्राभिषेचनम् ।। १०

पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा ।
त्रयोदशी च दशमी प्रशस्ता सर्वकामदा ।। ११

पञ्चाङ्गशुद्धदिवसे योगे च गुरुशुक्रयोः ।
गुरुशुक्रोदये शुद्धे लग्ने द्वादशशोधिते ।। १२

चन्द्रतारानुकूले च दीक्षाकर्म प्रशस्यते ।
सूर्यग्रहणकाले तु नान्यदन्वेषणं भवेत् ।। १३

पूर्वमेव हि दीक्षायाः पञ्चमे सप्तमेऽह्नि वा ।
अङ्कुरार्पणकं कुर्यात् गृहे देवालयेऽपि वा ।। १४

पूर्ववन्मण्टपं कृत्वा वेदिकुण्डसमन्वितम् ।
कृच्छ्रैस्तप्तपराकाद्यैर्देहशुद्धिं विधाय च ।। १५

पुण्याहं वाचयित्वाऽथ प्रोक्षयेदस्त्रमन्त्रतः ।
चतुर्भिर्वर्णकैस्सम्यक् रक्तपीतसितासितैः ।। १६

पूर्ववन्मण्डलं कृत्वा वेदिमध्ये मनोहरे ।
आलिप्य गोमयेनैव पूर्वतो मण्डपं बुधः ।। १७

धान्यराशिं न्यसेत्तत्र भारद्वयसमन्वितम् ।
तत्र श्रीचक्रमालिख्य कुम्भानष्टोत्तरं शतम् ।। १८

स्थापयेदथवा देवि कुम्भानां नवकं तु वा ।
वेष्टितान्वस्त्रयुग्मेन पञ्चरत्नसमन्वितान् ॥ १९

साग्राश्वत्थप्रसूनैश्च शाखाभिरुपशोभितान् ।
नाळिकेरफलोपेतान् मङ्गळैः परितो ज्वलन् ॥ २०

दक्षिणे देवि कुण्डानामग्निकुण्डमथाचरेत् ।
नवकं पञ्चकं वापि एकं वा तदलाभतः ॥ २१

ततः शिष्यमुपाहूय भक्तिनम्रमकल्मषम् ।
क्षुरमूलेन दर्भैश्च प्रमृज्य वपनं चरेत् ॥ २२

संस्नाप्याहतवासांसि भूषयेद्भूषणानि च ।
हविर्निवेदयेद्देव्यै पायसान्नं समन्त्रकम्॥ २३

भोजयेच्छिष्यमप्यग्रे स्वयं भुक्त्वा विधानतः ।
ततोऽपराह्णे विधिवत् स्वस्तिसूक्तपुरस्सरम् ॥ २४

प्रवेशयेत्ततो देवीं बहुभिर्ब्राह्मणैः सह ।
आस्तीर्य वेद्याः पार्श्वे तु अजिनं कम्बलं तु वा ॥ २५

अनुज्ञातस्स तैर्विप्रैः श्रीविद्यावेदपारगैः ।
निवेश्य कौतुकं बध्वा अजिनं धारयेद्गुरुः ॥ २६

अञ्जयेदञ्जने नेत्रे वामनेत्रपुरस्सरम् ।
नवनीतैर्विलिप्याङ्गं दीक्षितो यत्निरीरयेत् ॥ २७

अल्पयित्वा तु मौनत्वं धृतप्राणो धृताङ्कुशः ।
बहिर्निर्गत्य गन्धाद्यैः पूजयेदस्त्रदेवताः ॥ २८

कुक्कुटाण्डप्रमाणेन बलिं दद्यात् स्वमन्त्रतः ।
सर्वे विघ्नाः प्रशाम्यन्ति निर्विघ्नं कर्म जायते ॥ २९

ततः प्राङ्मुख आसीनो धृतप्राणोऽपि मण्डलम्।
पुण्याहं वाचयित्वाऽथ प्रोक्षयेदस्त्रमन्त्रतः ॥ ३०

व्यस्तैस्त्रिभिस्सप्तभिश्च समस्तैः पुरुषीयुतैः ।
व्याहृतीभिस्समुद्राभिरावाह्याभ्यर्च्य मध्यमे ॥ ३१

मध्यकुम्भे तथावाह्य कोणाग्रे इष्टदां तथा ।
वज्रेशीं भगमालाश्च बहिर्बाणादिकान्यसेत् ॥ ३२

पाशाङ्कुशधनुर्बाणानष्टकोणेषु शक्तयः ।
वशी कामी च मोदी च विमला ह्यरुणा जयी ॥ ३३

सर्वेशी कौलिनीत्यष्टौ सर्वा वाग्देवतास्त्विह ।
ततो मन्त्रैस्समभ्यर्च्य स्वनामभिरथापि वा ॥ ३४

ततस्तु चतुरश्रान्ते समारभ्य च वारुणीम् ।
अणुर्वशित्वश्च तथा लघु प्राकाम्यमेव च ॥ ३५

महिमा भुक्तिरीशित्वमिच्छा प्राप्तिरथोर्ध्वयोः ।
सर्वकामश्च संपूज्य वरुणेन्द्रावुभावपि ॥ ३६

इति केचित्प्रशंसन्ति क्रमात्संक्षोभणादिकाः ।
संक्षोभद्रावणाकर्ष वश्योन्मादमहाङ्कुशाः ॥ ३७

खेचरीबीजयोन्याख्याः त्रिखण्डाद्याः प्रपूजयेत् ।
दिक्षु ब्राह्मी च माहेशी कौमारी वैष्णवी क्रमात् ॥ ३८

वाराही चैव माहेन्द्री चामुण्डा मा विदिक्ष्वपि ।
कामो बुद्धिरहङ्कारः शब्दश्च स्पर्शरूपकौ ॥ ३९

रसो गन्धस्तथा धैर्यं स्मृतिर्नाम च बीजकम् ।
आत्मामृतशरीराणामेता ह्याकर्षिणीपराः ॥ ४०

मायालक्ष्मीकलायुक्तैः पूजयेत्स्वस्वनामभिः ।
अष्टाब्जे (कुसुमादेवी) मेखला मदना मदनातुरा ॥ ४१

रेखा च वेगिन्यङ्कुशा मालिन्यपि महेश्वरी ।
आदावनङ्गशब्दाढ्याः स्वनामभिरथार्चयेत् ॥ ४२

ऐन्द्र्यादिदिक्षु कोणेषु पूजनीया महार्हणैः ।
क्षोभिणी द्राविणी देवी आकर्षाह्लादिमोहिनी ॥ ४३

स्तम्भिनी जृम्भिणी चैव वशङ्कर्यथ रञ्जनी ।
उन्मादिन्यर्थदात्री च सर्वसम्पत्तिपूरणी ॥ ४४

सर्वमन्त्रमयी देवी द्वन्द्वक्षयकरीरिता ।
सर्वपूर्वखिला देवि वामावर्तेन पूजयेत् ॥ ४५

सिद्धिं संपत्सुख(त्प्रियं)श्चैव दायिनी मङ्गळन्तथा ।
ततो दुःखस्य मृत्योश्च विघ्नस्य परिहारका ॥ ४६

सुन्दरीभाग्यदायिन्याविति सर्वपदान्विता ।
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यप्रदा तथा ॥ ४७

सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी ।
सर्वाधारस्वरूपा च पापघ्न्यानन्दरक्षिणी ॥ ४८

सर्वेप्सितप्रदा चेति सर्वपूर्वाखिला प्रिये ।
मध्ये मध्ये महेशानीं मूलमन्त्रैः स्समर्चयेत् ॥ ४९

चक्रमध्ये महादेवीं पूजयेत्तु विसर्पतः ।
बाह्यद्वारे यजेद्देवीं शाखयोरुभयोरपि ॥ ५०

दुर्गा गणपतिश्चैव क्षेत्रपश्च सरस्वती ।
तथा धात्री विधात्री च कोणेषूभयपार्श्वयोः ॥ ५१

एवमष्टोत्तरशतं निधियुग्मेन संयुतम् ।
पूजयित्वा यथान्यायमग्निकार्यमथाचरेत् ॥ ५२

नवरात्रे विधिरयं सप्तरात्रे तु षोडश ।
पञ्चाहे च त्र्यहे चैव नवकुम्भमुदीरितम् ॥ ५३

एकाहेऽप्येककुम्भः स्यात् क्षौरभोजनवर्जितम् ।
अथास्तमित आदित्ये कृतसन्ध्यादिको गुरुः ॥ ५४

शिष्यस्य कौतुकं बध्वा ततो वाचं विसृज्य च ।
दर्शयेन्मङ्गळान्यस्मै श्रावयेदम्बिकास्तवम् ॥ ५५

शिष्यं कूर्मपुराणोक्तैर्नामभिर्वेदसम्मतैः ।
अर्चयेदम्बुजाद्यैश्च कल्हारैः करवीरकैः ॥। ५६

महानिवेदनं कृत्वा पूजयित्वा द्विजान् बहून् ।
तथा गौरीशिवाकारं मिथुनञ्चैकमर्चयेत् ॥ ५७

बहुभिर्दक्षिणाभिश्च यथा तुष्टं भविष्यति ।
गुरुरग्निमथाधाय पूर्वोक्तेन विधानतः ॥ ५८

महागणेशमन्त्रेण हुनेदष्टोत्तरं शतम् ।
अपूपैर्गुळसम्मिश्रैर्मध्वाज्यपरिसंप्लुतैः ॥ ५९

देव्यावरणदेवीभ्यो दशाष्टौ तिस्र एव वा ।
तथा मूलेन होतव्यमष्टोत्तरसहस्रकम् ॥ ६०

पालाशकुसुमैर्होमो देवीसन्तोषकारकः ।
पायसैश्च सदापूपैः सकलैःकदळीफलैः ॥ ६१

पानसैस्त्रिमधुप्लुष्टैरष्टोत्तरसहस्रकम् ।
शतमष्टोत्तरं वापि तन्न्यूनं न समाचरेत् ॥ ६२

ततस्स्विष्टकृतं हुत्वा नैवेद्यं परिकल्प्य च ।
वेद्यां कुम्भस्य वह्नेश्च परितो बलिमर्पयेत् ॥ ६३

तथैव द्वारदेशेषु बलिमन्त्रैस्समर्चयेत् ।
अग्नौ दत्वा तु नैवेद्यं दीक्षान्ते बर्हिषो हुनेत् ॥ ६४

दीक्षितस्य व्रतं दद्यात् पयोघृतफलं मधु ।
रात्रौ जागरणं कुर्याद्देवीसूक्तं परं जपन् ॥ ६५

शृणुयाद्ब्राह्मणेभ्यश्च तत्सूक्तानि च सर्वशः ।
एवं दिवा च रात्रौ च नवसप्तत्रिपञ्च वा ॥ ६६

एवं वा देशिकः कुर्याद्देशकालबलान्वितः ।
ततः प्रभाते सम्प्राप्ते कृतपूर्वाह्णिकक्रियः ॥ ६७

पूजाहोमौ च निर्वर्त्य बलिकर्म विधाय च ।
तत्र शिष्यमुपाहूय भक्तिनम्रमकल्मषम् ॥ ६८

तद्देहन्यासजालानि कुर्वीत द्विजसत्तमः ।
ब्राह्मणैस्स समुद्धृत्य कुम्भान्मध्यादि सर्वशः ॥ ६९

अभिषिञ्चेत्ततो मूर्ध्नि देवीसूक्तं परं जपन् ।
अब्लिङ्गैः पावमानीभिस्ततो मन्त्रमुदीरयेत् ॥ ७०

ततो देवी महाभागा शिष्ये सन्निदधाति वै ।
सर्वगा सर्वतोऽप्यस्मिन् प्रसीदति महेश्वरी ॥ ७१

परिधाप्य च वासश्च चन्दनाद्यवलिप्य च ।
कुण्डले चाङ्गुलीयञ्च धारयित्वा तु मन्त्रतः ॥ ७२

न्यासजालन्तु विन्यस्य मूर्ध्नि स्पृष्ट्वा शतं जपेत् ।
ततस्तु दक्षिणे कर्णे मूलमन्त्रं समुच्चरेत् ॥ ७३

वामे चैव त्रिरुच्चार्य सम्मुखे च त्रिरुच्चरेत् ।
एवं लब्धमनुर्मन्त्री कृतार्थः स्यान्न संशयः ॥ ७४

अपवित्रः पवित्रः स्यादज्ञोपि ज्ञानवान् भवेत् ।
अकिञ्चनः कुबेरः स्यान्मूको वाचस्पतिर्भवेत् ॥ ७५

शिव एव भवेन्मन्त्री साक्षाद्देवीमयो भवेत् ।
यद्यत्कर्म करोत्येष तत्सर्वं सुकृतायते ॥ ७६

दासा भवन्ति भूपाला देवता वशगास्तथा ।
विषाण्यप्यमृतानि स्युर्भूषायन्ते महोरगाः ॥ ७७

वह्निश्शीतत्वमभ्येति खेचरो जायते तथा ।
सर्वं देव्याः प्रभावेन मङ्गळानि प्रजायते ॥ ७८

इति दीक्षाविधानं ते कथितं वरर्णिनि ।
शृणुयाद्योऽपि धर्मात्मा श्रावयेदपि चामरः ॥ ७९

सोऽपि सञ्जायते देवि दीक्षितेन समो हि सः ।

## बेरप्रतिष्ठाविधिः

संयुक्तं योगभोगाभ्यां षड्वा बेराणि कल्पयेत् ।
योगभोगौ वीरमिति पूजाहोमोत्सवेषु च ॥ १

त्रिपक्षे योगमूर्तौ तु स्नानपूजादिकं चरेत् ।
भोगे नित्योत्सवे भोगं उत्सवे वीरमुच्यते ॥ २

मूलोत्सवबलिस्नान भोगास्स्युः पञ्चपक्षके ।
इति कृत्वा तु बेराणि सिंहस्थापनमाचरेत् ॥ ३

भीमरूपं महासिंहं कृत्वा देव्यास्तु वाहनम् ।
कृताञ्जलिपुटं वीरमेकेनाकुञ्च्य जानुना ॥ ४

तत्प्रतिष्ठाविधिं वक्ष्ये संक्षेपेण महेश्वरि ।
पूर्ववन्मण्टपं कृत्वा वेद्यां बिम्बं निधापयेत् ॥ ५

पञ्चगव्येन संस्नाप्य नयनोन्मीलनं चरेत् ।
जलाधिवासं कृत्वा तु पुनः पीठे निवेशयेत् ॥ ६

नारसिंहेन बीजेन कृत्वा कौतुकबन्धनम् ।
नवकुम्भानि संस्थाप्य दिक्पालानर्चयेत्क्रमात् ॥ ७

मध्ये कुम्भं समावाह्य क्रौंकारेण महेश्वरि ।
आवाहनादिकमुद्राभिः सकलीकृत्य तं पुनः ॥ ८

अभ्यर्च्य गन्धपुष्पाद्यैः स्थण्डिलं कारयेत्पुनः ।
नवपात्राणि विन्यस्य क्षीरं दधि घृतं मधु ॥ ९

कषायञ्च क्रमेणैव मध्यादिषु निवेशयेत् ।
उष्णांभो नारिकेलांभो गन्धांभस्तीर्थवारि च ॥ १०

ततो वह्निं समादाय समिदाज्यचरून् पृथक्।
सहस्रं वा शतं वापि नृसिंहमनुना हुनेत्॥ ११

.....................कृत्वा पूर्णाहुतिं ततः ।
संपूज्य मनुनाऽनेन कलशानभिषिच्य च ॥ १२

अलङ्कृत्य विधानेन तत्वतत्वेश्वरान्न्यसेत्।
विन्यस्य मातृकां बिम्बे मूलमन्त्रेण संयुताम् ॥ १३

आधारशक्तिमन्त्रेण आधारञ्च प्रपूजयेत् ।
क्रियाशक्त्या पिण्डिकाञ्च बीजरत्नानि भूतले ॥ १४

सम्मुखं मूलबिम्बस्य स्थापनन्तु समाचरेत् ।
कुम्भे तु सिंहं संपूज्य बलिं दत्वा समन्ततः ॥ १५

कार्यं तत्तत्समुद्धृत्य मूलैरेवाभिषेचयेत् ।
महानिवेदनं कृत्वा बलिं दत्वा तदन्ततः ॥ १६

मन्त्रतन्त्रक्रियालोप शान्तये जुहुयाच्छतम् ।
ततः पूर्णाहुतिं हुत्वा क्षमस्वेति प्रणम्य च ॥ १७

करकौतुकमुत्सृज्य यथावत्पूजयेत्सदा।
गुरवे दक्षिणां दत्वा नियुग्माभञ्च काञ्चनम् ॥ १८

ऋत्विजां च सदस्यानां यथार्हं पूजयेन्नृपः।
इति प्रतिष्ठा कथिता सिंहस्याग्रस्थितस्य च ।
सर्वेषामङ्गशक्तीनां सामान्येन भवेदियम् ॥ १९

# जपविधानम्

*மந்திர ஜபத்தில் எண்ணிக்கைக்கு முதலிடம் தருவர். ருத்திராக்ஷம், பவழம், ஸ்படிகம், தாமரைவிதை முதலியவைகளால் அமைந்த மாலையை இதற்கு ஏற்பர். அக்ஷமாலை ஜபமாலை என்பர். 'அ' முதல் 'க்ஷ' வரை உள்ள 50 எழுத்துக்களின் பிரதிநிதியாக 50 ருத்ராக்ஷம் முதலியவற்றைக் கொண்டதாக அமைந்த மாலையே அக்ஷமாலையாகும்.*

अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओं औ अं अः *என 16 உயிர் எழுத்துக்கள்..* क ख ग घ ङ, च छ ज झ ञ, ट ठ ड ढ ण, त थ द ध न, प फ ब भ म *என 25 வர்க்க எழுத்துக்கள். மற்றும்* य र ल व श ष स ह ळ *என்ற எழுத்துக்கள் இவை 50 எழுத்துக்கள்.* क्ष *என்பது நடுவே*

தொங்கு மணி. இதனை எண்ணிக்கையில் பொதுவாகச் சேர்ப்பதில்லை. இந்த 50 மணிகளும் 'க்ஷ' என்ற நடுமணியும் கொண்டது அக்ஷமாலை ळ(क्ष)ह स ष श व र ल य म भ ब फ प न ध द थ त ण ढ ड ठ ट ञ झ ज छ च ङ घ ग ख क अः अं औ ओ ऐ ए ॡ ऌ ॠ ऋ ऊ उ ई इ आ अ என இவற்றைத் திருப்பிக் கொள்ள மற்றொரு 50 எண்கள்.. இவ்வெழுத்துக்களைக் கொண்டு 100 வரை எண்ணலாம். श ष स ह ळ முடிந்ததும் ळ ह स ष श எனத் தொடங்குவர்.

உயிர் - மெய்யெழுத்துக்களனைத்தையும் அனுஸ்வாரத்துடன் अं कं चं सं हं என்றே உச்சரிப்பர். வலது கையில் ஜபமாலையை ஏந்தி ஜபிப்பர். ஹோமம் பூஜை முதலியவற்றில் வலது கையும் சில சமயம் இடது வலது கைகளும் பயன்படுமாதலால் எண்ணிக்கைக்கு இந்த अं आं என்ற எழுத்துக்களை மந்த்ரத்தின் முன் இணைத்து ஜபிப்பது மாத்ருகாக்ஷர ஜபம் மாகும்.

अं श्रीमात्रे नमः, आं श्रीमात्रे नमः, इं श्रीमात्रे नमः தொடங்கி हं श्री मात्रे नमः ळं श्रीमात्रे नमः முடிந்ததும் மறுபடி ळं (क्षं) श्रीमात्रे नमः எனக் கொள்ளும்போது நூறு எண்ணப் பட்டுவிடும்.

ஆயிரக் கணக்கில் ஜபம் செய்யும்போது கைகளை அஞ்சலியாக ஹிருதயத்தில் வைத்து अं ... आं... என்று 10 தடவை ஜபிப்பர்.

இதில் மற்றொரு முறையும் உண்டு. अ விலிருந்து ळ வரை ஜபித்ததும் अं कं चं टं तं पं यं शं என எட்டைச் சொல்லி ஜபித்து மறுபடி ळं முதல் अं வரை சேர்க்க 108 எண்கள் வரும். அஷ்டோத்தர சதம் என்ற எண் முறை இது.

अं कं चं टं तं पं यं शं என எட்டும் 50 எழுத்துக்களை 8

வர்க்கங்களாக அமைத்த முறை. अं + अः = अ । क + ङ = क । च + ञ = च । ट + ण = ट । त + न = त । प + म = प । य + व = य । श + ळ = श என அவை எட்டு.

மற்றொருமுறை 128 தடவ ஜபிக்க உதவுவது. अं + ळं என 50, अं कं चं टं तं पं यं शं என எட்டு, अं आं इं ईं उं ऊं एं ऐं ओं औं अं अः என 12, शं यं पं तं टं चं कं अं என திருப்பி உச்சரித்து 8, ळं + अं என திருப்பி உச்சரித்து 50, என 128. இவ்வாறு எட்டு தடவை ஜபிக்க 1024 தடவை ஆகும். இதில் கடைசி 16ம் ஷோடசோபசார பூஜைக்கானது என்ற பாவனே. இது முதலில் நடைமுறைக்குக் கடினமானது. பழகப் பழக எளிதாகும்.

உடலசைவின்றி உள்ளத்தால் ஜபிக்கப் பெரியோர்கள் கண்ட வழி இது. பழகப்பழக மிக எளிது. இனியதும் கூட. தேவி அக்ஷர வடிவினள்.. சொல்லுலகின் தாய் இந்த எழுத்துக்கள் என்பதால் அழகிய தாய் என மாத்ருகா என்பர். மாத்ருகா வர்ண ரூபிணீ எனத் தேவிக்கு மிகப் பிடித்தமான பெயர்.

மந்திரங்கள் அனைத்தும் அக்ஷர வடிவம்தானே. மந்திரத்தின் ஒவ்வொரு எழுத்திற்கும் தனி ஆற்றலும் பெயரும் அதனால் குறிப்பிடப் பெறுகிற தேவதையும் உண்டு என்பதை மந்திர நிகண்டுக்களில் காணலாம். ஸௌபாக்ய சிந்தாமணியின் ஒரு எழுத்துப் ப்ரதியில் இந்தக் குறிப்புள்ளது.

(१) अं (२) आं (३) इं(४) ईं (५) उं (६) ऊं (७) ऋं (८) ॠं (९) लृं (१०) ॡं (११) एं (१२) ऐं (१३) ओं (१४) औं (१५) अं (१६) अः - कं (१७) खं (१८) गं (१९) घं (२०) ङं (२१) चं (२२) छं (२३) जं (२४) झं (२५) ञं (२६) टं (२७) ठं (२८) डं (२९) ढं (३०) णं (३१) तं (३२)थं (३३) दं (३४) धं (३५) नं (३६) पं (३७) फं (३८) बं (३९) भं (४०) मं (४१) यं (४२) रं (४३) लं (४४) वं

(४५) शं (४६) षं (४७) सं (४८) हं (४९) ळं (५०))(अं (५१) कं (५२) चं (५३) टं (५४) तं (५५) पं (५६) यं (५७) शं (५८))(अं (५९) आं (६०) इं (६१) ईं (६२) उं (६३) ऊं (६४) एं (६५) ऐं (६६) ओं (६७) औं (६८) अं (६९) अः (७०)) शं (७१) यं (७२) पं (७३) तं (७४) टं (७५) चं (७६) कं (७७) अं (७८)(ळं (७९) हं (८०) सं (८१) षं (८२) शं (८३) वं (८४) लं (८५) रं (८६) यं (८७) मं (८८) भं (८९) बं (९०) फं (९१) पं (९२) नं (९३) धं (९४) दं (९५) थं (९६) तं (९७) णं (९८) ढं (९९) डं (१००) ठं (१०१) टं (१०१) ञं (१०३) झं (१०४) जं (१०५) छं (१०६) चं (१०७) ङं (१०८) घं (१०९) गं (११०) खं (१११) कं (११२) अः (११३) अं (११४) औं (११५) ओं (११६) ऐं (११७) एं (११८) ॡं (११९) ऌं (१२०) ॠं (१२१) ऋं (१२२) ऊं (१२३) उं (१२४) ईं (१२५) इं (१२६) आं (१२७) अं)(१२८)

*(தஞ்சை காமாக்ஷி அம்பாள் கோவில் ஸ்தானிகர் ஸ்ரீ சாம்பசிவ சாஸ்திரிகள் மதுரை ஸ்ரீ அண்ணாஸ்வாமி யோகியாரிடமிருந்து இம்முறையின் உபதேசம் பெற்றுள்ளார் என்று குறிப்புள்ளது.*

## स्तोत्राणि

### श्रीपरशिवप्रोक्तं

# श्रीसौभाग्यहृदयम्

तन्महः परमं नौमि कृत्यैः पञ्चभिरङ्कितम् ।
अशेषविश्वाभेदात्मपूर्णाहन्तात्मकं शिवम् ॥ १

त्रिधा विभक्तं यद्वस्तु स्तोता स्तुत्यं स्तुतिः क्रमात् ।
एकस्मै महते तस्मै नमः सकलचक्षुषे ॥ २

स्मरामि तां परामम्बां च पश्यन्त्यादिक्रमाश्रयाम् ।
नानाविधरसाकारां महानुभवरूपिणीम् ॥ ३

देशकालपदार्थात्मा यद्यद्वस्तु यथा तथा ।
तत्तद्रूपेण या भाति तां श्रये संविदां कलाम् ॥ ४

मूलादिबिलपर्यन्तं महात्रिपुरसुन्दरी ।
या तनुस्ते तटित्प्रख्यां तां भजे भवशातनीम् ॥ ५

मूले कनकपद्माभं हृदि विद्युच्छटोज्ज्वलम् ।
आज्ञायां चन्द्रसङ्काशं महस्तव महेश्वरि ॥ ६

प्रसृतामृतरश्म्यौघसन्तर्पित चराचराम् ।
भवानीं भवशान्त्यै तां भावयाम्यमृतेश्वरीम् ॥ ७

वर्णः कला मनुस्तत्त्वं पदं भुवनमेव च ।
इत्यध्वषट्कं देवेशि भाति त्वयि चिदात्मनि ॥ ८

अनाश्रितादि कालाग्निरुद्रान्तं चित्रमद्भुतम् ।
उन्मीलयसि मातस्त्वं प्रकाशवपुषि त्वयि ॥ ९

नेत्रादि जालकोपान्तैर्हृत्पद्मासनलीलया ।
वारं वारं त्वया देवि रूपादि मधु सेव्यते ॥ १०

संविद्देव्याः समासाद्य हृदयादमृतासवम् ।
योगिनः प्रेरयन्त्यार्ये त्वत्पूजार्थं हि सर्वदा ॥ ११

नाहमिष्टमनिष्टं वा अन्यैतद्वासनादि च ।
यदिदं भासते देवि नामरूपक्रियात्मकम् ॥ १२

प्रकाशवपुषस्त्वन्तः तत्सर्वं नातिरिच्यते ।
सौभाग्यहृदयं गुह्यं शिवानन्देन योगिना ।
समाराधनप्रीत्यर्थे स्मृतं सकलकामदन् ।। १३

इति विरचितमेतत्त्रैपुरं स्तोत्रमाप्तं
प्रकटितपरमार्थं योगिवर्योपजुष्टम् ।
सकलदुरितरोगध्वंसनानन्यकार्यं
प्रतिजयसुविधानं जप्यतां भक्तियुक्तैः ।। १४

—*—

श्रीशङ्करभगवत्पादविरचितं

## श्रीकामाक्षीस्तोत्रम्

कल्पानोकह पुष्पजालविलसन्नीलालकां मातृकां
कान्तां कञ्जदलेक्षणां कलिमलप्रध्वंसिनीं कालिकाम् ।
काञ्चीनूपुरहारदाम(हीर)सुभगां काञ्चीपुरीनायिकां
कामाक्षीं करिकुम्भसन्निभकुचां वन्दे महेशप्रियाम् ।। १

काशाभांशुकभासुरां (सन्निभां) प्रविलसत्कोशातकी सन्निभां
चन्द्रार्कानल लोचनां सुरुचिरालङ्कार भूषोज्ज्वलाम् ।
ब्रह्मश्रीपतिवासवादिमुनिभिः संसेवितांघ्रिद्वयां
कामाक्षीं गजराजमन्दगमनां वन्दे महेशप्रियाम् ।। २

ऐं क्लीं सौरि(मि)ति यां वदन्ति मुनयस्तत्त्वार्थरूपाङ्कुरां(परां)
वाचा(माया)मादिमकारणं हृदि सदा ध्यायन्ति यां योगिनः (नीम्)।
बालां फालविलोचनां नवजपावर्णां सुषुम्नाश्रि(स्थि)तां
कामाक्षीं कलितावतंस(तार) सुभगां वन्दे महेशप्रियाम् ।। ३

यत्पादाम्बुजरेणुलेशमनिशं लब्ध्वा विधत्ते विधिः
विश्वं तत्परिपाति विष्णुरखिलं यस्याः प्रसादाच्चिरम् ।
रुद्रः संहरति क्षणात्तदखिलं यन्मायया मोहितः
कामाक्षीमतिचित्रचारुचरितां वन्दे महेशप्रियाम् ।। ४

सूक्ष्मात्सूक्ष्मतरां सुलक्षिततनुं क्षान्ताक्षरैर्ल(राल)क्षितां
वीक्षा शिक्षित राक्षसां त्रिभुवनक्षेमंकरीमक्षयाम् ।
साक्षाल्लक्षणलक्षिताक्षरमयीं दाक्षायणीं साक्षिणीं
कामाक्षीं शुभलक्षणैः सुललितां वन्दे महेशप्रियाम् ।। ५

ओंकाराङ्गणदीपिकां उपनिषत्प्रासाद पारावतीं
आम्नायाम्बुधिचन्द्रिकामघतमःप्रध्वंसहंसप्रभाम् ।
काञ्ची पट्टण पञ्जरान्तरशुकीं कारुण्यकल्लोलिनीं
कामाक्षीं शिवकामराजमहिषीं वन्दे महेशप्रियाम् ।। ६

ह्रींकारात्मकवर्णमातृपठने ह्रींह्रीं (नादैन्द्रीं)श्रियं तन्वतीं
चिन्मात्रां भुवनेश्वरीमनुदिनं भिक्षाप्रदानक्षमाम् ।
विश्वाघौघ निवारिणीं विमलिनीं विश्वम्भरां मातृकां
कामाक्षीं परिपूर्णचन्द्रवदनां वन्दे महेशप्रियाम् ।। ७

वाग्देवीमिति यां वदन्ति मुनयः क्षीराब्धिकन्यामिति
क्षोणीभृत्तनयामिति श्रुतिगिरो यामामनन्ति स्फुटम् ।
एकानेकफलप्रदां बहुविधाकारां तनुं (रास्तनूः) तन्वतीं
कामाक्षीं अमृतान्नपूर्णकलशां (सकलार्तिभञ्जनपरां) वन्दे
महेशप्रियाम् ।।८

मायामादिमकारणं त्रिजगतामाराधिताङ्घ्रिद्वयां
आनन्दामृतवारिराशिनिलयां विद्यां विपश्चिद्धियाम् ।

मायामानुषरूपिणीं मणिलसन्मध्यां महामातृकां
कामाक्षीं करिराजमन्दगमनां वन्दे महेशप्रियाम् ॥ (९)

कान्ता कामदुघा करीन्द्रगमना कामारिवामाङ्कगा
कल्याणी कलितावतारसुभगा कस्तूरिकाचर्चिता ।
कम्पातीररसालमूलनिलया कारुण्यकल्लोलिनी
कल्याणानि करोतु मे भगवती काञ्चीपुरीदेवता ॥ १०

—*—

## श्रीकामाक्षीस्तोत्रम्

काञ्चीनूपुररत्नकङ्कणलसत्केयूरहारोज्ज्वलां
काश्मीरारुणकञ्चुकञ्चितकुचां कस्तूरिकाचर्चिताम् ।
कल्हाराञ्चितकल्पकोज्ज्वलमुखीं कारुण्यकल्लोलिनीं
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ १

कामारातिमनःप्रियां कमलभूसेव्यां रमाराधिताम्
कन्दर्पाधिकदर्पदानविलसत्सौन्दर्यदीपाङ्कुराम् ।
कीरालापविनोदिनीं भगवतीं काम्यप्रदानव्रतां
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ २

कादम्बप्रमदाविलासगमनां कल्याणकाञ्चीरवां
कल्याणावहपादपद्मयुगलां कान्त्या ज्वलन्तीं शुभाम् ।
कल्याणाचलकार्मुकप्रियतमां कादम्बमालाश्रयां
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ ३

गन्धर्वामरसिद्धचारणवधूगेयापदानाञ्चितां
गौरीं कुङ्कुमपङ्कपङ्कितकुच द्वन्द्वाभिरामां शुभाम् ।
गम्भीरस्मितविभ्रमाङ्कितमुखीं गङ्गाधरालिङ्गितां
कामाक्षीं कलयामि कल्पलतिकां काञ्चीपुरीदेवताम् ॥ ४

* * *

वरहूरग्रामाभिजननारायणशास्त्रिविरचितं

तञ्जापुरीविराजमानहेमकामाक्षीपरं

# कामाक्षीशतकम्

कल्याणाचलकार्मुकसुकृतविपाकात्मदेहसौन्दर्याम् ।
कल्याणबुद्धिदात्रीं कलङ्करहितां नमामि कामाक्षीम् ॥ १

पूर्वं काञ्चीनगरात् तञ्जापुरपश्चिमप्रतोलीस्थे ।
देवालये विहरते ये देवी तां नमामि कामाक्षीम् ॥ २

कनकमयदिव्यगात्रीं कनकमयांभोजपीठमध्यगतम् ।
कांक्षितफलप्रदात्रीं कमनीयरुचं नमामि कामाक्षीम् ॥ ३

पूर्वं तुलजमहीपतिनिर्मापितदेवमन्दिरे सुभगे ।
रत्नमयमण्टपान्तर्भागस्थां तां नमामि कामाक्षीम् ॥ ४

संपत्सुतसुखदीर्घायुष्य कलाऽऽरोग्यशत्रुदलनादीन् ।
यच्छति वरान् मुदा या भक्तेभ्यस्तां नमामि कामाक्षीम् ॥५

आसन्ने नवरात्रे बहुविधभक्ष्यादियुक्तशाल्यन्नैः ।
स्वावासे सुहितीकृतसर्वजनौघां नमामि कामाक्षीम् ॥ ६

विद्युत्प्रदीपनिवहैर्विद्योतितमध्यमण्टपाभोगाम् ।
विद्युल्लताविजेतृस्वावयवां तां नमामि कामाक्षीम् ॥ ७

गाङ्गेयस्य सवित्रीं गङ्गाझरतुल्यवाङ्मयाधात्रीम् ।
सृष्टिस्थितिलयकर्त्रीं जगतां देवीं नमामि कामाक्षीम् ॥ ८

चण्डकरशीतरोचिर्लोचनयुगळेन चण्डसौम्यरुचिम् ।
आश्चर्यवस्तुनोऽप्याश्चर्यकरीं तां नमामि कामाक्षीम् ॥ ९

मञ्जुळपादरणन्मणिमञ्जीरनिनादविवशहंसौघाम् ।
कन्दर्पकार्मुकजयिभ्रूयुगशोभां नमामि कामाक्षीम् ॥ १०

गङ्गावर्तसदृक्षस्वीयातिगभीरनाभिकुहररुचिम् ।
नवरत्नखचितकाञ्चीलसितनितम्बां नमामि कामाक्षीम् ॥ ११

अरविन्दजैत्रचरणां कुरुविन्दमदापहौष्ठदळकान्तिम् ।
कुन्दमुकुळावलेपस्पर्धिरदां तां नमामि कामाक्षीम् ॥ १२

मधुमधुरवचनधाटीं सौजन्यप्रमुखसुगुणमणिपेटीम् ।
संश्रितकदम्बवाटीं करधृतवीटीं नमामि कामाक्षीम् ॥ १३

द्वैपायनादिमुनिगणवन्दितपादाम्बुजातमणिपीठाम् ।
तापत्रयादिशमनीं पापविदूरां नमामि कामाक्षीम् ॥ १४

आर्यां तुर्यपुमर्थप्रदानबद्धस्पृहां प्रपन्नौघे ।
भक्ताकलितसपर्याविहितसुचर्यां नमामि कामाक्षीम् ॥ १५

हरिहरमुखसुरविनुतां हस्तास्याङ्घ्र्यक्षिविजितसरसिरुहाम् ।
हारोल्लसितोरोजां हरसम्मददां नमामि कामाक्षीम् ॥ १६

निगमान्तवेद्यरूपां निरन्तरायस्वपादभजनकृताम् ।
नित्यानन्दपदार्पण तत्परहृदयां नमामि कामाक्षीम् ॥ १७

महिषासुरसंहर्त्रीं मान्यगुणौघां मतङ्गकुलजाताम् ।
मेचकनिजतनुशोभां महेशजायां नमामि कामाक्षीम् ॥ १८

वन्द्यां सिद्धसुरासुरभुजङ्गगन्धर्वयक्षसाध्याद्यैः ।
वरदानबद्धकङ्कणहस्तसरोजां नमामि कामाक्षीम् ॥ १९

करुणारसार्द्रहृदयां सुरनरनिवहेऽरुणारुणाङ्गरुचम् ।
दुर्दान्तदैत्यनिचये कुलिशकठोरां नमामि कामाक्षीम् ॥ २०

सदसत्संशयगोचरनिजावलग्नां पृथून्नतोरोजाम् ।
नासामौक्तिकरम्याधररदपङ्क्तिं नमामि कामाक्षीम् ॥ २१

सात्विकजननेदिष्ठां राजसजनचित्तकमलदूरस्थाम् ।
तामसजनातिदूरां भक्त्या सुलभां नमामि कामाक्षीम् ॥ २२

स्वोरुजितवरशिलीन्ध्रां स्वीकृतकारुण्यपूरनीरन्ध्राम् ।
निलयीकृतजालन्ध्रां सौषुम्ने पथि नमामि कामाक्षीम् ॥ २३

कुवलयतमालनीलां कुवलयरक्षैकदीक्षितस्वान्ताम् ।
शरणागतजनभरणां कनकाभरणां नमामि कामाक्षीम् ॥ २४

विख्यातविमलकीर्तिं विश्रुतसकलागमस्फुरन्मूर्तिम् ।
विदळितनिखिलनतार्तिं कृतवरपूर्तिं नमामि कामाक्षीम् ॥२५

विन्ध्यवनवासलोलां विन्ध्यगिरीन्द्रावलेपहरविनुताम् ।
विनयप्रदां विभवदां विज्ञानवर्तीं नमामि कामाक्षीम् ॥ २६

ढक्कावाद्यनिनादप्रियहरजायां समन्दहसितेक्षाम् ।
कुम्भीन्द्रकुम्भदम्भ स्तम्भिकुचां तां नमामि कामाक्षीम् ॥२७

बाणाधिदेवतां तां ब्रह्मपुरोगादिशक्तिजनयित्रीम् ।
बिन्द्वादितत्वनिलयां बालेन्दुधरां नमामि कामाक्षीम् ॥ २८

लाक्षार्द्रपादकमलां लब्धक्रमभक्तबृन्दहृदयगताम् ।
लज्जावर्तीं च पुरभिल्लास्यविलोलां नमामि कामाक्षीम् ॥२९

शुक्लासनस्थितिमर्तीं शुद्धिददां शुद्धभावभजनकृताम् ।
शोकापनोदचतुरस्वनामभजनां नमामि कामाक्षीम् ॥ ३०

षट्कोणायतनस्थां षडध्वभिदुरां षडास्यसूनुयुताम् ।
षट्शक्तिरूपिणीं तां षडूर्मिरहितां नमामि कामाक्षीम् ॥ ३१

सर्ववरप्रदहस्तां संसारगदार्तमनुजसुरभिषजम् ।
सावित्रीरूपतनुं सर्वज्ञात्रीं नमामि कामाक्षीम् ।। ३२

प्रालेयाचलतनयां मूले कल्पद्रुमस्य कृतवसतिम् ।
कालेयकलुषहर्त्रीं तां लेखनतां नमामि कामाक्षीम् ।। ३३

ह्रींकारमध्यनिलयां ह्रींकारगुहाविहाररतसिंहीम् ।
ह्रींकारवनमयूरीं ह्रींपदजप्यां नमामि कामाक्षीम् ।। ३४

दीनजनावननिरतां दिक्कालाद्यैरमेयनिजरूपाम् ।
दिवसक्षपादिकर्त्रीं दिव्यपदस्थां नमामि कामाक्षीम् ।। ३५

राकाचन्द्रनिभास्यां रतिपतिविद्विट्प्रियां रसालम्बाम् ।
रत्नाम्बरपरिधानां रम्भोरूं तां नमामि कामाक्षीम् ।। ३६

मदशेषबन्धुजनतारूपां मच्चेतनाप्रबोधकरीम्।
मन्मातरं ममानुग्रहकृतिदक्षां नमामि कामाक्षीम् ।। ३७

मुनिजनमृग्यां मूलाधारगतां निखिलदेवगणमुख्याम्।
मिथ्याज्ञानदवाग्निं मुक्तिविधात्रीं नमामि कामाक्षीम् ।। ३८

यमनियमादिकयोग ज्ञेयतनुं यज्ञरूपिणीं यजताम् ।
यमिहृत्सरसिजभृङ्गीं यमभयहर्त्रीं नमामि कामाक्षीम् ।। ३९

चारुतरामलचरितां चञ्चलदृक्कोणकलितनिजसृष्टिम् ।
चार्वाकजनविदूरां चक्रान्तः स्थां नमामि कामाक्षीम् ।।४०

शशधरकिशोरनिटिलां शम्भुमनःप्रीणनातिचतुरकलाम् ।
शम्बरविहरत्केतन जीवनभिषजं नमामि कामाक्षीम् ।। ४१

नित्यचिदानन्दतनुं निर्मलनिजचित्तसंस्फुरत्करुणाम् ।
निरुपमनिजलावण्यां, नित्याह्लादां नमामि कामाक्षीम् ।।४२

मधुदितिजमथनभगिनीं ममताहन्तादिनिरसनपटिष्ठाम् ।
मुक्ताहारतपस्यन्मुमुक्षुमृग्यां नमामि कामाक्षीम् ॥ ४३

यक्षेशप्रियदयितां यष्टव्यां यमिहृदब्जरोलम्बाम् ।
यजमानरूपिणीं तां यज्ञेशित्रीं नमामि कामाक्षीम् ॥ ४४

आशावल्लभमौळि स्फुरन्मणिद्योतमानपदपीठाम् ।
संसृत्याशाव्रततिच्छेदनपरशुं नमामि कामाक्षीम् ॥ ४५

ईषत्कपोलमण्डलविलसत्कमनीयकनकताटङ्काम् ।
मणिमुक्तामयवाळी रम्यश्रवणां नमामि कामाक्षीम् ॥ ४६

कनकद्रवानुकारि क्षौमाम्बरसंवृतोरुजघनभराम् ।
वृषवाहमोहकारक नाभीकुहरां नमामि कामाक्षीम् ॥ ४७

सत्पथगानां सुलभां सत्पथसञ्चारिदेवनुतचरिताम्।
कलभाध्येतव्यगतां कलभावयुतां नमामि कामाक्षीम् ॥ ४८

विघ्ननिवारकमादौ स्वपुरःप्राचीमुखं गणाधीशम् ।
संस्थाप्य भक्तवाञ्छापूर्तिविधात्रीं नमामि कामाक्षीम् ॥ ४९

स्वसुतगजाननपूजनपूर्वकमादौ स्वपूजनोद्युक्तान् ।
भक्तान् सदयदृगन्तैर्मदयन्तीं तां नमामि कामाक्षीम् ॥ ५०

बालां तमालनीलां तर्काविषयां तपस्विजनवेद्याम् ।
तारेशचूडदयितां तीव्राज्ञां तां नमामि कामाक्षीम् ॥ ५१

शूलधनुश्शरखड्गसुदर्शनदरचर्मपरिघशोभिकराम् ।
शिञ्जानचरणभूषां शैलादीड्यां नमामि कामाक्षीम् ॥ ५२

दुर्दान्तरक्तबीजासुरसंहृतितोषितामरौघनताम् ।
शुद्धान्तरङ्गभक्तैः ध्येयां हृदये नमामि कामाक्षीम् ॥ ५३

तरळतरदीर्घनयनां तातीभवदतुलवीर्यगिरिवर्याम् ।
ताळीदळादिदीव्यत्कर्णाभरणां नमामि कामाक्षीम् ॥ ५४

शम्बररिपुपितृसहजामम्बरवनितौघवन्दिताङ्घ्रियुगाम् ।
अम्बुजविजयिनिजास्यामम्बुपतीड्यां नमामि कामाक्षीम् ॥५५

मणिमयकङ्कणकान्तिस्फुरितामलहस्तसरसिजोल्लसिताम् ।
मानुषजन्मकृतार्थीकरणधृताशां नमामि कामाक्षीम् ॥ ५६

व्याधावाधावपि सति परिहृतबाधां स्वनामकीर्तनतः ।
मुनिगणहृदयावासां महनीयगुणां नमामि कामाक्षीम् ॥ ५७

मह्यम्बुजातवेदोऽम्बरमारुतनित्यवासरसिकहृदम् ।
मोहान्धकारनिरसनचण्डघृणिं तां नमामि कामाक्षीम् ॥ ५८

खगकेतनादिविनुतां खट्वाङ्गशयान्तरङ्गहितदयिताम् ।
खातीतां च खलाशयजनदुर्ज्ञेयां नमामि कामाक्षीम् ॥ ५९

माहेन्द्र्या वाराह्या वैष्णव्या ब्रह्मजाययेशान्या ।
चामुण्डया च सहितां परशिवशक्तिं नमामि कामाक्षीम् ॥६०

दुर्धरदैत्यनिबर्हणनिजतनुसम्भूतबहुविधाकाराम् ।
दुःखौघशमनकर्त्रीं दुरितहरां तां नमामि कामाक्षीम् ॥ ६१

वितरणनिशान्तकरधृतवीणामेणाङ्कविजयिमुखकमलाम् ।
कुसुमितकदम्बवाटीकलितविहारां नमामि कामाक्षीम् ॥ ६२

हंसवरैः परिकल्पित पदपङ्कजपूजनां महेशानीम् ।
हंसमदापहगमनां हरिहृच्छयदां नमामि कामाक्षीम् ॥ ६३

हरिहयमुखसुरसेव्यां हतरिपुवर्गां कराब्जधृतकीराम् ।
हालाहलाशिदयितां हालालोलां नमामि कामाक्षीम् ॥ ६४

नयनजितकृष्णसारां नवनिधिनाथार्च्यमानपदकमलाम्।
नम्रार्तिनाशनचणां नवाङ्करागां नमामि कामाक्षीम् ॥ ६५

लङ्कापतिरिपुविनुतां लम्बोदरसूनुलालनैकपराम् ।
लालितभक्तसमूहामभीष्टदानैर्नमामि कामाक्षीम् ॥ ६६

वरहूग्रामनिवासि द्विजनारायणनिषेविताङ्घ्रियुगाम् ।
सज्जनसमूहसदयां हैमवतीं तां नमामि कामाक्षीम् ॥ ६७

निर्विक्रियां निरुत्तम गुणगणमणिपेटिकां निराकाराम् ।
निर्वासनां निरञ्जनपददात्रीं तां नमामि कामाक्षीम् ॥ ६८

लक्ष्मीवन्द्यपदाब्जां लयरहितां लीलया जगत्कर्त्रीम् ।
लावण्यलळितमूर्तिं लास्यैकपरां नमामि कामाक्षीम् ॥ ६९

सम्यङ्निरुध्य चेतः सुतरां विनिगृह्य दश च करणानि ।
सततं यतिजनसङ्घैः विचिन्त्यमानां नमामि कामाक्षीम् ॥७०

भवती जननी जगतां भवतीति विचिन्त्य निखिलमनुजगणैः
संसेवितपदकमलामनिशं भक्त्या नमामि कामाक्षीम् ॥ ७१

पञ्चदशाक्षरमन्त्रप्रकटितविद्याखिलेष्टनिजशक्तिम् ।
पूषाग्नीन्दुसमाभां पुरहरजायां नमामि कामाक्षीम् ॥ ७२

नेत्रविलासे तरळां मध्ये विरळां महेश्वरे सरळाम्।
गरळायितामभक्ते भक्ते सरसां(ळां)नमामि कामाक्षीम् ॥७३

नादान्तनामरूपां नाशितसर्वाघसंहतिं नमताम् ।
नूतनविचित्रलीलां नगेन्द्रपुत्रीं नमामि कामाक्षीम् ॥ ७४

अलयां श्रुतिगणनिलयां नवरत्नविराजमानसद्वलयाम् ।
सुरपतिमुखसुरसदयां हिमगिरितनयां नमामि कामाक्षीम् ॥७५

नवतरळहारभूषाभिरामतनुवल्लरीलसत्काञ्चीम् ।
नाकाधिपतिस्तुतपदकमलां देवीं नमामि कामाक्षीम् ॥ ७६

नानावाद्यनिनादश्रवणागतभक्तसङ्घविनुतपदाम् ।
नागाभरणहृदब्जोल्लासनभानुं नमामि कामाक्षीम् ॥ ७७

देवीं दयारसार्द्रां दूरीकृत भक्तसङ्घ दुरितौघाम् ।
दुष्कीर्ति पङ्कनिरसनसत्तीर्थमयीं नमामि कामाक्षीम् ॥ ७८

उद्यद्भानुसहस्रोपमेयकान्तिच्छटोल्लसन्मकुटाम् ।
बिम्बफलोपमरदनच्छदभासां तां नमामि कामाक्षीम् ॥ ७९

ह्रीङ्कारपद्मनिलयां ह्रीङ्कारजपैकचित्तकरुणाढ्याम् ।
ह्रीङ्कारवाच्यरूपां ह्रीङ्कारतनुं नमामि कामाक्षीम् ॥ ८०

सुम्भनिसुम्भप्रमुखासुरसिन्धुरसङ्घसंहृतौ सिंहीम् ।
संसृतिसिन्धुनिमग्नप्रपन्ननौकां नमामि कामाक्षीम् ॥ ८१

मन्दस्मितमुग्धास्यां मन्थरगमनां मृगेन्द्रवरवाहाम् ।
मातङ्गान्वयभवनप्रदीपकलिकां नमामि कामाक्षीम् ॥ ८२

वाग्दूरदिव्यचरितां वारिजनेत्रीं वरेण्यसच्छीलाम् ।
वन्द्यां सर्वचराचरनिवहैर्देवीं नमामि कामाक्षीम् ॥ ८३

गान्धर्ववेदरसिकां गीर्वाणगणस्तुतस्वचारित्राम् ।
गम्भीरनाभिकुहरां गिरीन्द्र पुत्रीं नमामि कामाक्षीम् ॥ ८४

सत्यं ज्ञानमितीमे निगमास्सर्वे गृणन्ति यद्रूपम् ।
सद्गुरुकरुणालभ्यां सन्मतिदात्रीं नमामि कामाक्षीम् ॥ ८५

विद्यादाने शारदशशिशुभ्रां भूतिदापने शोणाम् ।
शत्रुविदळने श्यामामिति त्रिधास्थां नमामि कामाक्षीम् ॥ ८६

प्रतिभृगुवारं सर्वैर्वनितानिवहैस्समर्चिताङ्घ्रियुगाम् ।
वैदिकवर्यैस्सूक्तैरपीड्यमानां नमामि कामाक्षीम् ॥ ८७

रम्भादिदिव्यवनितानर्तनवीक्षासुनिर्वृतस्वान्ताम् ।
कुम्भीन्द्रवदनषण्मुखबालकसहितां नमामि कामाक्षीम् ॥ ८८

कन्दकुलविजयिकैश्यां कुरुविन्दमणिप्रभारुणावयवाम् ।
कुन्दरदामिन्दुमुखीमरविन्दाक्षीं नमामि कामाक्षीम् ॥ ७९

धरणिमयीं तरणिमयीमिन्दुमयीं गगनसलिलपवनमयीम् ।
वह्निमयीं होतृमयीं बिन्दुमयीं तां नमामि कामाक्षीम् ॥ ९०

कलिकलुषनाशकर्त्रीं कर्णान्तायतविशालनेत्रां ताम् ।
कमलाङ्कचूडदयितां करधृतकमलां नमामि कामाक्षीम् ॥ ९१

नवघुसृणारुणवर्णां नतजनसंरक्षणैकपरचित्ताम् ।
नवयोगीडितपादां नवनवलीलां नमामि कामाक्षीम् ॥ ९२

सामाद्युपायचतुरां सोमार्धविराजमाननिटिलतटाम् ।
कामेश्वराङ्कनिलयां कांक्षितफलदां नमामि कामाक्षीम् ॥ ९३

भाषालक्ष्मीकृतनिजपदशुश्रूषां वृषादिसुरवन्द्याम् ।
वृषवरवाहतपःफलभूतनिजाङ्गीं नमामि कामाक्षीम् ॥ ९४

चण्डादिदुष्टदानवसंहृतिकरणेन सर्वदेवगणान् ।
भीतिरहितान् दधानां जगदीशित्रीं नमामि कामाक्षीम् ॥९५

नारायणीं च मलयाचलवासपरां च राजराजेशीम् ।
तुरगारूढामाद्यां वनदुर्गां भैरवीं महाकाळीम् ॥ ९६

कामेश्वरीं च ललितां श्रीविद्यां कामकोटिपीठगताम् ।
भुवनेश्वरीं च बालां मातङ्गीं चण्डिकां च चामुण्डाम् ॥ ९७

शिवदूतीं भ्रमराम्बां दुर्गां विजयां जयां च कृष्णां च ।
त्रिपुरेश्वरीं च बगलां वाणीं श्रीश्यामळां च कमलां च ॥९८

कुलनाथामचलसुतां देवीं श्रीमहिषमर्दिनीं शक्तिम् ।
परदेवतां मृडानीं सकलजगन्मातरं महामायाम् ॥ ९९

शाकम्भरीं च नकुलां कुमुदां श्रीत्रिपुरसुन्दरीदेवीम् ।
नन्दसुतां माधविकां विन्ध्यवनेशीं नमामि कामाक्षीम् ॥ १००

श्रीचक्रराजनवपर्वगदेवताभिः
श्री श्री पुरस्थनवसालगदेवताभिः ।
श्रीयाकिनीप्रभृतिसिद्धिददेवताभि-
श्चासेवितां हृदि भजे ललितां पराम्बाम् ॥ १०१

—*—

पश्याक्षियुग्म देवीरूपं जिह्वेऽपि नाम वद देव्याः ।
श्रवण शृणु गुणगणमपि, नासे त्वं जिघ्र तत्सुमामोदम् ॥१

कर कुरु पदपरिचर्यां स्मर चित्ताचिन्त्यरूपमम्बायाः ।
पाद प्रदक्षिणविधिं कुरु हे मूर्धन् नमाम्बिकां भक्त्या ॥ २

हे मित्रेन्द्रियनिवह, शृणुयाश्चेन्मद्वचोऽद्य विश्वस्य ।
तर्हि त्वं कामाक्ष्याः सायुज्यं प्राप्नुया न सन्देहः ॥ ३

प्रापश्चिकेषु विषयेष्वतिसक्तं स्या यदाऽतिलोभेन ।
भविता तदा ध्रुवं ते पुनरपि जन्मादि तद्भजैतां त्वम् ॥ ४

कामाक्षीनतिशतकं वरहूग्रामस्थधरणिदेवेन ।
विरचितमेतद्भक्त्या पठतां कुर्याच्छुभं नित्यम् ॥ ५

(गोपालकृष्णवेङ्कटरामश्रीचन्द्रशेखरार्याश्च ।
श्रीधरगणपतिशङ्करवरसुब्रह्मण्यदेवराजाश्च ॥

श्रीकामकोटिनामा नारायणनीलकण्ठरामार्याः ।
श्रीबालकृष्णनामा सोऽपि नटेशस्सदक्षिणामूर्तिः ॥ २

पञ्चापगेशनामेत्येते विप्रा हि मन्दिरे देव्याः ।
देवीषोडशपूजोपचारकृत्या कृतार्थजन्मानः ॥ ३

देवीपूजकवर्यान् देवीनयनान्तपातधन्यतमान् ।
धरणीसुरानपीमान् धार्मिकचित्तान् नमस्यामि ॥) ४

—*—

आम्रारण्य (மாங்காடு) विराजत्

## ॥ तपःकामाक्षीस्तोत्रम्

आम्रारण्यबिले तपः स्थितवतीं पञ्चाग्निमध्यस्थितां
हस्तेनोर्ध्वशिरोऽपरेण हृदयं स्पृष्ट्वा जटाधारिणीम् ।
कामाक्षीं भज साङ्घ्रि नाभिसुषमामेकाग्र्य पादस्थितां
योगध्यान परायणीं त्रिभुवनक्षेमंकरीं भार्गवीम् ॥

पश्चात् द्विभाग परिक्लृप्त जटाकलापां
प्रत्यग्रवल्कलधरां भसितत्रिपुण्ड्राम् ।
पञ्चाक्षरीं जपपटीं दधतीं च मालां
पञ्चाग्निमध्यनिलयां प्रणमामि गौरीम् ॥

# श्रीदेवीसहस्राक्षरमाला

ओं श्रीं हंसः ओं नमो भगवति अक्षोभ्ये निक्षकर्णि राक्षसि क्षपणे क्षपे पिङ्गलाक्षि अक्षये अक्षमे मूले लोले लूते लुब्धे(ब्दे) लुके लङ्केश्वरि लालसे विमले हुताशनि विशालाक्षि हुङ्कारि

बडबामुखि हा हा रा महाक्रोधे क्रोधिनि खरांसे सर्वज्ञे कराले तारे हृष्टे हृल्लेखे दशकन्धरे सारसि रससंग्राहिणि तरलजङ्घे रक्ताक्षि विद्युज्जिह्वे तरङ्गिणि मेघनादे प्रचण्डोग्रे कालकण्ठि बलप्रमदे चम्पे चम्पावलि प्रपञ्चप्रलयान्तकि पिचुवक्त्रे विशालाक्षि पिशिताशनलोलुये परमनीवानरि पाशवि विकृतास्ये वायुवेगे कुक्षिविकृते विश्वरूपिणि (धू)मजिह्वे जयन्ति जदुर्जयि याम...न्तकि बिडालि रेवति पूजनाविजये अनन्ते किन्दिनि चण्डे अकिदय्ये धार्य.... युगान्ते अणिमे लघिमे महिमे ईशित्वे वशित्वे प्राकाम्ये भुक्तिदे इच्छे रसेन्द्रमोक्षदे सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्ववशङ्करि सर्वोन्मादिनि सर्वमहांकुशे खेचरि कञ्चु(च)कधारिणि सर्वबीजरूपे महायोनिमुद्रे शिखण्डे अनङ्गब्रह्माणि अनङ्गमाहेश्वरि अनङ्गकौमारि अनङ्गवैष्णवि अनङ्ग वाराहि अनङ्गमाहेन्द्रि अनङ्गचामुण्डि अनङ्गमहालक्ष्मि प्रकटयोगेशि चार्वाकदर्शनाङ्गि त्रैलोक्यमोहन चक्रस्वामिनि ।

कामाकर्षिणि बुद्ध्याकर्षिणि नामाकर्षिणि आत्माकर्षिणि अमृताकर्षिणि गुप्ततरयोगेशि सर्वाशापरिपूरक-चक्रस्वामिनि ।

अनङ्ग कुसुमे अनङ्गमेखले अनङ्गमदने अनङ्ग मदनातुरे अनङ्गरेखे अनङ्ग वेगिनि अनङ्गमालिनि अतिगुप्ततरयोगेशि वैदिकदर्शनाङ्गि सर्वसंक्षोभणचक्रस्वामिनि पूर्वाम्नायेशि सृष्टिप्रदे ।

सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि (सर्वा)ह्लादिनि सर्वसंमोहिनि सर्वजृम्भिनि सर्वस्तम्भिनि सर्ववशङ्करि सर्वरञ्जनि(सर्वोन्मा)दिनि सर्वार्थसाधिनि सर्वसंपत्तिरपूरणि सर्वमन्त्रमयि, सर्वद्वन्द्वक्षयकरि सत्संप्रदायक्रमायातयोगेशि सौरदर्शनाङ्गि सर्वसौभाग्यदायकचक्रस्वामिनि

सर्वसिद्धिप्रदे सर्वसंपत्प्रदे सर्वप्रियङ्करि सर्वमङ्गलकारिणि सर्वकामप्रदे सर्वदुःखविमोचिनि सर्वमृत्युप्रशमनि सर्वविघ्ननिवारिणि सुन्दरि सर्वार्थसाधकचक्रस्वामिनि

सर्वज्ञे सर्वशक्ते सर्वैश्वर्यप्रदायिनि सर्वज्ञानमयि सर्वव्याधि-नाशिनि सर्वाधारस्वरूपिणि सर्वपापहरे सर्वानन्दमयि सर्वरक्षास्वरूपिणि सर्वेप्सितफलप्रदे निगर्भयोगेशि वैष्णवदर्शनाङ्गि वीर्यरक्षाकरचक्रस्वामिनि दक्षिणाम्नायेशि स्थितिप्रदे

ब्लीं(ब्लं)वशिनि क्लह्रींह कामेश्वरि न्यूं(ब्लीं) मोदिनि य्लूं विमले ज्म्रीं अरुणे ह्स्यूं जयिनि झ्म्र्यूं सर्वेश्वरि क्ष्म्यूं कौलिनि रहस्ययोगेशि शाक्तदर्शनाङ्गि सर्वरोगहरचक्रस्वामिनि

द्रां क्लिन्ने मोहनकामबाणे द्रीं रक्ते शोषणकामबाणे क्लीं नित्ये दीपन कामबाणे ब्लुं सत्ये उन्मादनकामबाणे द्रां द्रीं क्लीं ब्लूंसः। जम्भिनि जम्भय जम्भय संमोहिनि मोहय अं आकर्षिणि आकर्षय कों स्तम्भिनि स्तम्भय ऐं कामेश्वरि रीं क्लीं वज्रेश्वरि सौः भगमालिनि अतिरहस्ययोगिनि सर्वसिद्धिमय चक्रस्वामिनि काम ...... प्रस्ततर त्रिपुरसुन्दरि महापरापररहस्य योगिनि शाम्भवदर्शनाङ्गि सर्वानन्दमयचक्रस्वामिनि पश्चिमाम्नायेशि

सिंहनिष्ठे आं आं सौः त्रिपुरे ऐं क्लीं सौः त्रिपुरे श्रीं ह्रीं क्लीं सौः। त्रिपुरसुन्दरि हैं ह्क्लीं ह्सौः त्रिपुरवासिनि ह्सैं ह्स्क्लीं ह्सौः त्रिपुरेशि श्रीं क्लीं ब्लें त्रिपुरमालिनि ह्रींश्रीं सौः त्रिपुरासिद्धे ह्स्रैं ह्स्रक्लीं ह्स्रौः त्रिपुराम्बिके हसकलरसैं हसकलरसीं हलकलरसां श्री महात्रिपुरभैरवि अं कामेश्वरि आं भगमालिनि इं नित्यक्लिन्ने ईं भेरुण्डे उं वह्निवासिनि ऊं

महाविद्येश्वरि ॠं शिवदूति ॠं त्वरिते लृं कुलसुन्दरि ॡं नित्ये एं नीलपताके ऐं विजये ओं सर्वमङ्गले औं ज्वाला मालिनि अं चित्रे अः लोपामुद्राप्रस्तारे कुले अकुले कुलाकुले कौले महाकौले सर्वोत्तर पञ्चार्थज्ञानप्रदे सर्वदर्शनाङ्गि सर्वदर्शनोत्तीर्ण स्वरूपिणि सर्वार्थशोधिके कालकालेशि अवर्णे नवाक्षरि नवात्ममिथुनं हसखपरयूं आनन्देश्वरि अघोरकपालिनि अम्बे देवि श्री देवी श्रीपादुकां पूजयामि हंसः सोहम् ।

## प्रस्तारसहस्राक्षरमाला

देव्युवाच—

परमेश........................सूक्तिसुधालय ।
कृतशे......नीलकण्ठ वृषारूढ गङ्गाधर ।
यन्त्रमन्त्राभिचारादीन् या नाशयति लीलया ।
याऽतिपुष्टिकरा सिद्धा ग्रहापस्मारनाशिनी ।
सर्वसंपत्प्रदा श्रेष्ठा सर्वसौभाग्यदायिनी ।
यया विज्ञातमात्रेण विभूतिः संप्रवर्तते ।
तामाख्याहि महाभाग प्रसादाद्विश्वदायक ।

श्री भैरव उवाच—

शृणु वीरेन्द्रनमिते महात्रिपुरसुन्दरि ।
अतिगुह्यतमं देवि योगिनीनां मुखे स्थिते ।
सर्वशङ्काविनिर्मुक्तं सर्वोपद्रवनाशनम् ।
सर्वोपद्रवहन्तारं सहस्राक्षररूपिणम् ।
शृणुष्वैकमना मन्त्रं देवि त्रिपुरसुन्दरि ॥

ऐं ह्रीं श्रीं क्लीं सौः सौः क्लीं ऐं क ह ए ई ल ह्रीं ह क ए ई ल ह्रीं स क ए ई ल ह्रीं नमस्त्रिपुरसुन्दरि सुभगे सुप्रसन्ने सुलभे सोमवदने सुरासुरवन्दितचरणे जपाकुसुमसंकाशे योगिनीगणतर्पिते मधुमदमुदितमानसे सन्ध्या स्वर्णदुकूलवसने सततमुदिते महानन्दे माणिक्यकिरणारुणे मन्त्रमयविग्रहे बिन्दुनादस्वरूपिणि संविन्मात्रस्वरूपे ऐं ह्रीं श्रीं हैं ह् क्लीं ह्सौः ह्सौः ह्क्लीं हैं सहकएलह्रीं सहकह एलह्रीं हसकएलह्रीं।

नमो देवि आगच्छागच्छ सन्निधिं कुरु कुरु सर्वतो मां रक्ष रक्ष वर्धय वर्धय नन्दय नन्दय मोदय मोदय प्रापय प्रापय सर्वकार्याणि मम साधय साधय शोषय शोषय हंसः सोहम्। हैं ह्क्लीं ह्सौः ह्सौः ह्क्लीं ह्सैं हसकईलह्रीं हसकहएईलह्रीं सहकएईलह्रीं

नमो भगवति नमो भगवति महारूपे सौभाग्यरूपे पापापहारिणि ... नमो वशाय वशाय विपदं दलय श्रियमानयानय क्लेदय मनांसि क्षोभय मोदय मोदय उल्लासय सौभाग्यं मे संपादय संपादय सौन्दर्यं मे जनय जनय हस्रैं हसक्लीं हस्रौः हस्रौः हसक्लीं ऐं हसैं क ए ई ल ह्रीं हसकहलह्रीं सकहलह्रीं ॥

नमः कल्याणकारिणि रत्नाभरणप्रभारञ्जितशरीरे रक्ताम्बुजनिषण्णे पाशाङ्कुशेक्षुचापपुष्पबाणधारिणि चतुर्भुजे चन्द्रचूडे चतुरङ्गे चतुर्वर्गफलप्रदे देवि दिव्यमाल्यालङ्कृते दिव्यदेहं मम दापय सकलसमीहितानि साधय साधय स्फारय स्फारय। हसकलैं हसकलीं हसकलौः हसलीं हसकलैं क एई लह्रीं हसकहलह्रीं।

नमो वरदे रक्ते सत्ये नित्ये जगत्क्षोभकरे मोक्षकारिणि कमनीयाङ्गे कलावति दक्षिणे दक्षिणमार्गस्थे सुखानि मे परिपूरय परिपूरय राजानं मे प्रयच्छ प्रयच्छ कीर्तिं विस्तारय विस्तारय परसैन्यं स्तम्भय स्तम्भय मर्दय मर्दय छेदय छेदय उत्सादय उत्सादय ह्सकलैं ह्सकलीं ह्सकलौः ह्सकलीं ह्सकलौः ह्सकलीं ह्सकलीं ह्सकलह्रीं सकलह्रीं ॥

नमः परमेश्वरि परमात्मस्वरूपे कारुण्यामृतवर्षिणि द्रां द्रीं क्लीं ब्लूं सः मनोज्ञे मङ्गलवासे माणिक्यमरीचिविचित्रिता-खण्डकुण्डले कुलकुण्डलिनि कोमलाङ्गे पाशेनाकर्षयाकर्षय अङ्कुशेन स्तम्भय स्तम्भय चापेन मोहय मोहय बाणेन भिन्धि भिन्धि ॥

ह्सकलरसैं ह्सकलरसीं ह्सकलरसौः ह्सकलरसीं ह्सकलरसैं स एईलह्रीं ह्कलह्रीं सकलह्रीं । नमस्त्रिपुरे वद वद वादय वादय विद्ये विद्येश्वरि वीरवन्दिते विद्याधरीवीज्यमानचामरे मदोदयाघूर्णितगात्रे त्रिणेत्रे त्रिपुरसुन्दरि । तनु ह्सकलरसरैं ह्सकलरसरीं ह्सकलरसरौः ह्सकलरसरौः ह्सकलरसरीं सकलरसरौः ह्सकलश्रीं ह्सकलह्रीं ॥

नमस्त्रिपुरवासिनि त्रिराश्रये त्वां प्रपद्येऽशरणः शरणागतवत्सले मदे मदनदेहे सर्वजनहृदयापहारिणि सर्वसत्त्वहृदयङ्गमे सर्वभूतवशङ्करि मम सर्वाणि भूतानि वशमानय कामान् पूरय कीर्तिं दीपय दीपय यदुतं खण्डय खण्डय क्लेशय क्लेशय नाशय नाशय शत्रून् त्रोटय त्रोटय बन्धं छेदय छेदय मोक्षं कुरु कुरु ह्सकलरसरह्रों ह्सकलरसरह्रौः ह्ससकलरसरह्रौं ह्सकलरसरह्रौः ह्सकलरसरह्रौः ह्सकलरसह्रीं ह्सकलरसह्रैं ह्सकलह्रूं ह्सकलह्रीं सकलह्रीं ॥

नमो भगवति ललिते लावण्यमये मदिराक्षि महारूपे सुमनोहरे स्त्रीपुरुषवशङ्करि सौभाग्यं मे देहि देहि दारानावह आवह निधिं देहि । हसकलरसरहसैं हसकलरस रहसौः हसहकलरसरहसौः हसकल रसरहसीं हसकलरसरहसैं हसकलह्रीं हसकलह्रीं सकलह्रीं ॥

नमः प्रसीद त्रिपुरमालिनि चिन्तितार्थविधायिनि चित्तज्ञे ब्रह्मविष्णुरुद्रशङ्करसदाशिवपूजिते सुपूजिते जय मम मनोरथान् पूरय पूरय समुद्रादुत्तारय उत्तारय अरिष्टं भञ्जय भञ्जय ........ दुष्कर्माणि कृन्तय कृन्तय । हसकल रस रहसरैं हसकलरसरह सरीं हसकलरसरह सरैं हसकलरसहसरैं क ए ई ल ह्रीं हसकलह ह्रीं सकलह्रीं ऐं ह्रीं श्रीं ह्स्ख्फ्रें ह्सौः ।

नमः त्रिपुरसिद्धे त्रिपुराम्ब योगेश्वरि अरुणामृतमहारूपे हसक्षमलवरयूं सहक्षमलवरयीं सकलनृपवशङ्करि सर्वसंपत्ति-कारिणि सर्वैश्वर्यप्रदे सर्वसुखदायिनि सर्वज्ञे सहकलरसहसैं हसकलरसरहसरसीं हसकलरसरह सरसौः हसकलरसरहसौं हसकलरसहरसरसीं हसकलरसहसरसैं हसकलह्रीं सकलह्रीं सकलह्रीं ॥

हसकलहसकहलहकलह्रीं परमानन्दमये बिन्दुचक्रस्थे परापरब्रह्मस्वरूपिणि परमामृतशक्ते सर्वचक्रेश्वरि सर्वमन्त्रेश्वरि सर्वयोगेश्वरि सर्वसिद्धेश्वरि सकलजगदुत्पत्तिमातृके सर्वविद्यामये महाभैरवि कबलितसकलतत्त्वात्मिके बिन्दुतत्त्वात्मिके श्रीमहात्रिपुरसुन्दरि स्वाहा । ऐं ओं औं औं ओं ऐं ह्रीं श्रीं ऐं।

ओं अतिगुह्यतमा देवि सहस्राक्षरमालिका ।
सकृदुच्चारमात्रेण त्रैलोक्यक्षोभणं भवेत् ॥

जन्मकोटिसहस्रैस्तु यत्पापं समुपार्जितम् ।
सा हन्त्युच्चारमात्रेण तूलराशिमिवानलः ॥

सहस्रादि चतुर्लक्षं (क्षान्ते) जपेत्संख्यां ततः शृणु ।
ब्रह्मचर्ययुतः कुर्यात् कामक्रोधादिवर्जितः ॥

वित्तशाठ्यं विना देव्याः कुर्याच्छ्रीचक्रपूजनम् ।
सहस्रेण तु जप्तेन योगिनीवल्लभो भवेत् ॥

द्वाभ्यां प्रवर्तते तेजः त्रिभिर्वैराग्यसंपदः ।
चतुर्भिः सुखसौभाग्यमायुरारोग्यमान्यताः ॥

ज्ञान प्राप्तिर्भवेत् षड्भिः - अवस्था सप्तभिर्भवेत् ।
अभिपश्यति ते किञ्चिद्देव्या रूपगुणात्मकम् ॥

नवभिः पश्यते रूपं योगनिष्पन्नखेचरम् ।
दशभिर्जायते साक्षात्पूर्णानन्दैकरूपता ॥

किमत्र बहुनोक्तेन सर्वसौभाग्यवान्भवेत् ।
अस्मन्मन्त्रप्रभावं तु लक्षकोटिशतैरपि ।
संवत्सरशतेनपि वर्णितुं नैव शक्यते ॥

## उपस्थानसहस्राक्षरी

मनुश्चन्द्रः कुबेरश्च मन्मथस्तदनन्तरम् ।
लोपामुद्रा मुनिर्नन्दी स्कन्द इन्द्रश्च ईश्वरः ॥
क्रोधभट्टारकश्चेति दश प्रस्तारनाम(य)काः ॥

ओं नमो भगवति श्री त्रिपुरे दुर्गतितारिणि ह्रीं ह्रीं ......
रकर नित्य नित्य वद वाग्वादिनीक स्वाहा । ह्रीं नमः । स्त्रीं

नमः । प्रें नमः । सुरासुरवन्दिते सकलजगत्क्षोभं (नाशय) स्रं सन्द्राविणि सन्द्राविणि मोहिनि मोहिनि स्तम्भिनि स्तम्भिनि आकर्षिणि आकर्षिणि परमसुभगे कैलास निवासिनि संसारपरिवर्तिनि संसारपरिवर्तिनि ह्रां ह्रांकारि, हूं हूं हूंकारि लां लां लाकिनि शं शं शमिनि कां कां कामिनि डां डां डाकिनि सां सां साकिनि हां हां हाकिनि प्रें शाङ्करि गल गल ईश ईश भ्रम वद वद सत्य सत्य मालिनी महामायान्त (त्व)विग्रहे अं रूपे स्वरूपे अमले विमले अजिते अपराजिते रद रद मर्दय मर्दय हर हर संहर नित्य नित्य प्रें कुरु कुरुकुल्ले किटि किटि किटि किटि ओं जूं सः सौः क्लीं णें श्रीं नादप्रेम्। अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठ डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं क्षां क्षीं क्षूं क्षैं क्षौं क्षः ।

गौरि त्रिरुद्रदधिदेववज्रिणि वज्रनायकि कपालमालाधरे प्रेतासननिवासिनि ऐं सर्वतत्त्वात्मिके अवतर अवतर गर्जय गर्जय तर्जय शोषय सर्वमन्त्रान् ग्रासय ग्रासय सर्वदुष्टान् मर्दय मर्दय सर्वयन्त्रान् भञ्ज भञ्ज सर्वदुःखात् तारय तारय तारे तारिणि परविद्याश्छिद छिद, परकायं प्रविश प्रविश, वज्रगौरि खं खेचरि भूचरि हंसवाहे हंसवाहे हंसवाहे तिष्ठ तिष्ठ बन्ध बन्ध धारय धारय ऊर्णामणिं मोचय मोचय, विमोचय विमोचय । पशुः पशुः आहरावेमे आ मन्दरादिसङ्काशे चल चल महाविद्येश्वरि वाग्वादिनि वाचं योनिं च सरस्वति महाश्वेते किणि किणि खिणि

अर्ककोटिसहस्रमालिनि घुरु घुरु गुघ गुघ जनमनःक्षोभकारिणि रणरणवज्रकर्तरि विद्याविनोदिनि त्वर त्वर वह वह कन्दय कन्दय संक्रमय संक्रमय मदिरामदघूर्णिते गां गीं गूं गैं गौं गं गः कन्दर्पमदनविह्वले स्फुरद्योनिचक्रे चक्रशङ्खकपाल डमरुकधारिणि वसुधारे धारिणि धरे वशय वशय कामदायिनि कामं मे जय पच पच रम रम छन्दे विश्वसबिन्दुप्रिये यूं स्रूं हूं क्ष्रूं द्रूं र र र र र र र शारदशशाङ्काकाशे शारदे विद्यादानविशारदे क्लीं गणनायकि महानन्दविग्रहे मधुपयःकपाले ज्वालामालिनि आरंह्लादे नित्यक्लिन्ने मदद्रवे सं सरस्वत्यै नमः। ह्रौं सरस्वत्यै नमः। मधुरे मधुमतिप्रिये आमोदरसभगमालामा माला मरु मरु मुरु मुरु चुरु चरु धुनु धुनु स्फुट स्फुट स्फोटय स्फोटय त्रुट त्रुट त्रोटय त्रोटय घण्टारवे नमः। पट भेदिनि प्रें कुब्जिकायै ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः। किणिकिणिविच्चे ऐं ह्रां श्रीं हसखफ्रें हसौः क्रों क्षुद्रविद्राविणि दद्रुं प्रभे हूं हसैं चण्डे चण्डेश्वरि ब्रह्माण्डमालाधरे बन्धूकशोणाधरे त्रैलोक्यं तेन प्रसिद्ध प्रसिद्ध ऐं क्लीं आं सीं त्रं सः क्लीं ऐं ओं ओं ओं

